माघे मासि तथा शुक्ला या चतुर्थी महीपते ।
या शान्ता शान्तिदा नित्यं शान्तिं कुर्य्यात् सदैव हि ॥
स्नानदानादिकं कर्म्म तस्यां सर्व्वं कृतं विभो ।
भवेत् सहस्रगुणितं प्रसादाद्दन्तिनो नृप ॥
कृतोपवासो यस्तस्यां पूजयेद्विघ्ननाशकम् ।
तस्य होमादिकं कर्म्म भवेत् साहस्रिकं नृप ॥
विशेषतः स्त्रियो राजन् पूजयन्त्यो गुरुं नृप ।
गुडलवणघृतैर्वीर सुभगाः स्युः कुरूद्वह ॥
यदा शुक्लचतुर्थ्यान्तु वारो भौमस्य वै भवेत् ।
तदा सा सुखदा प्रोक्ता सुखानामेति कीर्त्तिता ॥
स्नानदानादिकं कर्म्म सर्व्वमक्षयमुच्यते ।
गणेशे कारयेत् पूजां लड्डुकादि प्रदापयेत् ॥
चतुर्थ्यां विघ्ननाशाय सर्व्वकामप्रसिद्धये ॥
दन्तिनो गणेशस्य, गुरु मनुष्यस्तौ ।

विनायकचतुर्थीव्रतमाह भविष्ये ।

चतुर्थ्यान्तु नरो राजन् निराहारो व्रतान्वितः ।
दत्त्वा तिलान्नं विप्राय स्वयं भुङ्क्ते तिलौदनम् ॥
वर्षद्वये समाप्तिं व्रतस्यास्य यदा भवेत् ।
विनायकस्तस्य तुष्टो ददाति वरमीप्सितम् ॥

व्रतमिदं विशेषानभिधानादुभयचतुर्थ्यां प्रतिमासं वर्षद्वयं कार्य्यं विनायकनामा गणेशश्च पूज्यः, तिलौदनं ब्राह्मणाय दत्त्वा तेनैव पारणा कार्य्या ।

ज्योतिषे,—

चतुर्थी भौमवारेण रविवारेण सप्तमी।

षष्ठी वै सोमवारेण विषुवत्सदृशं फलम्॥

भविष्ये,—

शुक्लाङ्गारकसंयुक्ता चतुर्थी जायते यदा।

अङ्गुष्ठा आतुरच्छिद्रो न च प्रेतोऽभिजायते॥

अङ्गारकचतुर्थीव्रतमाह मत्स्यपुराणे।

चतुर्थ्याङ्गारकदिनं यदा भवति मानव॥

मृदा स्नानं तदा कुर्यात् पद्मरागविभूषितः।

अग्निर्मूर्द्धा दिवो मन्त्रं जपन्नास्ते उदङ्मुखः॥

शूद्रस्तूष्णीं स्मरन् भौममास्ते भोगविवर्ज्जितः।

अथास्तमित आदित्ये गोमयेनोपलेपयेत्॥

प्राङ्गणं पुष्पमालाभिरक्षताद्भिः समन्ततः।

अभ्यर्च्याभिलिखेत् पद्मं कुङ्कुमेनाष्टपत्रकम्॥

कुङ्कुमस्याप्यभावे तु रक्तचन्दनमिष्यते॥

चत्वारः करकाः कार्य्या भक्ष्यभोज्यसमन्विताः।

तण्डुलै रक्तमाल्यैश्च पद्मरागैश्च संयुताः॥

गन्धमाल्यादिकं सर्व्वं मङ्गलाय निवेदयेत्।

सुवर्णशृङ्गीं कपिलामथार्च्यां

रौप्यैः खुरैः कांस्यदुहां सवत्साम्।

धुरन्धरं रक्तमतीवचोक्षं

धान्यानि सप्ताम्बरसंयुतानि॥

अनुष्ठमानं पुरुषं तथैव
सौवर्णमत्यायतबाहुदण्डम् ।
चतुर्भुजं हेममयेऽथ ताम्रे
स्थितं गुडस्योपरि संनियुक्तम् ॥
सामस्वरज्ञाय जितेन्द्रियाय
कुटुम्बिने दम्भविवर्ज्जिताय ।
संमर्पयेद्विप्रवराय भक्त्या
कृताञ्जलिः पूर्व्वमुदीर्य्य मन्त्रम् ॥
भूमिपुत्र महातेजः स्वेदोद्भव पिनाकिनः ।
रूपार्थी त्वां प्रपन्नोऽस्मि गृहाणार्घ्यं नमोऽस्तु ते ॥
मन्त्रेणानेन दत्वार्घ्यं रक्तचन्दनवारिणा ।
ततो विप्रवरं पूज्य रक्तमाल्याम्बरादिभिः ॥
दद्यात्तेनैव मन्त्रेण चौमं गोमिथुनान्वितम् ।
शय्याञ्च शक्तितो दद्यात् सर्व्वोपस्करसंयुताम् ॥
प्रदक्षिणं ततः कृत्वा विसर्ज्ज्य द्विजपुङ्गवम् ।
नक्तमक्षारलवणमश्नीयाद् घृतसंयुतम् ॥
भक्त्या यस्तु पुमान् कुर्य्यादेवमङ्गारकाष्टकम् ।
चतुरो वा महाराज यत्पुण्यं तद्वदामि ते ॥
रूपसौभाग्यसम्पन्नः पुनर्जन्मनि जन्मनि ।
विष्णौ वाथ शिवे भक्तः सप्तद्वीपाधिपो भवेत् ॥
सप्तकल्पसहस्राणि रुद्रलोके महीयते ॥
अङ्गारकदिनं मङ्गलवारः करकाः पापविशेषाः । कुङ्कुमनि-

र्जिताष्टदलपद्ममध्ये वक्ष्यमाणसुवर्णप्रतिमां हेमपात्रे ताम्रपात्रे वा संस्थाप्य गुड़ोपरि सूर्य्येऽस्तमुपगते रक्तमाल्यविलेपनविविधभक्ष्यभोज्यसमन्विताभिश्चतसृभिः करश्चिकाभिः रक्तगन्धमाल्यादिभिश्च मङ्गलं पूजयेत्। ततः कपिलां रक्तवर्णं धुरन्धरं वृषञ्च सप्तधान्यानि च वस्त्रसंयुतानि मङ्गलप्रीतये पूर्व्वमन्त्रमग्निर्मूर्द्धेति मन्त्रमुदीर्य्य सामगब्राह्मणाय दत्त्वा रक्तचन्दनमिश्रजलेन भूमिपुत्रेत्यादिमन्त्रेण मङ्गलार्घं दत्त्वा मङ्गलं विसृज्य काञ्चनप्रतिमादिकं गव्यादि सामगब्राह्मणाय तेनैवाग्निर्मूर्द्धेति मन्त्रेण दत्त्वा ब्राह्मणं विसृज्य रात्रौ हविष्यान्नं भुञ्जीत एवं वाराष्टकं वारचतुष्टयं वा व्रतं कुर्व्वीत।

वारचतुष्टये सप्तद्वीपाधिपो भवेदित्युक्तं फलं, वाराष्टके तु तदनन्तमुक्तं फलमिति॥

## अथ पञ्चमीकृत्यम्।

भविष्ये,—

नागानिहाय पञ्चम्यां न विषैरभिभूयते।
स्त्रियश्च लभते पुत्रं श्रियञ्च परमां लभेत्॥

मत्स्यपुराणे,—

कृष्णोमभ्यर्च्च्य पञ्चम्यामुपवासी भवेन्नरः।
समाप्ते हेमकलसं दद्याद्गुडसमन्वितम्॥
स वैष्णवं पदं याति कृष्णोऽन्मनि जन्मनि।
पूतकृष्णोव्रतं नाम दुःखशोकविनाशनम्॥

समाप्ते। वत्सरान्ते।

## अथ षष्ठीकृत्यम् ।

भविष्ये,—

सम्पूज्य कार्त्तिकेयन्तु दिवः षष्ठ्यां प्रजायते ।
मेधावी रूपसम्पन्नो दीर्घायुः कीर्त्तिवर्द्धनः ॥

## अथ सप्तमीकृत्यम् ।

आदिपुराणे,—

शुक्लपक्षस्य सप्तम्यां यदादित्यदिनं भवेत् ।
सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥
स्नानं दानं जपो होम उपवासस्तथैव च ।
सर्व्वं विजयसप्तम्यां महापातकनाशनम् ॥

भविष्ये,—

शुक्लपक्षस्य सप्तम्यां यदा सङ्क्रमते रविः ।
तदा महाजया सा स्यात् सप्तमी भास्करप्रिया ॥
स्नानं[1] दानं जपो होमः पितृदेवाभिपूजनम् ।
सर्व्वं कोटिगुणं पुण्यं भास्करस्य मतो यथा ॥
शुक्लपक्षे तु सप्तम्यां यदर्कन्तु करो भवेत् ।
तदा सा स्यान्महापुण्या सप्तमी पापनाशनी[2] ॥
तस्यां सम्पूज्य देवेशं चित्रभानुं दिवाकरम् ।
सप्तजन्मकृतात् पापात् मुच्यते नात्र संशयः ॥

---

१ ख, ग, पुस्तकद्वये स्नानदानं ।
२ ख, चित्रितपुस्तके पापनाशिनी ।

यस्तोपवासं कुरुते तस्यां नियतमानसः ।
सर्व्वपापविशुद्धात्मा सूर्य्यलोके महीयते ॥
करो हस्ता चित्रभानुनामानं दिवाकरमित्यर्थः ।

तथा,—

हस्तर्चे शुक्लसप्तम्यां संक्रमः स्याद्यदा रवेः ।
महामहेति सा प्रोक्ता विजया नाम सप्तमी ॥
महापातककोटिघ्नी सूर्य्यग्रहशतैः समा ।
स्नानं दानं जपः श्राद्धं देवताविप्रपूजनम् ॥
भवेदनन्तगुणितं तस्यां नात्र संशयः ।
तस्यामभ्यर्च्य देवेशमादित्यं जगतां पतिम् ॥
सर्व्वान् कामानवाप्नोति सूर्य्यसायुज्यमाप्नुयात् ।
तत्रोपवासं कृत्वा तु सर्व्वपापैः प्रमुच्यते ॥
अर्घ्यं दत्वा यथावच्च सर्व्वान् कामानवाप्नुयात् ॥

तथा,—

शुक्लपक्षस्य सप्तम्यामुपवासपरो नरः ।
सर्व्वशुक्लोपचारेण पूजयेदस्तु भास्करम् ॥
कृष्णपक्षस्य सप्तम्यामुपवासपरो नरः ।
सर्व्वरक्तोपचारेण पूजयेदस्तु भास्करम् ॥
सर्व्वपापविनिर्मुक्तः सूर्य्यलोके महीयते ।

तथा,—

[1]षष्ठीमुपोष्य यः सम्यक् सप्तम्यामर्चयेद्रविम् ।

---

१ षष्ठीमित्यत्र ख पुस्तके षष्ठ्याम् ।

तमनुज्ञातामर्कभक्तः सर्व्वं प्राप्नोति चेप्सितम् ॥
षष्ठ्यां[1] यो नियतो भूत्वा सप्तम्यां विधिवद्रविम्।
सम्पूज्योपवसेत् सोऽपि मुमुक्षुरीप्सितं फलम् ॥

षष्ठीयुक्तसप्तम्यामुपोष्य सप्तम्यां रविमभ्यर्च्य वाञ्छितं प्राप्नोति, मुमुक्षुस्तत् षष्ठ्यां नियताहारो भूत्वा सप्तम्यामभ्यर्च्योपवासकृत्वा ईप्सितं मोक्षमाप्नोतीत्यर्थः।

मात्स्ये,—

सप्तम्यां नक्तभुक् दद्यात् समाप्ते गां पयस्विनीम्।
सूर्य्यलोकमवाप्नोति भानुव्रतमिदं स्मृतम् ॥

अत्र मुहूर्त्तोनं दिनं नक्तं सौरव्रतत्वात्।

मात्स्ये,—

आत्मद्विगुणच्छायायां यदा सन्तिष्ठते रविः।
सौरं नक्तं विजानीयात्तदन्यत्र निशि भोजनम् ॥

आत्मनो द्विगुणा छाया मुहूर्त्तोने दिने भवति।

अतएव भविष्ये,—

नक्षत्रदर्शनान्नक्तं केचिदिच्छन्ति सत्तमाः।
मुहूर्त्तोनदिनं केचित् प्रवदन्ति मनीषिणः ॥

स्मृतिसमुच्चये,—

अर्काग्रं शुचि गोमयं सुमरिचं तोयं फलं धानाश्रुति
मूलं नक्तमुपोषणञ्च विधिवत् ह्येकभक्तं तथा।

---

[1] ग, पुस्तके सप्तमीम्।

पौरं वाप्यथ नं शतायुतमिति प्रोक्तान्यमूनि क्रमात्
कृत्वा वत्सरसप्तमीरभिमतं वारे रवेराप्नुयात्॥

शताधनमपि कर्त्तव्यमिति शेषः।

एतच्च माघसप्तम्यामारभ्य शुक्लसप्तम्यां सूर्य्यमभ्यर्च्य क्रमादर्कादिकं भुक्त्वा वत्सरपर्य्यन्तं कार्य्यम्। रविव्रते तु माघप्रथममारभ्य प्रतिरविवारमर्कमभ्यर्च्य क्रमादुक्तद्रव्याणि भुक्त्वा वर्षपर्य्यन्तं कार्य्यम्। तथापि मुहूर्त्तीनदिनं नक्तं एकभक्तन्तु मध्याह्ने कार्य्यमिति प्रागुक्तमेव। अयमेव पाठः स्मृतिसमुच्चयकालविवेकादिषु लिखितः। अन्ये तु पाठान्तरं पठन्ति तदप्रमाणम्।

तथा,—

गोधूममाषमधुमैथुनमद्यमांस
पाषाणपाचयवषष्टिक[1]कांस्यपात्रम्।
अभ्यञ्जन--तिलांश्च विवर्ज्जयेद्यः
सोऽभीप्सितं लभति सप्तसु सप्तमीषु॥

एतदपि माघसप्तम्यामारभ्य सप्तसु[2] शुक्लसप्तमीषु सूर्य्यमभ्यर्च्य नियताहारो गोधूमादीनि सर्व्वाणि विवर्ज्जयेत्॥

अथाष्टमीकृत्यम्।

मात्स्ये,—

नवम्यां अष्टमीं यः स्यात् वत्सरान्ते च धेनुदः।
पौरन्दरं पदं याति सुगतिव्रतमुच्यते॥

---

१ ख, ग, पुस्तकद्वये यवषष्टिक०।

२ ग, चिह्नितपुस्तके सप्तशुक्लसप्तमीषु।

भविष्ये,—

कृष्णाष्टमीं तु भक्तेन तथा कृष्णचतुर्द्दशीम् ।
इह भोगानवाप्नोति परत्र शिवमृच्छति ॥
चतुर्द्दश्यां तथाष्टम्यां पक्षयोः शुक्लकृष्णयोः ।
योऽब्दमेकं न भुञ्जीत शिवार्च्चनपरः शुचिः ॥
यत्पुण्यमक्षयं प्रोक्तं सततं सत्रयाजिनाम् ।
तत्पुण्यं सकलं तस्य शिवलोकञ्च गच्छति ॥

स्कन्दपुराणे,—

चतुर्द्दशीमष्टमीञ्च पक्षयोरुभयोरपि ।
अहोरात्रं क्षिपेद्यस्तु संवत्सरमशेषतः ॥
स पुण्यकर्म्मणा युक्तः सर्व्वपापविवर्ज्जितः ।
न याति नरकं देवि यमञ्च न च पश्यति ॥

भारते,—

अष्टमीमथ कौन्तेय शुक्लपक्षे चतुर्द्दशीम् ।
उपोष्य व्याधिरहितो रूपवानभिजायते ॥

भविष्ये,—

अष्टम्यां पूजितो देवो गोभृतावरणो हरः ।
ज्ञानं ददाति विपुलान् कामान् च यच्छतेऽखिलान् ॥

राजमार्त्तण्डे,—

शशिपुष्यसमायुक्ता शुक्लपक्षाष्टमी च या ।
तस्यां नियमकर्त्तारो न स्युः खण्डितसम्पदः ॥
पतङ्गे मकरे याते देवे जायति माधवे ।

बुधाष्टमीं प्रकुर्व्वीत वर्ज्जयित्वा तु चैत्रकम् ॥
प्रसुप्ते तु जगन्नाथे सन्ध्याकाले मधौ तथा ।
बुधाष्टमीं न कुर्व्वीत कृतं हन्ति पुरातनम् ॥

अग्निपुत्रो बुधः । शुक्लपक्षेऽतिप्राशस्त्यपरम् अष्टमीं बुधवारेण पक्षयोरुभयोर्य्यदेति गरुड़पुराणवचनात् ।

पतङ्गे सूर्य्ये मकरे याते उत्तरायणस्थे माधवे जाग्रतीति भाषाढ़ेऽपि हरिशयनसम्भवादप्रसुप्तत्वं सन्ध्याकाल इति निषिद्धग्रायाश्चाद्युपलक्षणम् ।

यत्तु महादेव उवाच,—

पौषे मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत् ।
तदा सा तु महापुण्या महाभद्रेति कीर्त्तिता ॥
तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम् ।
सर्व्वमेतत् कृतं देवि शतसाहस्रिकं भवेत् ॥

इति भविष्यपुराणवचनं तत्र व्रतविषयम् किन्तु स्नानदानादिविषयं [1]व्रतस्योत्तरायणविधानात् ॥

अथ नवमीकृत्यम् ।

भविष्ये,—

नवम्यां नववर्षाणि राजन् पिष्टाशनो भवेत् ।
तस्य तुष्टा भवेद्देवी सर्व्वकामप्रदा शुभा ॥

व्रतमिदं पक्षद्वये कार्य्यं विशेषानभिधानात् पिष्टकश्च नैवेद्यं देयं स्वयञ्च पिष्टकं भोज्यं व्रतारम्भश्च महानवम्याम् ॥

---

[1] ख, पुस्तके एतस्य ।

यथा वाराहे,—

नवम्यां तु सदा पूज्या दुर्गा देवी समाधिना ।
वरदा सर्व्वलोकस्य सर्व्वकामप्रदा शुभा ॥
नवम्यां यस्तु पिष्टाशी भविष्यति च मानवः ।
नारी वा तस्य सम्पन्नाः सर्व्वे कामा न संशयः ॥
महानवम्यां प्रथमं कृतस्नानविधिर्नरः ।
गृह्णीयात् परमं चैतत् सर्व्वकामप्रदं व्रतम् ॥

भविष्ये,—

योऽब्दमेकं न भुञ्जीत चण्डिकायतने नरः ।
स याति परमं स्थानं यत्र सा चण्डिका स्थिता ॥
चण्डिकायतने नवम्याम् ।

तथा,—

दुर्गां सम्पूज्य दुर्गायां नवम्यां तरतीच्छया ।
संग्रामे व्यवहारे च[1] सदा विजयमाप्नुयात् ॥

मत्स्यपुराणे,—

नवम्यामेकभक्तस्तु कृत्वा कन्यास्तु शक्तितः ।
भोजयित्वा समां दद्यात् हेमकञ्चुकवाससी ॥
हैमं सिंहञ्च विप्राय दत्वा शिवपुरं व्रजेत् ।
जन्मार्व्वुदं सुरूपः स्यात् शत्रुभिश्चापराजितः ॥
एतद्वीरव्रतं नाम नारीणाञ्च सुखप्रदम् ।

---

१ ख,, पुस्तके विजये चैव ।

सर्वा वर्षं तदन्ते हेमकलुकं वासश्च कन्याभ्यो देयं हेमसिंहासनं विप्राय।

अथ दशमीकृत्यम्।

भविष्ये,—

दशम्यां धर्मराजस्तु सर्व्वव्याधिहरोऽर्च्चितः।
नरकादुपलब्धेव[1] समुद्धरति मानवम् ॥

अथैकादशीकृत्यम्।

भविष्ये,—

एकादश्यां प्रयत्नेन विश्वेदेवाः[2] प्रपूजिताः।
प्रजाः पशून् धनं धान्यं प्रयच्छन्ति मतिन्तथा ॥

वाराहे,—

मार्गशीर्षे शुक्लपक्षादारभ्याब्दं विचक्षणः।
एकादश्यान्तु भक्तेन नरः कुर्य्याद्यथाविधि ॥
तस्यामनग्निपक्काशी यो भवेन्नियतः शुचिः।
तस्यासौ धनदो देवस्तुष्टो वित्तं प्रयच्छति ॥
नक्तमनग्निपक्काशनं वर्षं यावत् कार्य्यं धनदश्च पूज्यः।
शीर्णोविमुक्तनखेन्दुप्रभाभिरन्तर्निराकृतध्वान्ताः।
एकादशीव्यवस्था विदुषां तोषाय सन्ततुमः ॥

मत्स्यपुराणे पितामह उवाच,—

मान्धाता चक्रवर्त्त्यासीदुपोष्यैकादशीं नृपः।

---

१ ख,, उपपुष्यैव। २ ख,, पुस्तके वैश्वदेवाः।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥
दशम्येकादशी मिश्रा गान्धार्य्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्ज्जयेत् ॥
द्वादश्येकादशी यत्र तत्र सन्निहितो हरिः ।
दशम्येकादशी यत्र तत्र सन्निहितोऽसुरः ॥
अङ्गवाक्यविरोधेन सन्देहो जायते यदा ।
द्वादशी तु तदा ग्राह्या त्रयोदश्यान्तु पारणम् ॥
एकादशीमुपवसेद्द्वादशीमथवा पुनः ।
विमिश्रां वाथ कुर्व्वीत न दशम्या युतां क्वचित् ॥
एकादशीकलापि स्यादुपोष्या द्वादशी तथा ।
एकादशी द्वादशी च शेषे चापि त्रयोदशी ॥
त्रिमिश्रा सा तिथिः प्रोक्ता सर्व्वपापहरा शुभा ॥
रात्रौ जागरणं कुर्व्वन् पुराणश्रवणं नृप ।
गदाधरं पूजयंश्च उपोष्यैकादशीद्वयम् ।
रुक्माङ्गदो ययौ मोक्षमन्ये चैकादशीव्रताः ॥
इति गारुडे महापुराणे एकादशीमाहात्म्यम् ।

एषामर्थः फलकथने प्रत्यनुश्रुततामापादयन्नाह मान्धातेति ।

तथाच वराहपुराणे,—

एतत्कृत्वा व्रतं हन्ति घोरपापानि मानवः ।
पापक्षयाद्विष्णुभक्तो मोदते विष्णुना सह ॥
व्रतमिदं नित्यं फलश्रुत्यानुषङ्गिकं सन्ध्यादिवत् ।

भविष्ये,—

अन्नमाश्रित्य तिष्ठन्ति सर्व्वे पापा[1] हरेर्दिने।
स केवलमघं भुङ्क्ते यो भुङ्क्ते हरिवासरे॥

एकादश्यां न भुञ्जीतेति नायं रागप्राप्तभोजनमात्रनिषेधविधिः अपरञ्च व्रतविधिः काम्यः किन्तु उपवासरूपव्रतं कुर्य्यादिति नित्यव्रतविधिरेक एव विधिद्वयकल्पनागौरवात् फलन्तु आनुषङ्गिकम्। वक्ष्यति च। एकादश्यामुपवसेदित्यादि उपवासपदन्तु अहोरात्राभक्षणे शक्तं अन्यथा निषेधः कालमात्रक इति वचनादेकादशीरूपमतिक्रम्य भोजनं प्रसज्येत पर्य्यन्तु मांसादिनिषेधवत्। अतएव एतत् कृत्वा व्रतं कृत्नोति प्रागुक्तम्।

तथा च भविष्योत्तरे।

युधिष्ठिर उवाच,—

एकादशीव्रतं देव नित्यं वा काम्यमेव वा।
कथं वा क्रियते तत्तु नियमो वात्र कीदृशः॥
कृत्वा वा किं फलं जन्तुः प्राप्नोति पुरुषोत्तम।
अकृत्वापि किमाप्नोति पापं वा[2] मधुसूदन॥
एतत्सर्व्वं समासेन वक्तुमर्हसि मे विभो॥

श्रीकृष्ण उवाच,—

अथातो कथयिष्यामि शृणु पार्थ कुलोद्वह।
नित्यमेतद्व्रतं नाम[3] कर्त्तव्यं सार्व्ववर्णिकम्॥

---

१ ग पुस्तके सर्व्वपापाः। २ क,, मापं वै।
३ ग पुस्तके "नाम,, इति पदं नास्ति।

सर्व्वाश्रमाणां सामान्यं सर्व्वधर्म्मेष्वनुत्तमम्।
एकादशीव्रतादन्यन्नास्ति पुण्यतमं भुवि॥
अपि पापसहस्राणि कुर्व्वन्नपि सदा नरः।
एकादशीं तिथिं सम्यगुपोष्य स सुखी भवेत्॥
रटन्तीह पुराणानि श्रुतयः स्मृतिभिः सह।
न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे॥
वाञ्छद्भिः सर्व्वदा सद्भिः पुरुषार्थचतुष्टयम्।
न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे॥
बाल्यात्प्रभृति यत्पापं दग्धुमुद्यतचेतसा।
न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे॥
एकादश्यां न भोक्तव्यं पक्षयोरुभयोरपि।
भुञ्जन् सुरापानसमं पापमाप्नोति मानवः॥
ब्रह्मघ्नस्य सुरापस्य स्तेयिनो गुरुतल्पिनः।
निष्कृतिर्धर्म्मशास्त्रोक्ता नैकादश्यन्नभोजिनः॥

एवञ्च व्रताङ्गतया द्वादशीसपारणानियमविष्णुपूजादिकमवश्यं कर्त्तव्यम्। एतत् सर्व्वं गदाधरं पूजयंश्चेति वक्ष्यमाणवचनव्याख्यानावसरे[1] विवेचयिष्यते।

पक्षयोरुभयोरपीति गृहस्थव्यतिरिक्तविषयम्। कृष्णपक्षे गृहस्थस्य निषेधश्रवणात्।

भविष्ये,—

एकादश्यां न भोक्तव्यं पक्षयोरुभयोरपि।

---

१ ग,, पुस्तके व्याख्यानावसाने।

वनस्थयतिधर्म्मोऽयं शुक्लामेव सदा गृही ॥

वनस्थयतीत्युपलक्षणं ब्रह्मचारिणोऽप्ययं धर्म्मः स्मृतिमात्रस्य विशेष-विधानात् । शुक्लामेवेति न कृष्णामित्यर्थः सदेति नित्यार्थम् ।

ब्रह्मपुराणे,—

स्नुषयेऽर्कसंक्रान्त्यां एकादश्यां सितेतरे ।

उपवासं न कुर्व्वीत पुत्रपौत्रधनान्वितः ॥

कूर्म्मपुराणे,—

[१][संक्रान्त्यां कृष्णपक्षे च एकादश्यां ग्रहे तथा ।

उपवासं न कुर्व्वीत पुत्रपौत्रधनक्षयात् ॥

वायुपुराणे,—

संक्रान्त्यामुपवासेन पारणेन युधिष्ठिर ।

एकादश्यान्तु कृष्णायां ज्येष्ठपुत्रो विनश्यति ॥

भविष्ये,]—

संक्रान्त्यामुपवासञ्च कृष्णैकादशिवासरे ।

चन्द्रसूर्य्यग्रहे चैव न कुर्य्यात् पुत्रवान् गृही ॥

[२]यानि च उभयपक्षविधायकानि वचनानि श्रूयन्ते ।

सपुत्रश्च सभार्य्यश्च स्वजनैर्भक्तिसंयुतः ।

एकादशीमुपवसेत् पक्षयोरुभयोरपि ॥

नित्यं भक्तिसमायुक्तैर्नरैर्भक्तिपरायणैः ।

१ अ,, पुस्तके संक्रान्त्यां इत्यारभ्य भविष्ये इत्यन्तः [ ] चिह्नितांशो नास्ति ।

२ अ,, पुस्तके यदि च ।

पक्षे पक्षे प्रकर्त्तव्यमेकादश्यामुपोषणम् ॥

इत्यादीनि सपुत्रकमाग्यैवाम्मप्रवृत्तिविषयाणि। मनु विशेषयति।

यो मोहा —— दैकादश्यां सितासिते।

गृहस्थो ब्रह्मचारी वा चाहिताग्निर्यतिस्तथा ॥

स ब्रह्महा सुरापश्च स्तेयी गुरुतल्पगः।

इति वचनं तन्मूलं समूलत्वे नरैर्विष्णुपरायणैरित्यादिवचन-स्वरसात् परमवैष्णवैर्मुमुक्षुभिरेव गृहस्थैरुभयं कार्य्यम्।

यथा भविष्ये,—

शुक्ला गृहस्थैः कर्त्तव्या भोगसन्तानवर्द्धिनी।

मुमुक्षुभिस्तथा कृष्णा तेन तेनोपदर्शिता ॥

केचित्तु,—

शयनीबोधनीमध्ये या कृष्णैकादशी भवेत्।

सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥

इति वचनान्निर्विवादं व्यवस्थापयन्ति।

अपरेऽवान्ये शुक्लामेव सदा गृहीत्यनेन गृहस्थमात्रनिषेधस्यायं प्रतिप्रसवः, गृहस्थेनेत्यभिधानात्। तेन पुत्रीतरेणैव गृहस्थेन शयनीबोधनीमध्ये यावत्य एव कृष्णैकादश्यः कार्य्या न तु पुत्रिणेति पूर्ब्बवचनेषु पुत्रिणां निषेधादिति वदन्ति।

वस्तुतस्तु एतस्य वचनस्य सन्दिग्धमूलत्वात् व्यवहारो नैतादृश इति। उभयदिने एकादशीप्राप्तौ दशमीविद्धाया निषेधमाह दशम्येकादशी मिश्रेति।

ननु दशमीविद्धायामपि विधिः श्रूयते।

यथा विष्णुधर्मोत्तरे,—

दिनक्षये तु द्वादश्यां एकादश्यापि सदा तथा।
अपि यत्र भवेत्कर्म न तत्र व्रतमाचरेत्॥

विष्णुरहस्ये,—

पारणाहे न लभ्येत द्वादशी कलयापि च।
तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिः॥

पारणाहे द्वादशीदिने यदि द्वादशी एकादशीकलयापि युक्ता न लभ्येत तदा दशमीविद्धैवोपोष्या इत्यर्थः।

भविष्ये,—

एकादशी दशायुक्ता परतोऽपि न वर्द्धते[1]।
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः॥

इत्याकाङ्क्षायामाह दशम्येकादशी यथेति हरिभक्तिविधानात् विद्धायाः कर्त्तव्यत्वमसुरस्वविधानाच्च कर्त्तव्यतानिषेध इति, वक्ष्यमाणानां वाक्यविरोधेन सन्देहो यदा स्यात्तदा शुद्धैव द्वादशी उपोष्या न तु विद्धेत्यर्थः।

तथा ब्रह्मवैवर्त्ते व्यासः।

दशम्येकादशी युक्ता यत्र शास्त्रे प्रतिष्ठिता।
न तच्छास्त्रमहं मन्ये यदि ब्रह्मा स्वयं वदेत्॥

नारदीये,—

यैः कृता दशमीविद्धा अज्ञवाक्याच्च मानवैः।

---

१ ख,, पुस्तके परतो न च वर्द्धते।

ते यान्ति नरके घोरे युगान्येकोनविंशतिम्‌ ॥

विष्णुधर्म्मोत्तरादिवचनानि तु यथाविषयं पश्चात्[1] व्याख्यातव्यानि।

नन्वेतद्वचनं यत्र किञ्चिदेकादशी द्वादशी च सम्पूर्णा शेषे त्रयोदशी तत्र पूर्व्वदिने विद्धां वर्ज्जयित्वा द्वादश्युपवासविषयं भवतु। विष्णुधर्म्मोत्तरादिवचनानि एकादशीक्षये विद्धापराण्येव सुरित्याह एकादशीमुपवसेदित्यादि द्वादशीं केवलद्वादशीमित्यर्थः। अथैकादशीकार्य्ये द्वादशीं विधत्ते त्रिमिश्रां[2] एकादशी द्वादशी च शेषे चापि त्रयोदशीत्यादिना वक्ष्यमाणां क्वचित् कदाचिदपि न दशमीयुक्तां कुर्व्वीतेत्यर्थः।

तथा नारदीये,—

रविचक्रार्द्धमात्रा च दशमी श्रूयते यदि।
प्रऽद्धेव द्वादशी ग्राह्या त्रयोदश्यान्तु पारणम्‌ ॥

रविचक्रार्द्धमात्रा रवेरर्द्धोदयव्यापिनीत्यर्थः।

तथा मार्कण्डेयपुराणे,—

अरुणोदयवेलायां दशमी तिष्ठते यदि।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्‌ ॥

अन्वारुणः सूर्य्यः तदुदयवेलायामर्द्धोदयव्यापिनी दशमीत्यर्थः। नन्वरुणः सारथिः, तदुदयवेलाया पूर्व्वदिवसीयत्वात्‌।

वराहपुराणे,—

कलार्द्धेनापि या विद्धा दशम्येकादशी यदा।

१ ग पुस्तके,, पश्चात् पदं नास्ति।

२ ग पुस्तके,, त्रमिश्रां।

7

तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥
द्वादश्यामुपवासन्तु ये वै कुर्वन्ति मानवाः।
तस्य मामेव पश्यन्ति मम शतपरायणाः ॥

बृहन्नारदीये च,—

एकादश्यां यदा ब्रह्मन् दिनक्षयतिथिर्भवेत्।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥

तथा भविष्ये देवर्षिभिःसंवादे,—

दशमीमिश्रिता वैश्य या स्यादेकादशी तिथिः।
आसुरी तु भवेदेषा धनपुत्रविनाशिनी ॥
शुद्धैव द्वादशी ग्राह्या त्रयोदश्यान्तु पारणम्।

तथा संवत्सरप्रदीपे,—

ये कारयन्ति कुर्वन्ति दशम्येकादशीं युताम्।
विलोक्य तन्मुखं ब्रह्मन् सूर्यदर्शनमाचरेत् ॥
विद्धा दशमीयुक्ता कार्या नैकादशी बुधैः।
हन्ति पुत्रांश्च पौत्रांश्च पुण्यं जन्मशतोद्भवम् ॥
दशमीशेषसंयुक्तं यः करोति हरेर्दिनम्।
एकादशीफलं तस्य नश्येत् द्वादशवार्षिकम् ॥
दशम्येकादशी विद्धा शुद्धा च द्वादशी परा।
द्वादश्येव तदोपोष्या त्रयोदश्यान्तु पारणम् ॥

मात्स्ये,—

एकादशी विद्धा चेद् द्वादशी तु[1] परेऽहनि।

---

१ ख पुस्तके„ द्वादशी च।

उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम् ॥

केचित्तु प्रकरणापरिचयेन द्वादशीमात्रपराणीमानि वचनानी-त्याचक्षते ।

क्वचित्तु नक्षत्रविशेषयोगवशेन विद्धायामप्युपवासमाह ।

अग्निपुराणे,—

नागविद्धा च[1] या षष्ठी शिवविद्धा[2] तु सप्तमी ।
दशम्येकादशी विद्धा कुर्व्वन् भ्रश्यात् पुराकृतम् ॥
दशम्येकादशी यत्र नोपोष्या सा भवेत्तिथिः ।
श्रवणेन तु संयुक्ता सा शुभा सर्व्वकामदा ॥

नचाच सन्दिग्धमूलत्वाशङ्का कल्पतरुशूलपाणिप्रभृतिभि[3]र्लिखि-तत्वात् । तत्र हि श्रवणाया विष्णुदेवतत्वेन तद्योगस्य बहुफलत्वेन बलीयस्त्वात् विद्धादोषोऽपि बाध्यते । अतएव एतद्वचनमूलान्येव दिभ्मौ रुद्रे समायुक्ते इत्यादीनि दशमीविद्धाविधायकानि पूर्व्वोक्तविष्णुधर्म्मोत्तरादिवचनानि, अन्यथा वाक्यभेदापत्तिः विष-यान्तरकल्पनापत्तिश्च स्यात् । अन्ये तु शुक्लकृष्णपक्षभेदाद्व्यवस्थामाहुः ।

कालविवेके कृत्यमहार्णवे च, भविष्यपुराणनाम्ना वचनं लिखितम् । यथा,—

एकादशीं दशायुक्तां वर्द्धमाने विवर्ज्जयेत् ।
पक्षहानौ स्थिते सोमे लङ्घयेद्दशमीयुताम् ॥

वर्द्धमाने सोमे शुक्लपक्षे, पक्षहानौ स्थिते सोमे कृष्णपक्षे,

---

१ ख पुस्तके,, नागविद्धा तु ।  २ ग पुस्तके,, रुद्रविद्धा ।
३ ग पुस्तके,, प्रभृतिभिः,, पदं नास्ति ।

कायेदुपवसेदित्यर्थः । यद्येतद्वचनं साकरं स्यात् तथापि शुक्लपक्ष दशमीविद्धावर्ज्जनं सर्व्वदेवायातं शुक्लपक्ष कृष्णानिषेधात् ।

यदा कृष्णपक्षेऽपि दशमीयुतां कुर्य्यात् त्यजेदिति कालविवेकवचनार्थः सर्व्वदैव विद्धां परिहरेदिति तात्पर्य्यम् ।

यदा तु किञ्चिदेकादशी ततश्च द्वादशीक्षयः तत्परदिने द्वादशलाभेऽपि दशमीविद्धां विहाय कलामात्रैवोपोष्येत्याह एकादशीकलापि स्यादिति । एतदेव विवृणोति एकादशी द्वादशी चेति, भिन्निःश्रा भिन्निःश्रपक्षिणेत्यर्थः ।

तथा विष्णुरहस्ये,—

एकादशीकलायान्तु द्वादश्यां समुपोषितः ।
त्रय क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥
एकादशी द्वादशी च निशान्ते च त्रयोदशी ।
त्र्यहःस्पृक् तदहोरात्रमुपोष्या सा सदा तिथिः ॥

वराहपुराणे,—

एकादशी द्वादशी च परतो द्वादशी न चेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु [१पारणे ॥
एकादशीकलायुक्तामुपोष्य द्वादशीं नरः ।
त्रयोदश्यान्तु यो भुङ्क्ते विष्णुसायुज्यमृच्छति ॥

अत्र,—

कला काष्ठा मुहूर्त्तं वा यदि स्यादपरेऽहनि ।
द्वादशद्वादशीं हन्ति त्रयोदश्यान्तु] पारणम् ॥

१ ख पुस्तके,, [. ] चिह्नितांशो नास्ति ।

इति कूर्मपुराणवचनं तत् द्वादशीमुल्लङ्घ्य त्रयोदश्यां पारण-विषयम्। यदि त्वाद्या परेऽह्नीति पाठे तु यत्र सम्पूर्णैकादशी परदिनेऽपि किञ्चिन्निर्गता तद्दिने च द्वादशीक्षयस्तत्र ग्रहस्थविषये वक्ष्यमाणपद्मपुराणवचनसमानार्थकं वचनम् । तथा पूर्णापि क्वचित् त्याज्या ।

यथा प्रचेताः,—

पूर्णाप्येकादशी त्याज्या द्वितयं वर्द्धते यदि ।
द्वादश्यां पारणालाभे पूर्णैव परिगृह्यते ॥
एकादशी विद्धा चेत् शुक्ले कृष्णे विशेषतः ।
तत्रोत्तरां यतिः कुर्य्यात् पूर्व्वामुपवसेत् गृही ॥

द्वितयमिति द्वादश्येकादश्यौ न दशम्येकादश्यौ पूर्णापि त्याज्येति वचनात् ।

पारणालाभे पारणायोग्यद्वादशीलाभे पूर्णामेकादशीमुपोष्य परदिने एकादशीं त्यक्त्वा द्वादश्यां पारणा कार्य्येत्यर्थः तत्परदिने द्वादशीमुल्लङ्घ्य पारणे दोषश्रवणात् ।

तथा च संवत्सरप्रदीपे,—

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
सर्व्वैरेवोत्तरा कार्य्या परतो द्वादशी यदि ॥

यदा तु पूर्णैकादशी वृद्धा परदिने किञ्चिन्निर्गता तत्परदिने द्वादशी किञ्चिदपि नास्ति तदाह एकादशी विद्धा चेदिति एकादशी विशेषतो वृद्धा एकादश्येव वृद्धा[1] न तु द्वादशीत्यर्थः ।

१ ख चिह्नित पुस्तके,, एकादश्येव वृद्धा, इत्यंशो नास्ति ।

तथा संवत्सरप्रदीपे,—

सम्पूर्णैकादशी यत्र परतोऽपि विवर्द्धते।

तत्रोत्तरां यतिः कुर्य्यात् पूर्व्वामुपवसेत् गृही ॥

अत्र यतिपदं गृहीतरपरम्।

अस्मिन्नेव विषये विष्णुधर्म्मोत्तरे,—

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।

त्रिःस्पृशा सा तिथिः प्रोक्ता यतीनामुत्तमा तिथिः ॥

तथा चात्रैव गृहस्थविषये पद्मपुराणम्,—

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।

त्र्यहःस्पृशमहोरात्रं नोपोष्यं तत्सुतार्थिभिः ॥ इति।

त्रिमिश्रां वाथ कुर्व्वीतेत्यादिवचनन्तु पूर्व्वदिने दशमीवेधे ज्ञातीति बोद्धव्यं न दशम्या युतां क्वचिदित्युपसंहारात्।

यदि चैकस्मिन् दिने दशमीविद्धा परदिने किञ्चिदेकादशी पारणादिने पारणायोग्यद्वादशी न लभ्यते किञ्चिन्मात्रमस्ति तदा द्वादशीलङ्घनस्यात्यन्तगर्हितत्वाद्दशमीविद्धापि कार्य्या।

यथा विष्णुरहस्ये,—

त्रयोदश्यां यदा न स्याद् द्वादशी घटिकाद्वयम्।

दशम्येकादशी विद्धा सैवोपोष्या सदा तिथिः ॥

घटी द्वन्द्वः घटीपञ्चा द्विवानिशमिति मलमासतत्त्ववचनात्। घटिकाद्वयमिति पारणायोग्यकालोपलक्षणम्। घटिकाद्वयादूना यदि स्यादित्यर्थः। एतेन द्वन्द्वयं पारणायोग्यकाल इत्याख्यातम्। एवकारो दशमीविद्धा कथं कर्त्तव्येति वितर्कव्यवच्छेदार्थः एवञ्च

यच दशमीविद्वैकादशीव्रतः परदिने द्वादशी दृष्टा कर्त्ता तत्पर-दिने किञ्चिन्निर्गता पारणायोग्या न लभ्यते सोऽप्यविषयः ।

यत्तु,—

> यदा भवेदतीवाल्पा द्वादशी पारणादिने ।
> प्रातरेव तदा कुर्य्यात् कर्म्म माध्यन्दिनं मुने ॥

इति स्कन्दपुराणवचनं तत्पारणायोग्यद्वादशीलाभविषयम् ।

तथा कूर्म्मपुराणे,—

> मुहूर्त्तं द्वादशी न स्यात् यथोदर्शां यदा मुने ।
> उपोष्या दशमीविद्धा सर्व्वैरेकादशी तिथिः ॥

अत्रापि मुहूर्त्तमित्यनेन दण्डद्वयं पारणायोग्यकाल इत्युक्तम् ।

अत्र केचित्,—

द्वादशीलङ्घनस्यात्यन्तनिषिद्धत्वाद्विद्धायामपि निषेधदर्शनाच्च निषेधेऽपि किञ्चिद्भक्ष्यकल्पकवचनदर्शनाच्च विष्णुरहस्यवचनानुरोधेन विद्धायां किञ्चिद्भक्षणीयम् ।

यथा वराहपुराणे,—

> उपवासनिषेधे तु भक्ष्यं किञ्चित् प्रकल्पयेत् ।
> उपवासो न सिध्येत[1] उपवासफलं लभेत् ॥

वायुपुराणे,—

> एकभक्तेन नक्तेन तथैवायाचितेन च ।
> पयसा चापि भैक्ष्येण नैवाद्वादशीको भवेत् ॥

एवञ्च तल्लक्षणेऽप्युपवासनिषेधे भक्ष्यं किञ्चिदाचरेदित्याहुः ।

---

१ ख,, पुस्तके सिध्येत ।

वस्तुतस्तु रागप्राप्त एव निषेधविधिः शास्त्रप्राप्ते त्वर्थे पर्य्युदास एवेति सिद्धान्तः। ततश्च दशमीविद्धेतरां कृष्णपक्षाविषयां एकादशीं व्रतस्थ उपवसेदिति विधिः सम्पन्नः, तदा च कृष्णपक्षादेर्विधिगोचरतया कथं तत्र किञ्चिद्भक्ष्यादिकल्पनं उपवासनिषेधे त्विति वचनन्तु द्वादशीलङ्घनभिया विष्णुरहस्यवचनेन यत्र विद्धायां प्रतिप्रसूयते तद्विषयमेव। अतो द्वयोर्वचनयोरेकवाक्यतया जलादिमात्रकिञ्चिद्भक्षणरूप एवोपवासः प्रतिप्रसवार्थः। एकभक्तेनेत्यादिवचनन्तु असामर्थ्यरोगादिना ग्रेयं अत्यन्तासामर्थ्ये तु पत्न्यादिद्वारा कारयेदिति वक्ष्यते।

यत्तु श्रीभागवतटीकाकृता श्रीधरस्वामिना।

कलाढ्यां द्वादशीं दृष्ट्वा निशीथादूर्द्ध्वमेव हि।
आमाध्याह्नाः[1]क्रियाः सर्व्वाः कर्त्तव्याः शम्भुशासनात्॥

इति नाममूल्यं वचनं लिखितम्। तत् यथोदश्यां यदा न स्यादित्यादि श्राकरविष्णुरहस्यादिवचनदर्शनात् पूर्णाप्येकादशी त्याज्येति प्रचेतोवचनदर्शनाच्चामूलमिति प्रतिभाति। एकादश्युपवासपक्षमात्र रात्रौ जागरणं कुर्व्वन्निति।

एतेन जागरणगदाधरपूजादिकं वक्ष्यमाणद्वादशीपारणनियममैथुनमसूरादिवर्ज्जनपूर्व्वोत्तरदिनभोजनद्वयनिवृत्त्यादिकं चोपवासव्रताङ्गमित्युक्तं, तदा च नित्यस्यास्य व्रतस्य कदाचित् किञ्चिदङ्गत्यागेऽपि कर्त्तव्या नित्ये किञ्चिदङ्गहानिः क्षम्या न तु काम्ये इति दर्शितत्वात्। अथवा मोक्षफलकथनाज्जागरणपुराणश्रवणो-

---

१ ख,, ग,, पुस्तकद्वये, आमध्याह्नात्।

शुक्लविधित्वं किन्तु रात्र्यां विष्णुपूजाजागरणयोरन्यापेक्षया प्राधान्यात् तत्र यत्नो विधेयः ।

अतएव नैवाशौचं भवेदिति वराहपुराणं । तथा सूतके उपवासं पारणाद्य अन्या सूतकान्तेऽपि विष्णुपूजा कार्य्येति मत्स्य-पुराणवचने वक्ष्यते । दैवात् कदाचित्तत्रापि अशक्तौ उपवासमात्र-मवश्यमेव प्राधान्यादिति ।

अत्र च गृहस्थस्य रुक्माङ्गदभूपतेरेकादशीद्वयकरणेन मोक्ष-श्रवणात् कृष्णैकादश्युपवासो मुमुक्षुपर एवेत्युक्तम् । एकादशीशब्दः एकादशीकारिपर इत्यर्थः ।

अशक्तावानुकल्पिकमाह वाराहे,—

नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम् ।
यत् पञ्चगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च ॥

नक्तं हविष्यान्नमित्येकं न तु पृथक् पृथक्त्वे हि अम्बुभोजनेनो-त्तरोत्तरप्राशस्त्यकथनं नोपपद्येत ।

देवीपुराणे,—

हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
अग्निकार्य्यमधःशय्यां नक्तंभोजी षडाचरेत् ॥

इति नक्तंभोजने लघुहविष्यान्नभोजनस्य परिभाषितत्वात् । अतो न नक्तंभोजनविधिः किन्तु रात्रावेव हविष्यभोजनविधिः ।

नक्तंभोजनादिकमप्यपरमानुकल्पिकमाह ।

वायुपुराणे,—

एकभक्तेन नक्तेन तथैवायाचितेन च ।

यथया चापि भैषेण नैवाद्यादद्मिको भवेत् ।

एकभक्तञ्च मध्याह्ने कार्य्यम् । मध्याह्नव्यापिनी ग्राह्या एक-भक्तस्य तिथिरिति देवलेन संग्रहे मध्याह्नव्यापितिथेर्विधानात् ।

नक्तं भोजनविधिस्तु भविष्यपुराणोक्त एव । नैवाद्यादद्मिको भवेदिति यर्म्मानुकल्पिते द्वादश्यां विष्णुपूजापारणादिनियमविरहे-णाद्यादद्मिकः कदापि न स्यादित्यर्थः । अत्यन्ताशक्तौ पुत्रादिना कारयितव्यं ।

वराहपुराणे,—

असामर्थ्ये शरीरस्य व्रते च समुपस्थिते ।
कारयेद्धर्म्मपत्नीं वा पुत्रं वा विनयान्वितम् ॥
भगिनीं भ्रातरं शिष्यं ब्राह्मणं दक्षिणादिभिः ।
पितृमातृपतिभ्रातृश्वशुर्य्यादिभुजाम् ।
चद्दिश्यार्थमुपोष्यापि स्वयञ्च फलभाग्भवेत् ॥

गरुड़पुराणे,—

भर्त्तुर्भार्य्या व्रतं कुर्य्यात् भार्य्यायाश्च पतिस्तथा ।
असामर्थ्ये तयोस्ताभ्यां व्रतभङ्गो न जायते ॥

तथा,—

सूतकेऽपि नरः स्नात्वा प्रणम्य मनसा हरिम् ।
एकादश्यां न भुञ्जीत व्रतमेतं न लुप्यते ॥
द्वादश्यान्तु ततो भुक्त्वा सूतकान्ते जनार्द्दनम् ।
पूजयित्वा विधानेन भोजयेत द्विजोत्तमम् ॥
व्रतभङ्गाच्चरद् दुःखं प्राप्नोति नरकं तथा ।

तस्मात् प्रमादे दुःखे वा सूतके मृतकेऽपि वा ॥
स्नात्वा कार्य्यमिदं कुर्य्याद्दानार्चनविवर्जितम्। इति।

वस्तुतस्तु एतानि वचनानि गृहीतव्रतपराण्येव प्रतीमः। रवि-
वारादौ केचिन्निषेधं वदन्ति।

मत्स्यपुराणे,—

संक्रान्तौ रविवारे च ग्रहणे चन्द्रसूर्य्ययोः।
उपवासं न कुर्व्वीत पुत्रपौत्रधनान्वितः ॥

तथा,—

रविशुक्रदिने चैव संक्रान्त्याञ्च दिनक्षये।
पारणञ्चोपवासञ्च न कुर्य्यात् पुत्रवान् गृही ॥

ब्रह्मपुराणे,—

इन्दुक्षयेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे।
उपवासं न कुर्व्वीत पुत्रपौत्रधनान्वितः ॥

इति तत्र एतेषां वचनानां काम्योपवासनिषेधकत्वेनोपपत्तौ
नित्यैकादश्युपवासव्रतस्य अकरणकृतप्रत्यवायानामनुत्पत्तिबोधना-
क्षमत्वात्। किन्त्वेतानि सामान्योपवासनिषेधकवचनानि विशेषवचन-
दर्शनादेकादशीव्यतिरिक्तविषयाणि यथा।

विष्णुधर्म्मोत्तरे,—

एकादश्यां यदा राम[1] आदित्यस्य दिनं भवेत्।
उपोष्या सा महापुण्या पुत्रपौत्रप्रवर्द्धनी[2] ॥
अर्कभानुदिनोपेता तथा संक्रान्तिसंयुता।

१ क एकस्य, मान्य इति पाठः। २ क, विवर्द्धनी।

एकादशी सदोपोष्या पुत्रपौत्रप्रवर्द्धिनी ॥

सनत्कुमारः,—

भानुवारेण संयुक्ता तथा संक्रान्तिसंयुता ।
एकादशी सदोपोष्या सर्व्वसम्पत्करी तिथिः ॥

यत्तु,—

मधुमासे वृषे चैव कन्यायां पार्व्वतीमते ।
उपवासं न कुर्व्वीत पुत्रपौत्रधनार्थिनः ॥

इति पठन्ति ।

यच्च,—

मधुमासे वृषे चैव कन्यायां राजसत्तम ।
उपवासं न कुर्व्वीत यदीच्छेच्छ्रियमात्मनः ॥

इति नामशून्यं वचनं कालविवेके लिखितं तदप्यमूलमेव समूलत्वाभिमाने तु वचनद्वयं क्रोधादिभिरिच्छोपवासविषयम् काम्योपवासविषयं वा न नित्योपवासविषयं अकरणे प्रत्यवायात् वचनद्वयान्वयोपपत्तौ तद्वाक्यात् प्रत्यवायाभावकल्पनाया अन्याय्यत्वात् । एवञ्च प्रतीतप्रत्यङ्गभूतोपवासोऽपि कर्त्तव्य एवेति ।

अथैकादशीनियमः ।

अयोगे क्लेशकरणमसङ्कल्पे व्रतक्रिया ।
अमन्त्रकर्म्म चर्य्या च व्यर्थं स्यात् कुशवर्जितम् ॥

इति हरिवंशवचनात् केचित्तु सङ्कल्पमन्त्रोपवासकारणमक-लापमेवेति । अतएव सङ्कल्पवाक्यमुक्तं वराहपुराणे,—

एकादश्यां निराहारो भूत्वा चैवापरेऽहनि ।

भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत ॥
इत्युच्चार्य्य ततो विद्वान् पुष्पाञ्जलिमुपक्षिपेत् ।

अतएव वचनान्नित्येऽस्मिन् व्रते सङ्कल्पविधिः । सङ्कल्पवाक्य-मपीदमेव मुनिभिर्विशिष्यैतादृशवाक्यवचनाभिधानात् । तत्परिपाटीमाह महाभारते,—

गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासन्तु गृह्णीयाद्यद्वा सङ्कल्पयेद् व्रतम् ॥

यद्वा अन्यव्रतं सङ्कल्पयेत् मनसा नियमयेत् तदप्येवंविधिना गृह्णीयादित्यर्थः ।

तच्च दशम्यां सायंसमये कार्य्यं देवीपुराणे,—

अथाषाढे दशम्यान्तु शुक्लायां लघुभुङ्नरः ।
कृत्वा सायन्तनीं सन्ध्यां गृह्णीयान्नियमं पुनः ॥

इति शयनैकादश्यां दर्शनादन्यत्रापि तथैव न्याय्यत्वात् । यत्तु,—

प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकम् ।

इति वचनं, तदहन्याद्युपवासविषयं नैकादश्युपवासविषयं विशेष-दर्शनात् । विष्णुरहस्ये,—

सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे ।
पर्वोपवासे कुर्वीत न भोजनचतुष्टयम् ॥

नचास्य चन्द्रिकामूलमात्रता मदनपारिजातकालविवेकस्मृति-समुच्चयादिभिर्लिखितत्वात् । एतेन यमोक्तिः,—

तीरपारौ समाप्तौ, व्रतं पारयति समापयतीति पारणा तस्य पारणान्तं व्रतमिति प्रसिद्धिरिति पुनर्भोजनमविरुद्धं ।
तथा वचनम् ।

पूर्व्वोक्तेन विधानेन पारणं पूर्व्वाह्णकम् ।
यथेष्टञ्च तथा रात्रौ पुनश्चैव च सर्व्वदा ॥

इति वदन्ति तन्निरस्तं कर्ण्णसमाप्तावपि श्राद्धदिने प्रत्याब्दमुत्तराङ्गत्वावश्यानुष्ठीयमानत्वात् । पुनरभोजनस्योत्तराङ्गतामाह भविष्ये,—

दिवानिद्रां पराह्नञ्च पुनर्भोजनमैथुनम् ।
क्षौद्रं कांस्यामिषं तैलं द्वादश्यां वर्ज्जयेद्बुधः ॥

इति पूर्व्वोक्तेन विधानेनेति वचनममूलमेव ।
यत्तु,—

सङ्कटे विषमे प्राप्ते पारणन्तु कथं भवेत् ।
अद्भिस्तु पारणं कुर्य्यात् पुनर्भुक्तं न दोषकृत् ॥

इति देवलवाक्यं वचनं तद्यदि समूलं स्यात् तदा सङ्कटे द्वादश्यां पारणाशक्तौ अद्भिः पारणां कृत्वाऽसामर्थ्ये पुनर्भोजनं कुर्य्यादिति व्याख्येयम् ।

उपवासमात्रे वर्ज्ज्यानाह गरुडपुराणे,—

कांस्यं मांसं मसूरञ्च चणकं कोरदूषकम् ।
शाकं मधु पराह्नञ्च वर्ज्जयेदुपवसन् स्त्रियम् ॥

उपवसन्नित्यनेन संयमपारणादिनयोर्व्वर्ज्ज्यमित्यर्थः ।

विष्णुधर्मे,—

कांस्यं मांसं मसूरञ्च पुनर्भोजनमैथुनम्।
द्यूतमत्याम्बुपानञ्च दशम्यां वर्जयेद्बुधः॥
असत्यभाषणं द्यूतं दिवास्वप्नञ्च मैथुनम्।
एकादश्यां न कुर्व्वीत उपवासपरो नरः॥
असकृत्तोयपानेन ताम्बूलभक्षणेन च।
उपवासो विनश्येत दिवास्वप्नाच्चमैथुनैः॥

असकृदिति सकृत्तोयपाने दोषाभावः। तथा च मधुभक्षणमभक्षणमिति।

आग्नेये,—

उपोष्यैकादशीमेकं द्विजं यो भोजयेद्द्विजः।
गन्धपुष्पाक्षतैर्भक्त्या विष्णुमाराध्य भक्तितः॥
कामानिष्टानवाप्यान्ते विष्णुलोकमवाप्नुयात्।
नैव तत्कुलजातानां दुःखं दारिद्र्यमेव च॥

उपोष्य एकादशीमिति शेषः।

कूर्म्मपुराणे,—

कांस्यं मांसं सुरां क्षौद्रं हिंसां तैलमसत्यताम्।
द्यूतक्रीडां दिवानिद्रां व्यायामं क्रोधमैथुनम्॥
द्वादश्यां द्वादशैतानि वैष्णवः परिवर्ज्जयेत्।

विष्णुरहस्ये,—

कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम्।
व्यायामञ्च प्रवासञ्च दिवास्वप्नमथाञ्जनम्॥

शिलापिष्टं मसूरञ्च द्वादश्येतानि वैष्णवः।
द्वादश्यां वर्ज्जयन्नेव सर्व्वपापैः प्रमुच्यते॥

निषिद्धाचरणजन्यपापैरित्यर्थः।

संवत्सरप्रदीपे,—

अभ्यङ्गञ्च पराम्नञ्च तुलसीचयनं तथा।
वस्त्रपीडां तथा चौरं द्वादश्यां वर्ज्जयेद् बुधः॥

अत्र तुलसीचयनादिनिषेधस्तिथिमात्रविषयः। अतस्त्रयोदशी-पारणे कर्त्तव्यमेव।

यथा तत्रैव,—

द्वादश्यां तुलसी यस्माद्विष्णुना याति सङ्गतिम्।
तस्मात्तां न विचिन्वीत तुलसीं द्वादशीदिने॥
संक्रान्त्यां पञ्चदश्याञ्च द्वादश्यां श्राद्धवासरे।
वस्त्रं न पीडयेत् क्षारं नापि क्षारेण योजयेत्॥

क्षायते येन तत् क्षारं वस्त्रं एकोद्दिष्टश्राद्धवासर इति प्राञ्चः।

अथ सर्व्वत्र द्वादश्यां विष्णुपूजोक्ता तत्र भूतशुद्धिप्राणायाम ऋष्यादिन्यासमातृकान्यासकेशवादिन्यासमूर्त्तिपञ्जरन्यासमन्त्रादिन्यास[1]पीठन्यासान् कृत्वा विष्णुं ध्यात्वा अर्घ्यपाद्याचमनपात्राणि संस्थाप्य शालग्रामयन्त्रे मण्डले वा पीठपूजां विधाय तत्र विष्णुमावाह्य षोडशोपचारैः संपूज्य आवरणदेवताश्च सम्पूज्य विष्णुमन्त्रं यथाशक्ति जपित्वा स्तुत्वा प्रणमेदिति विधिः। एतत् सर्व्वं पश्चाद्विवेचयिष्यते।

इत्येकादशीव्यवस्था॥

---

१ ख पुस्तके,, मन्त्रादिन्यास इति पदं नास्ति।

इदानीं प्रसङ्गात् वर्ष्मव्रताचरणो परिभाष्यते।

तत्र देवलः,—

अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः।

सूर्य्याय देवताभ्यश्च निवेद्य व्रतमाचरेत् ॥

प्रातराहारमहर्भोजनमित्यर्थः।

मुनिभिर्द्दिरशनं प्रोक्तं[1] विप्राणां मर्त्त्यवासिनां नित्यं।

अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः ॥

इत्यनेन छन्दोगपरिशिष्टकृता,—

सायं प्रातर्मनुष्याणामशनं देवनिर्मितम्।

नान्तरा भोजनं कार्य्यमग्निहोत्रसमो विधिः ॥

इति हन्दमनुवचने सायंप्रातःपदयोः रात्रिदिवापरतया विवृ-तत्वात्। अतएव,—

सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे।

धर्म्मोपवासे कुर्व्वीत न भोजनचतुष्टयम् ॥

इत्यपि सङ्गच्छते। ततश्च अभुक्त्वा प्रातराहारमिति [2]अपराह्ण-रात्रिव्रतविषयं दिवाव्रतस्य पूर्व्वाह्णविधानात्। अहर्भोजनस्य इयोक्त दिवापञ्चमभागे विधानादिति। सूर्य्याय देवताभ्य इति सूर्य्यः सोमो यमः काल इत्यनेन सूर्य्यादिदेवताभ्यो निवेद्य विज्ञाप्य व्रत-माचरेत् सङ्कल्पयेदित्यर्थः। सङ्कल्पस्तु उदङ्मुखेनैव कार्य्यः।

---

१ क ख पुस्तकद्वये द्विरशनमुक्तम्।

२ ख, अपराह्णरात्रिव्रतस्य पूर्व्वाह्णविधानात्।

गृह्णीतौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।

इति पूर्व्वोक्तमहाभारतवचनात् । औदुम्बरं ताम्रमयमभावेऽन्ये-नापि पारिजातः ।

रात्रिव्रतन्तु निशामुखे सङ्कल्पयेत् ।

व्रतं निशामुखे ग्राह्यं दृष्टितारकदर्शनात् ।

इति विष्णुवचनात् ।

भविष्ये,—

क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।
देवपूजाग्निहवनं सन्तोषः स्तेयवर्ज्जनम् ॥
सर्व्वव्रतेष्वयं धर्म्मः सामान्यो दशधा स्मृतः ॥

नक्तं भोजनव्रते विशेषमाह, देवीपुराणे,—

हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
अग्निकार्य्यमधःशय्यां नक्तभोजी षडाचरेत् ॥

सौरनक्तव्रते तु मुहूर्त्तोनदिने भोजनमन्यत्र निशैवेति प्रागुक्तम् ।

शातातपः,—

पुष्पालङ्कारवस्त्राणि धूपगन्धानुलेपनम् ।
उपवासे प्रदुष्येत दन्तधावनमञ्जनम् ॥

वस्त्रालङ्कारादीनां विलासानुधारणे एव दोषः ।

भविष्ये,—

उपवासे तथा श्राद्धे न कुर्य्याद्दन्तधावनम् ।
अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते ॥
दन्तानां काष्ठसंयोगो हन्त्यासप्तमं कुलम् ।

विष्णुधर्म्मे,—

सकृत्तोयपानेन ताम्बूलभक्षणेन च ।

उपवासः प्रणश्येत दिवास्वप्नाच्च मैथुनैः ॥

स्त्रीणान्तु सभर्तृकाणामुपवासनिषेधमाह विष्णुः,—

पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् ।

आयुः संहरते पत्युः सा नारी नरकं व्रजेत् ॥

भर्तृयाचित्ये तु न दोषः । भर्तुः समानचारित्वं[1] स्त्रीधर्म्म इत्यापस्तम्बवचनात् । तदनुमत्या तु पृथगपि न दोषः ।

यथा मनुः,—

कामं भर्तुरनुज्ञया व्रतोपवासनियमेज्यादीनां अभ्यासः स्त्रीधर्म्म इति ।

वैश्यशूद्रयोस्तु त्रिरात्रपञ्चरात्राद्युपवासनिषेधमाह देवलः,—

वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्व्वते ।

त्रिरात्रं पञ्चरात्रं वा तयोः पुष्टिर्न विद्यते ॥

पुष्टिः फलम् । एतेन काम्यस्यैव निषेधः । प्रायश्चित्तन्तु कर्त्तव्यमेव ।

शातातपः,—

उपवासं द्विजः कृत्वा ततो ब्राह्मणभोजनम् ।

कारयेत् सगुणस्तेन उपवासोऽभिजायते ॥

द्विज इति उपवासकर्तृमात्रोपलक्षणं अपवर्गेऽभिरूपभोजन-

---

१ ख पुस्तके, समानव्रतचारित्वम् ।

मिति विष्णुना सामान्यतोऽभिधानात्। क्रियासमाप्तिरपवर्गः समि-रूपो ब्राह्मणः। अभ्यङ्गनिषेधमाह मत्स्यपुराणे,—

तस्मात् स्नानोपवासेन स्नानमभ्यङ्गपूर्व्वकम्।
वर्ज्जनीयं प्रयत्नेन रूपघ्नं हि परं नृप॥

सङ्कल्पितव्रतमवश्यं कर्त्तव्यमित्याह छागलः,—

पूर्व्वं व्रतं गृहीत्वा यो नाचरेत् काममोहितः।
जीवन् भवति चाण्डालो मृतः श्वा चैव जायते॥

अत्र काममोहित इत्यभिधानादिच्छात्याग एव दोषो न तु प्रमादादिनापि।

तथा च देवलः,—

सर्व्वभूतभयं व्याधिः प्रमादो गुरुशासनम्।
न व्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रतः॥

सर्व्वभूतभयं राजव्याघ्रादिभयं प्रमादो विस्मरणम्।

उद्योगपर्व्वणि,—

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्॥

अशौचे तु गृहीतव्रतं न त्याज्यं 'न व्रतिनां व्रते न सत्रिणां सत्रे' इति विष्णुना तथाशौचपर्य्युदासात्। तथाप्यन्यद्वारा पूजादिकं कारयितव्यं स्वयन्तु कायव्रतमुपवासादिकं कार्य्यम्।

मत्स्यपुराणे,—

प्रारब्धतपसां स्त्रीणां रजो हन्याद्व्रतं न हि।
अन्यैः पूजादिकं कुर्य्यात् कायिकं स्वयमेव हि॥

क्रोधात् प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्यदि।
दिनत्रयं न भुञ्जीत शिरसो मुण्डनं भवेत्॥
तस्मात् प्रमादे दुःखे वा सूतके मृतकेऽपि वा।
ज्ञात्वा कायव्रतं कुर्य्याद्दानार्च्चनविवर्ज्जितम्॥

कायव्रतन्तु स्त्रीपुंससाधारणं, उपवासादि* दानार्च्चनन्तु स्वयं विवर्ज्जयेदित्यर्थः। तत्र मात्स्ये नारद उवाच,—

उपवासेष्वशक्तानां तदेव फलमिच्छताम्।
अनभ्यासेन रोगाद्वा किमिष्टं व्रतमुच्यताम्॥

ईश्वर उवाच,—

उपवासेष्वशक्तानां नक्तं भोजनमिष्यते।
असामर्थ्ये शरीरस्य पुत्रादीन् कारयेद्व्रतम्॥

गारुडे,—

भर्त्तुर्भार्य्या व्रतं कुर्य्यात् भार्य्यायाश्च पतिस्तथा।
असामर्थ्ये तयोस्ताभ्यां व्रतभङ्गो न जायते॥

अथ द्वादशीकृत्यम्।

भविष्ये,—

द्वादश्यां विष्णुमिष्ट्वा च सर्व्वदा विजयी भवेत्।
पूज्यश्च सर्व्वलोकानां यथा गोपतिगो हरः॥

पद्मपुराणे,—

एकादश्यां द्वादश्यां वा प्रतिपक्षन्तु यो नरः।
दीपं ददाति कृष्णाय शृणु तस्यापि यत् फलम्॥
सुवर्णमणिमुक्ताढ्यं मनोज्ञमतिशोभनम्।

रत्नमालाढ्यं रम्यं विमानमधिरोहति ॥

मात्स्ये,—

[1][द्वादश द्वादशीर्यस्तु समाप्योपोषणे: पुनः ।
गोवस्त्रकाञ्चनैर्विप्रान् पूजयेद्भक्तितो नरः ॥
परमं पदमाप्नोति विष्णुव्रतमिदं स्मृतम् ।

द्वादशीः शुक्लाः, एकादशीयुक्तैव द्वादश्युपोष्या युग्मवचनात्] ।

एकादश्यां प्रकुर्व्वन्ति उपवासं मनीषिणः ।
उपासनाय द्वादश्यां विष्णोर्यदर्दितं तथा ॥

इति प्रागुक्तभविष्यपुराणवचनाच्च । प्रागेव वचनमिदं व्याख्यातम् ॥

अथ त्रयोदशीकृत्यम् ।

भविष्ये,—

कामदेवं त्रयोदश्यां सुरूपो जायतेऽर्च्चयन् ।
इष्टां रूपवतीं भार्य्यां लभेत् कामांश्च पुष्कलान् ॥

अथ चतुर्द्दशीकृत्यम् ।

भविष्ये,—

रुद्रेश्वरं चतुर्द्दश्यां सर्व्वैश्वर्य्यसमन्वितः ।
बहुपुत्रो बहुधनश्चापि जायाच संशयः ॥

मात्स्ये,—

चतुर्द्दश्यान्तु नक्ताशी समाप्ते गोयुगप्रदः ।

---

१ ग पुस्तके, [     ] चिह्नितांशो नास्ति ।

श्रेवं पदमवाप्नोति एतत् चैवाक्षकं व्रतम् ॥

यमः,—

अलर्काभ्युदिते काले कृष्णपक्षे चतुर्द्दशीम् ।

स्नातः सन्तर्प्य तु यमान् सर्व्वपापैः प्रमुच्यते ॥

यमाश्चतुर्द्दश । भविष्ये,—

यां काञ्चित्सरितं प्राप्य कृष्णपक्षे चतुर्द्दशीम् ।

यमुनायां विशेषेण नियतस्तर्पयेद्यमान् ॥

यमाय धर्मराजाय मृत्यवे चान्तकाय च ।

वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥

औडुम्बराय दध्नाय नीलाय परमेष्ठिने ।

वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥

एकैकस्य तिलैर्मिश्रान् दद्यात् त्रींस्त्रीन् जलाञ्जलीन् ।

संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥

भविष्ये,—

चतुर्द्दश्यामथाष्टम्यां पक्षयोः शुक्लकृष्णयोः ।

योऽब्दमेकं न भुञ्जीत शिवार्च्चनरतः सदा ॥

यत्पुण्यमक्षयं प्रोक्तं सततं तत्र याजिनाम् ।

तत्पुण्यं सकलं तस्य शिवलोकञ्च गच्छति ॥

श्रीगोविन्दपदद्वन्द्वमधेनुवासितान्तरा ।

अथेदानीं चतुर्द्दश्या व्यवस्थेयं निरूप्यते ॥

---

१ ख ग पुस्तकद्वये, खपक्षम् ।

तत्र चतुर्द्दश्याय पूर्व्विणेति युग्मवचनात् शुक्ला चतुर्द्दशी पर-युतैव ग्राह्या कृष्णा तु चयोदशीयुतैव।

षष्ठ्यष्टम्यप्यमावस्या कृष्णापक्षे चयोदशी।
एताः परयुताः पूज्याः पराः पूर्व्वेण संयुताः॥

इति पूर्व्वोक्तयुग्मवचनात्।

अत्र रात्रियुग्मापि ग्राह्या उपवासस्याहोरात्रसाध्यत्वात् रात्रौ शिवार्च्चनविधानाच्च।

अतएव स्मृतिसमुच्चये शिवपुराणे,—

उपोषणं - - - - चतुर्द्दश्यां च पारणम्।
कृतैः सुकृतलक्षैस्तु प्राप्यते वा न वाऽथवा।
ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै॥
पूजितानि भवन्तीह भूतायां पारणे कृते।
चतुर्द्दशीदिने रात्रौ कुहूयोगो भवेद्यदि।
तत्र जागरणं नृणां ब्रह्महत्याशताधिकम्॥
धनुःकर्कटपश्चास्यकुम्भमीनवृषालिषु।
कामविद्धो हरः पूज्यः सर्व्वाभीष्टफलप्रदः॥

पश्चास्यः सिंहः अलिर्वृश्चिकः कामस्त्रयोदशी। एतेन चतुर्द्दश्यां पारणस्य प्राशस्त्यं दर्शितम्। न तु अमावस्यायां पारणं निषिध्यते इदमपि तिथिद्वैधे एव, पूर्णतिथौ तु निःसंशयममावस्यायां पारणमिति।

शिवरात्रिव्रते तु चतुर्द्दशीमुक्त्वार्थैव पारणं कार्य्यम्।

जन्माष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्द्दशी।

युताः परयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत् ॥

इति ब्रह्मवैवर्त्तवचनात्।

तथा विष्णुरहस्ये,—

अष्टमी शिवरात्रिश्च कार्य्ये भूतयान्विते।

कृत्वोपवासं तिथ्यन्ते तदा कुर्य्याच्च पारणम् ॥

मदनपारिजातोऽप्येवम्।

यत्तु,—

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्द्दशी।

रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥

इति पठन्ति तदमूलमेव सर्व्वप्रामाणिकसंग्रहेष्वदृष्टत्वात्, समूलत्वाभिमाने तु शुक्लपक्षविषयम्।

इयञ्च युग्मादरेण व्यवस्था रात्रेः सार्द्धप्रहरद्वयाभ्यन्तरे यदि चतुर्द्दशी लभ्यते तदैव तत्परतश्चतुर्द्दशीलाभे परदिन एव।

यथा शिवरहस्ये,—

प्रदोषे वार्द्धरात्रे वा त्रियामार्द्धे वरानने।

चयोदशी यदा तत्र उपवासं समाचरेत् ॥

तृतीययामसार्द्धाभ्यन्तरे चयोदशी ततः प्रभृति चतुर्द्दशीत्यर्थः।

अत्र विशेषविधानात् रात्रेस्तृतीयप्रहरार्द्धात् परं चतुर्द्दशीयोगे उपवासो व्युदस्यते।

अतएव मदनपारिजाते शिवरात्रिचतुर्द्दश्यां शिवपुराणवचनं लिखितम्।

भवेद्यत्र चयोदश्यां भूतविद्धा महानिशा।

शिवरात्रिव्रतं तत्र कुर्य्याज्जागरणं तथा ॥
महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।

यत्तु,—

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्द्दशी ।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥

इति हेमाद्रिलिखितं वचनं तत् प्रदोषावधि चतुर्द्दशीयोगेऽतिप्राशस्त्यार्थं रात्रौ जागरणमिति हेतुमभिगदात् ।

तथा वायुपुराणे,—

त्रयोदश्यस्तगे सूर्य्ये चतसृष्वेव नाड़िषु ।
भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत् ॥

तथा ब्रह्मवैवर्त्ते,—

सूर्य्येऽस्ते नवनाड़ीषु भूतयुक्ता त्रयोदशी ।
शिवरात्रिव्रतं तत्र कुर्य्याज्जागरणं तथा ॥

भविष्ये,—

अर्द्धरात्रात् परे किञ्चिच्चयायोगो भवेद्यदि ।
पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिः शिवव्रतैः ॥

तथा त्रयोदशी । तत्र किञ्चिदित्यनेन तृतीयप्रहराद्यभ्यन्तरे चतुर्द्दशीयोग एव उपवासो नान्यथेति । एषु वचनेषु पूर्व्वा पूर्व्वा प्रशस्ता ।

यत्तु,—

पूर्व्वा त्रयोदशी रात्रौ याममेकं चतुर्द्दशी ।
उपोष्या सा महापुण्या शम्भुरेवमब्रवीत् ॥

इति कामयुक्तं वचनं तन्मूलं तन्मूलत्वेऽपि किञ्चिदधिकं यामैकं चतुर्द्दशीति तदर्थः यथा तृतीयप्रहरार्द्धं चतुर्द्दशीयोगः इति। अतएव वक्ष्यमाणवचनान्यपि रात्रेः तृतीयप्रहरार्द्धं चतुर्द्दशीयोगविषयाणि।

यथा विष्णुपुराणे,—

शिवरात्रिव्रते भूतां कामविद्धां विवर्ज्जयेत्।
एकेनैवोपवासेन ब्रह्महत्यां व्यपोहति॥

तथा,—

शिवा घोरा तथा प्रेता सावित्री च चतुर्द्दशी।
कुहूयुक्तैव[1] कर्त्तव्या कुह्वामपि च पारणम्॥

शिवरात्रिः फाल्गुने, अघोरचतुर्द्दशी भाद्रे, प्रेतचतुर्द्दशी कार्त्तिके, सावित्री ज्यैष्ठे, एतत्सर्व्वं प्राधान्यतो निदर्शनमात्रम्।

स्कन्दपुराणे,—

माघासिते भूतदिनं हि राज-
न्नुपैति योगं यदि पञ्चदश्या।
जयाप्रयुक्तां न तु तत्र कुर्य्यात्
शिवस्य रात्रिं प्रियकृच्छिवस्य॥

जयया त्रयोदश्या युक्तां प्रकर्षस्तु तृतीयप्रहरार्द्धाधिकयोगः। माघासित इति मुख्यचान्द्राभिप्रायेण गौणचान्द्रे तु सा फाल्गुनस्येति।

---

१ ग पुस्तके, ॰युक्ताच।

तथा शिवागमे।

कुम्भसंस्थे सहस्रांशौ या तु कृष्णा चतुर्द्दशी।
तत्रोपवासः कर्त्तव्यो माघे वापि तिथिक्रमात्॥

माघे सौर इत्यर्थः।

भविष्ये,—

माघफाल्गुनयोर्मध्ये कृष्णपक्षे चतुर्द्दशी।
शिवरात्रिस्तु सा ख्याता सर्व्वकामफलप्रदा॥

तथा,—

फाल्गुनस्य च कृष्णायां चतुर्द्दश्यां सुरेश्वरि।
अहं यास्यामि भूपृष्ठे रात्रौ मातङ्गगामिनि॥
लिङ्गेषु च समस्तेषु स्थावरेषु चरेषु च।
संक्रमिष्याम्यसंदिग्धं सर्व्वपापविशुद्धये॥

अत्र रात्रावित्यनेन रात्रिव्रतमित्युक्तम्।

तथा शैवागमे,—

कुम्भसंस्थे सहस्रांशौ कृष्णा शिवचतुर्द्दशी।
रात्रियोगे तु कर्त्तव्या जागरादिसमन्विता॥
प्रहरे प्रहरे स्नानं पूजाञ्चैव विशेषतः।
शिवलिङ्गस्य कुर्व्वीत अर्घ्यदानञ्च भक्तितः॥

यत्तु स्कन्दपुराणवचनम्,—

माघफाल्गुनयोर्मध्ये या स्यात् शिवचतुर्द्दशी।
अनङ्गेन समायुक्ता कर्त्तव्या सा सदा तिथिः॥
जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च।

पूर्व्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम्॥ इति।

तत् रात्रिप्रहरचयाभ्यन्तरे चतुर्द्दशीयोगे मन्तव्यं एवमन्यान्यपि वचनानि ज्ञेयानि। चतुष्कतिथिविच्छयोऽद्गो तिथिभान्ते पारण मिति रोहिण्यष्टमीविषयं तच्चोत्सेकेन तत्रोपवासविधानात्।

इति चतुर्द्दशीव्यवस्था॥

## अथ पौर्णमासीकृत्यम्।

भविष्ये,—

पौर्णमास्यान्तु यः सोमं पूजयेद्भक्तिमान्नरः।
प्रजावृद्धिं धनं धान्यं कामानिष्टान् लभेत सः॥

ब्रह्मगीतायाम्,—

यथावत् पौर्णमास्यान्तु स्रोतसेवोत्तरामुखे।
स्नात्वा प्रेतपुरीं हित्वा विष्णुलोकं स गच्छति॥
आषाढीकार्त्तिकीमाघीवैशाखीषु कृतन्तु यत्।
तदनन्तफलं प्रोक्तं स्नानदानजपादिकम्॥
माससंज्ञे यदा ऋक्षे चन्द्रः सम्पूर्णमण्डलः।
गुरुणा याति संयोगं सा तिथिर्महती स्मृता॥

मासस्य संज्ञा यस्मात् तन्माससंज्ञं। कार्त्तिके कृत्तिका, मार्गशीर्षे मृगशिरा, पौषे पुष्या, माघे मघेत्यादयः। तस्मिन्नृक्षे सम्पूर्णमण्डलः पौर्णमासीगतश्चन्द्रो यदा गुरुणा संयोगं याति गुरुरपि तस्मिन्नृक्षे तिष्ठतीत्यर्थः तदा सा तिथिः पौर्णमासी महती स्मृता महाकार्त्तिकी महामार्गशीर्षी महापौषीत्यादयः स्युः।

तथा ज्योतिषे,—

वशिष्ठौ यत्र दृश्येते दिवि चन्द्रबृहस्पती ।

पौर्णमासी तु महती सर्व्वपापहरा तिथिः ॥

तथा,—

चन्द्रमा मासनक्षत्रं देवाचार्य्यस्तथैव च ।

मिलन्ति द्वादशाब्दान्ते तन्महत्वं तिथेः स्मृतम् ॥

रोहिणीनक्षत्रयोगेऽपि महाकार्त्तिकी महाब्रह्मपुराणे,—

आग्नेयन्तु यदा ऋक्षं कार्त्तिक्यां भवति क्वचित् ।

महती सा तिथिः प्रोक्ता स्नानदानेषु चोत्तमा ॥

यदा याम्यं हि भवति ऋक्षं तस्यां तिथौ क्वचित् ।

तिथिः सापि महापुण्या मुनिभिः परिकीर्त्तिता ॥

प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।

सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ॥

प्राजापत्यं रोहिणी । महाज्यैष्ठीविशेषमाह राजमार्त्तण्डे,—

ऐन्द्रे शशी गुरुश्चैव प्राजापत्ये रविस्तथा ।

पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्त्तिता ॥

१[ऐन्द्रं ज्येष्ठा, प्राजापत्यं रोहिणी, गुरुवारे] रोहिणीस्थरवी चेति महाज्यैष्ठीफलभूयस्त्वप्रदर्शनपरं महत्वन्तु चक्षमाणसाधारण-लक्षणादेवेति ।

अतएव नानामुनिवचनेषु गुरुवाराद्यतिरेकेणापि योग उक्तः ।

---

१ ख पुस्तके, [ ] चिह्नितांशो नास्ति ।

यथा व्याघ्रः,—

ऐन्द्रे[1] चन्द्रेऽथवा मैत्रे गुरुचन्द्रौ यदा स्थितौ।
पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता॥

ऐन्द्रं ज्येष्ठा मैत्रमनुराधा, अत्र गुरुवारादियोगो नोक्तः। अनु-राधास्थितयोरपि गुरुचन्द्रयोर्महाज्यैष्ठीति योगान्तरमप्युक्तम्।

तथा ज्योतिषे,—

ऐन्द्रे मैत्रे यदा जीवस्तत्पश्चदृश्यके रविः।
पूर्णिमा शक्रचन्द्रेण महाज्यैष्ठी प्रकीर्त्तिता॥

ऐन्द्रस्य पश्चदृश्यचतुर्थं मृगशिरा, मैत्रस्य पश्चदृश्यं रोहिणी। अतः सौराषाढ़ेऽपि कदाचित् स्यात्।

अतएव कालविवेके,—

[2][ऐन्द्रे चन्द्रसुराचार्य्यौ वृषे युग्मेऽथवा रवौ।
पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्त्तिता॥

युग्मे मिथुने इत्यर्थः। राशिद्वयेऽपि रोहिणीमृगशिरसोर-न्यतमस्थे रवावेव पूर्व्ववचनात्।

तथा],—

ऐन्द्रे चन्द्रसुराचार्य्यौ सौम्ये धातरि वा रविः।
पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता॥

योगान्तरमाह राजमार्त्तण्डे,—

संवत्सरे यदा वर्षे ज्यैष्ठमासस्य पूर्णिमा।
ज्येष्ठाभेन समायुक्ता महाज्यैष्ठी भवेत्तदा॥

---

१ ख ऐन्द्रे। २ ख पुस्तके, [ ] चिह्नितांशो नास्ति।

संवत्सरप्रभृतिके वर्षे च च वार्हस्पत्यमानतया वत्सरपञ्चकस्य प्रथमवर्षो ज्योतिःशास्त्रे प्रसिद्धः ।

तथा विष्णुधर्मे,—

संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः ।
इद्वत्सरस्तृतीयोऽत्र चतुर्थश्चानुवत्सरः ॥
उद्वत्सरस्तु कथितस्तथा चैवात्र पञ्चमः ।

तीर्थविशेषेषु महामाघ्यादीनां फलमाह भविष्ये,—

महामाघी प्रयागे तु नैमिषे फाल्गुनी तथा ।
शालग्रामे महाचैत्री कृताः स्युः शुभदाफलाः ॥
गङ्गाद्वारे तु वैशाखी ज्येष्ठी तु पुरुषोत्तमे ।
आषाढी वै कनखले केदारे श्रावणी तथा ॥
महाभाद्री बदर्याञ्च कुब्जाम्रे च महाश्विनी ।
पुष्करे कार्त्तिकी कान्यकुब्जे मार्गशिरी तथा ॥
अयोध्यायां महापौषी कृताः स्युः शुभदाफलाः ।

शालग्रामतीर्थे मध्यस्थां फाल्गुनादिष्वपि महत्त्वमनुवध्यते ।

भविष्ये,—

महाज्येष्ठ्यान्तु यः पश्येत् पुरुषः पुरुषोत्तमम् ।
विष्णुलोकमवाप्नोति मोक्षं गङ्गानुमज्जनात् ॥
महाज्यैष्ठी सुरश्रेष्ठ कृतानन्तफलप्रदा ।
तस्यान्तु जाह्नवीस्नानं सूर्य्यपर्व्वशताधिकम् ॥

तथा,—

महाज्येष्ठ्यान्तु संदृश्य पुरुषः पुरुषोत्तमम् ।

परावरान् समुद्धृत्य न भूयः पुरुषो भवेत् ॥
महाज्यैष्ठ्यां नरो दृष्ट्वा सबलं पुरुषोत्तमम् ।
अर्द्धभ्रमांशकं सर्व्वान् पितॄंस्तारयतेऽचिरात् ॥

वाद्मिमाख्ये,—

कृष्णं दृष्ट्वा महाज्यैष्ठ्यां रामं भद्रां च भो द्विजाः ।
नरो द्वादशयात्रायाः फलं प्राप्नोति चाधिकम् ॥
पृथिव्यां सर्व्वतीर्थेषु सर्व्वेष्वायतनेषु च ।
यत् फलं स्नानदानेन राहुग्रस्ते निशाकरे ॥
तत् फलं कृष्णमालोक्य महाज्यैष्ठ्यां लभेन्नरः ।

अथामावस्याकृत्यम् ।

विष्णुपुराणे,—

न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः ।
इन्दुक्षये मासि मासि प्रायश्चित्तीयते हि सः ॥

भविष्ये,—

दर्शे स्नात्वा पितृभ्यस्तु दद्यात् कृष्णतिलोदकम् ।
श्राद्धञ्च विधिवद्दद्यात् सन्ततिस्तेन वर्द्धते ॥

वायुपुराणे,—

अमावस्यां प्रयत्नेन श्राद्धं कुर्व्वन् शुचिः सदा ।
सर्व्वान् कामानवाप्नोति स्वर्गञ्चानन्त्यमश्नुते ॥

मात्स्ये,—

यमां चावत्सरेणैव पञ्चदश्यां यथोक्तः ।
समाप्ते श्राद्धकृद्दाद्य दद्यात् वत्सपयस्विनीः ॥

यावन्ति रुधिराण्येव जलबुद्बुदकानि च।
स याति वैष्णवं लोकं पितृणान्तारयेच्छतम्॥
कल्पान्ते राजराजः स्यात् पितृव्रतमिदं स्मृतम्।
पञ्चदश्यमामावास्या पितृव्रतत्वात्॥

अथ तिथिनिषिद्धानि।

राजमार्त्तण्डे,—

प्रतिपद्यनपत्यः स्यात्तृतीयायामपत्नीकः।
दशम्यामधनः स्नाने सर्व्वं हन्ति त्रयोदशी॥
भोगार्थं क्रियते यत्तु स्नानं यादृच्छिकं नरैः।
तन्निषिद्धं दशम्यादौ नित्यनैमित्तिकादृते॥

व्यासः,—

दशमी नवमी चैव प्रतिपच्च त्रयोदशी।
तृतीया तु विशेषेण स्नाने चैता विवर्ज्जयेत्॥

स्त्रियाः स्नाननिषेधमाह गार्ग्यः,—

नवमी पुत्रनाशाय स्वनाशाय त्रयोदशी।
तृतीया भर्त्तृनाशाय स्नाने ता वर्ज्जयेत्ततः॥
द्वादश्यां कृष्णपक्षे तु न स्नातव्यं कदाचन।
घृतस्नानमिच्छद्भिरपवर्गपरैरपि॥

जाबालः,—

त्रयोदश्यां तृतीयायां दशम्याञ्च विशेषतः।
शूद्रविट्क्षत्रियाः स्नानं नाचरेयुः कथञ्चन॥

व्यासः,—

गन्धायां वत्सरेऽतीते निर्वर्त्त्य चापि मङ्गलम् ।
अनुज्ञाप्य सुहृद्वर्गान् पूजयित्वेष्टदेवताः ॥
धर्मविज्ञाचरेत् स्नानमाह्निकञ्च पुनः पुनः ।
तर्पणं वैश्वदेवञ्च ब्रह्मयज्ञञ्च नाचरेत् ॥

निगमः,—

नावर्त्तयेत् पुत्त्रकर्म्म तर्पणादिकमब्दकम् ।
काम्यनैमित्तिके हित्वा एकं श्लोकञ्च वाचरे ॥

एकं केवलं । षट्त्रिंशन्मतम्,—

दर्शे स्नानं न कुर्व्वीत मातापित्रोस्तु जीवतोः ।
नवम्याञ्च न चैत्रञ्च निमित्तान्तरसम्भवः ॥

सर्व्व एवायं निषेधो भोगार्थस्नान एव न वैधस्नाने, अन्यथा-चरितार्थस्य वैधबाधाक्षमत्वात् ।

अतएव वशिष्ठः,—

पुत्त्रजन्मनि संक्रान्त्यां श्राद्धे जन्मदिने तथा ।
नित्यस्नाने च कर्त्तव्ये तिथिदोषो न विद्यते ॥

वचनमिदं वैधस्नानोपलक्षकं उक्तयुक्तेः । अतएव राजमार्त्तण्डे नित्यनैमित्तिकाद्बहिरित्युक्तम् ।

राजमार्त्तण्डे,—

प्रतिपच्च द्वितीया च दशमी च चयोदशी ।
तक्रस्नानं न कुर्व्वीत यदीच्छेदात्मनो हितम् ॥

तक्रस्नानं रोगामुक्तिस्नानम् ।

बौधायनः,—

अमावास्यां नवम्याञ्च सप्तम्याञ्च विशेषतः ।
धात्रीफलानि यत्नेन दूरतः परिवर्ज्जयेत् ॥

षट्त्रिंशन्मतम्,—

दर्शे नवम्यां सप्तम्यां संक्रान्तौ रविवासरे ।
चन्द्रसूर्य्योपरागे च स्नानमामलकैस्त्यजेत् ॥

भविष्ये,—

तिलैः स्नानं महापुण्यं कुर्य्यादामलकैः प्रिये[1] ।
सप्तमी नवमी दर्शे रविसंक्रमणादृते ॥
तुष्यत्यामलकैर्विष्णुरेकादश्यां विशेषतः ।
सर्व्वकालं तिलैः स्नानमिति व्यासोऽब्रवीन्मुनिः ॥

तथा,—

नवम्यां न स्पृशेत्तैलं नीलीवस्त्रं न धारयेत् ।
न चाप्यामलकैः स्नायात् न कुर्य्यात् कलहं नरः ॥

शातातपः,—

षष्ठ्यष्टमी पञ्चदशी उभौ पक्षौ चतुर्द्दशी ।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे ॥
षष्ठ्यां तैलमनायुष्यमष्टम्यां पिशितं तथा ।
क्षुरकर्म्म चतुर्द्दश्यां तथा पर्व्वसु मैथुनम् ॥

षष्ठ्यादिषु यथासंख्येन तैलादिनिषेधो न तु समुदायेनेति विवृणोति षष्ठ्यां तैलमनायुष्यमित्यादि, अन्यथा एतद्वचनस्य वैयर्थ्य-

---

१ ख पुस्तके, शिवे ।

त्वयुः। तर्ह्यष्टम्यादिषु तैलमांसादीनां कथं वर्ज्जनमिति चेद्वचनान्तरादिति ब्रूमः।

यथा विष्णुपुराणे,—

चतुर्द्दश्यष्टमी चैव अमावस्याथ पूर्णिमा।
पर्व्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च॥
स्त्रीतैलमांससम्भोगी पर्व्वस्वेतेषु वै पुमान्।
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः॥

तर्हि किमर्थं शातातपवचने यथासंख्यविधानं, सत्यं, षष्ठ्यां तैलमात्रनिषेधार्थं अष्टम्यादिषु मांसादीनां निन्दातिशयार्थञ्च। अतएवानेकवचनेषु षष्ठ्यां तैलमात्रनिषेधः श्रूयते।

यथा भविष्ये,—

प्रतिपत्सु नवम्याञ्च षष्ठ्यां पञ्चसु पर्व्वसु।
अभ्यङ्गञ्च पादाद्येस्तैलं नैव स्पृशेन्नरः॥

स्मृतिसमुच्चये,—

पक्षादौ च रवौ षष्ठ्यां रिक्तायाञ्च तथा तिथौ।
तैलेनाभ्यञ्जमानस्तु चतुर्भिरपि हीयते॥
उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः।
यावत्तिष्ठति श्रीता यावत्तैलं न संस्पृशेत्॥
रवौ रविवारे चतुर्भिरायुःप्रज्ञाधनधोवर्णैः।

अङ्गिराः,—

दन्तकाष्ठममावस्यां चतुर्द्दश्यान्तु मैथुनम्।
षष्ठ्यां तैलं तथाष्टम्यां पिशितं वर्ज्जयेत् सदा॥

मनुः,—

मांसाशने पौर्णमासी तैलाभ्यङ्गे चतुर्द्दशी।

अष्टमी ग्राम्यधर्म्मे च व्यवन्तमपि पातयेत्॥

ग्राम्यधर्म्मो मैथुनं व्यवन्तमपि पातयेदित्यनेन निन्दातिशय उक्तः।

देवलः,—

पञ्चदश्यां चतुर्द्दश्यामष्टम्याञ्च विशेषतः।

तैलं मांसं व्यवायञ्च क्षुरकर्म्म च वर्ज्जयेत्॥

बौधायनः,—

पर्व्वसु नाधीयीत न स्त्रियमुपेयात् न मांसमश्नीयात् न तैलं स्पृशेत् न क्षुरकर्म्माचरेत्।

पैठीनसिः,—

पर्व्वसु न तैलं न मैथुनं न क्षुरं न मांसमुपेयात् नामावस्यायां हरितमपि छिन्द्यात्।

हारीतः,—

तैलं मांसं भगं क्षौरं सर्व्वपर्व्वसु वर्ज्जयेत्।

पर्व्वसु लक्ष्मीर्वसति तैले मांसे भगे क्षुरे॥

एतेषु वचनेषु पर्व्वसु स्त्रीतैलमांसक्षुरकर्म्मणां सर्व्वेषां निषेधः, षष्ठ्यान्तु तैलमात्रस्यैवेति। एतेन केषाञ्चित् षष्ठ्यामपि स्त्रीमांसवर्ज्जनभ्रमो हेय एवेति।

स्मृतिसमुच्चये,—

सायंसन्ध्यां पराह्णञ्च श्राद्धापिष्टं तथैव च।

अमावास्यां न सेवेत रात्रिभोजनमैथुने॥

भविष्ये,—

सायंसन्ध्यां पराश्च पुनर्भोजनमैथुनम्।
तैलं मांसं शिलापिष्टममावास्यां विवर्ज्जयेत्॥

षट्‌त्रिंशन्मतम्,—

संक्रान्त्यां पञ्चदश्याञ्च द्वादश्यां श्राद्धवासरे।
वस्त्रं न पीडयेन्नैव क्षारेणापि च धोजयेत्॥

भविष्ये,—

निम्बस्य भक्षणं तैलं तिलैस्सर्षपमज्जनम्।
सप्तम्यां नैव कुर्व्वीत कांस्यपात्रे च भोजनम्॥
सप्तम्यां स्पृशतस्तैलमिष्टा भार्य्या विनश्यति।
शिरःकपालमन्त्राणि नखचर्म्मतिलांस्तथा।
एतानि क्रमशो नित्यमष्टम्यादिषु वर्ज्जयेत्॥

शिरो नारिकेलमष्टम्यां कपालमलाबु नवम्यां चर्म्म कलम्बिकां दशम्यां नखं शिम्बिकामेकादश्यां [चर्म्म पूतिकां द्वादश्यां] तिलान् वार्त्ताकुं चयोदश्यां वर्ज्जयेत्। नारिकेलादीनां शिरःकपालादि-सादृश्यात्तद्व्यपदेशः वार्त्ताकुवीजानां तिलसादृश्यम्। अस्मादेव तिथिविशेषनिषेधादन्यच कलम्बीभक्षणं प्रतीयते सामान्यनिषेधस्तु दीर्घव्रतासतानरककलम्बीपर इति प्राञ्चः। दोषविशेषार्थस्तिथिवि-शेषनिषेध इत्यन्ये।

वामनपुराणे,—

षिषासु यस्ते भवणे च तैलं

१ ख पुस्तके, [ ] चिह्नितांशो नास्ति।

चौरञ्च षष्ठ्यां प्रतिपत्सु वर्ज्यम्।
मूले मघे भाद्रपदासु मांसं
योषिद्मघात्रिककृत्तिकासु॥
नाभ्यङ्गमर्के न च भूमिपुत्रे
क्षौरन्तु शुक्रे च कुजे च मांसम्।
बुधे च योषां न समाचरेत
शेषेषु सर्व्वाणि सदैव कुर्य्यात्॥

ज्योतिषे,—

दुःखनाशो धनं नाशो मृत्युर्वित्तं सपत्नतः।
आयुरर्कादिवारेषु तैलाभ्यङ्गाद्यथाक्रमं॥

गार्ग्यः,—

पञ्चमी दशमी चैव तृतीया च चयोदशी।
एकादशी द्वितीया च पक्षयोरुभयोरपि॥
अभ्यङ्गसर्व्वनारीभ्योऽत्र तैलं निषेवते।
चतुर्णां तस्य वृद्धिः स्याद्धनापत्यबलायुषाम्॥

अथ कतैलशब्दार्थः। तत्र केचित् केवलमाचे तैलपदं रूढं सर्षपैरण्डकरञ्जतैलादिप्रयोगात् शिंशुमारतैलादिप्रयोगाच्च, तत्र, घृतेऽपि तैलपदप्रयोगप्रसङ्गात्।

अन्ये तु बीजभवस्नेहे रूढं प्राणिभवस्नेहे तु तैलपदं भाक्तमिति वदन्ति, तदपि मन्दं वैपरीत्यस्य सुवचत्वात्।

वस्तुतस्तु तिलभवस्नेहे यौगिकं तैलपदं, न च तिलमोदकादि-ष्वतिप्रसङ्ग इति वाच्यं पङ्कजशब्दे पद्मवत् केवलस्य प्रयोगोपाधि-

रिति। यथावयवशक्तेर्विलम्बितप्रतीतिकत्वेन बाधवात् बीजप्रभव-बोधे वर्षासु रथकार आदधीतेतिवदिति वाच्यं क्लृप्तयोगबाधे रूढ़िकल्पनाया अन्याय्यत्वात्[1] कल्पनागौरवात्।

तदुक्तं भट्टपादैः,—

क्लृप्तात्मिका सती रूढ़िर्भवेद्योगापहारिणी।

कल्पनीया तु लभते नात्मानं योगबाधतः॥ इति।

अतएव प्रोक्षणीरासादयेदित्यत्र प्रोक्षणीपदं न संज्ञानामपरूढं किन्तु प्रोक्षणकरणयोगाद्यौगिकमेवेत्युक्तं वर्षासु रथकार आदधीतेत्यत्र तु सङ्करजातिविशेषे रथकारशब्दस्य रूढ़िः क्लृप्तेति न यौगिकरथकर्तृत्रैवर्णिकपरता अवयवशक्तिविमर्षात् विलम्बितप्रतीतेरतः क्लृप्तरूढ़ेरेव योगापहारित्वम्।

तथाचोक्तं रूढ़िर्योगं व्यपहन्तीति।

कल्पनीया तु रूढ़िर्न क्लृप्तं योगं बाधितुमीष्टे सर्षपस्निग्धत्वा-दिति सार्षपादिस्नेहे तैलपदं लाक्षणिकं अतएव तत्र सार्षपं तैल-मित्यादिविशेषणपदप्रयोग एव, निरुपपदतैलपदन्तु तिलभवस्नेह एव प्रतीतिकृदित्यतस्तत्रैव विधिनिषेधाविति।

यत्तु दत्तप्रदीपः प्रथमस्तिलतैलोद्भवस्तत इत्यादौ तिलतैलपदं बोधे तिलञिति पाणिनिसूत्रात् स्नेहानुविधितेन तैलच् प्रत्ययेन सिद्धं अतएव तु यस्य यवा भ्रातुः प्रजावतीत्यादिवत् तिलस्य तैलमिति प्रयोगोऽप्युक्त एव। एतानि तैलानि हेमन्ते सुखानी-

---

१ ख पुस्तके, अनार्य्यत्वात्।

वा यह चन्द्रस्य नक्षत्रपादचतुष्टयाभ्यन्तरे अवस्थानं स्यात् तदैव चन्द्रग्रहणं नान्यथेति।

एवं राहुणा केतुना वा यह नक्षत्रपादद्वयाभ्यन्तरे सूर्य्यावस्थानं यदि स्यात्तदेव सूर्य्यग्रहणं नान्यथा तथापि कदाचिद्व्यभिचारो गणनया निर्णेयः सा च गणना ज्ञातकार्य्यतया मया विवृतेति।

विष्णुधर्म्मोत्तरे राहुं प्रति मत्स्यवाक्यम्,—

पर्व्वकाले च सम्प्राप्ते चन्द्रार्कौ छादयिष्यति।
भूमिच्छायागतश्चन्द्रं चन्द्रगोऽर्कं कदाचन॥
संछादयिष्यसि यदा तदा प्रीतिमवाप्स्यसि।
स्नाने जप्ये तथा दाने होमे श्राद्धे सुरार्च्चने॥
पुण्यः स कालो भविता नित्यमेवासुरेश्वर।

प्रीतिं प्रीतिं पर्व्वकाल इत्यभिधानात् अपर्व्वण्युत्पातग्रहणस्य न पुण्यकालत्वमित्यभिहितम्। अथ चन्द्रसूर्य्योपरागस्य निमित्तत्वं प्रतीयते।

तथा शातातपः,—

अयने विषुवे[1] चैव चन्द्रसूर्य्यग्रहे तथा।
अहोरात्रोषितः स्नात्वा सर्व्वपापैः प्रमुच्यते॥

मत्स्यपुराणे,—

नित्यं द्वयोरयनयोस्तथा विषुवतोर्द्वयोः।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्व्वसु॥

---

१ ख पुस्तके, विषुवे।

अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम्।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयञ्च तत्॥

नित्यं सर्व्वदा साधारणादिनिमित्तकालेष्वपीत्यर्थः। अहोरात्रो-षितः पूर्व्वं दिने कृतोपवासः[1] इत्यर्थः। अतीतार्थक्तप्रत्ययनिर्देशात् इदन्तु नावश्यकं किन्तु फलभूमार्थं फलविशेषोक्तेः।

तथा ज्योतिःशास्त्रे,—

यस्त्रिरात्रमुपोष्यैव ग्रहणे चन्द्रसूर्य्ययोः।
स्नात्वा दत्त्वा च विधिवन्मोदते ब्रह्मणा सह॥
एकरात्रमुपोष्यैव स्नात्वा दत्त्वा च भक्तितः।
कञ्चुकादिव सर्पस्य निष्कृतिः पापकोषतः॥

व्यासः,—

ग्रस्ते सूर्य्ये तथा चन्द्रे यस्तु श्राद्धं प्रकल्पते।
तेनेयं सकला पृथ्वी दत्ता विप्रस्य वै करे॥

छन्दोगपरिशिष्टम्,—

स्वर्धुन्यम्भःसमानि स्युः सर्व्वाण्यम्भांसि भूतले।
कूपस्थान्यपि चन्द्रार्कग्रहणे नात्र संशयः॥

गारुड़े,—

चन्द्रसूर्य्यग्रहे चैव योऽवगाहेत जाह्नवीम्।
स स्नातः सर्व्वतीर्थेषु किमर्थमटते महीम्॥

इत्यादिनानामुनिवचनेषु ग्रहणमात्रनिमित्तता प्रतिपाद्यते वैदिके तु कर्म्मणि ज्ञातस्यैव निमित्तत्वं कृतं चन्द्रयाऽयत्नकल्पतया

१ ख पुस्तके, पूर्व्वदिनकृतोपवासः।

पुरुषप्रवृत्तेरभावात्, अथवा नैमित्तिके निमित्तनिश्चयवानधिकारी भवतीति[१] निमित्तज्ञानमवश्यमपेक्षणीयं तच ज्ञानं चाक्षुषमेव दर्शनप्रतिपादकं बहुतरवचनात्।

यथा शातातपः,—

सर्व्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने।
अकुर्व्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति॥

यस्याल्पधनस्य श्राद्धकरणेन सर्व्वस्वव्ययो भवति तेनापि कर्त्तव्यं एतेन पङ्के गौरिव सीदतीत्यनेन च श्राद्धस्य नित्यत्वं दर्शितम्।

यमः,—

स्नानं दानं जपः श्राद्धमनन्तं राहुदर्शने।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्ज्जयेत्॥

विष्णुः,—

सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः।
तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम्॥
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्।
गुणवत् सर्व्वकामीयं पितॄणामुपतिष्ठते॥

देवलः,—

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।
स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च॥

पराशरः, -

दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते।

---

१ ग पुस्तके, भवति पदं नास्ति।

अग्रग्रस्तं निमि स्नानं राहोरन्यत्र दर्शनात् ॥

इत्यादिषु दर्शनपदश्रवणात् दृशेश्च चाक्षुषज्ञान एव मुख्यत्वात् ज्ञानमात्रपरत्वे लक्षणाप्रसङ्गात् रात्रौ सूर्य्यग्रहे दिवा चन्द्रग्रहे च मेघाच्छन्नतया राहुदर्शनाभावे स्नानादिकं न कर्त्तव्यमेवेति निमित्तस्य चाक्षुषज्ञानस्याभावात् ।

अतएव ज्योतिषे,—

रात्रौ सूर्य्यग्रहश्चन्द्रग्रहो यदि भवेद्दिवा ।
अनादेश्यतमं रात्रौ यच्च सूक्ष्मतमं भवेत् ॥

न च,—

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥

इति मनुवचनात् दर्शननिषेधाद्दर्शनपदमत्र ज्ञानमात्रपरमिति वाच्यं, रागप्राप्तद्वितीयादिदर्शनमादाय निषेधस्य चरितार्थत्वात् वैधस्नानाद्यङ्गभूतप्रथमराहुदर्शनस्य निषेद्धुमशक्यत्वात् अङ्गस्यापि विधिप्रयुक्तत्वात् अन्यथा विरुद्धस्य वैधाङ्गत्वाक्षमत्वात् अतएव मा हिंस्यात् सर्व्वाभूतानीति रागप्राप्तहिंसैव निषिध्यते न तु पशु-यागाङ्गहिंसेति । तच्च चाक्षुषं स्नानादिकर्त्तुरेव प्रशस्तत्वात् आवश्यकञ्च, एवञ्च स्पष्टेऽपि ग्रासेऽपश्यतो नाधिकारः । कल्पतरु-कारस्यापि मतमेतत् ।

ननु स्नानादिक्रियाकाले सर्व्वदा दर्शनस्यासम्भवादतीतमेव ग्रहणदर्शनमधिकारसम्पादकं तदा च ग्रहणकालात् परमपि कथं स्नानादिकं न प्रवर्त्तेत दृष्टवतोऽधिकारात् ।

यथा,—

संक्रान्तेः पुण्यकालस्तु[1] षोड़शोभयतः कलाः।
चन्द्रसूर्य्यग्रहे चैव यावद्दर्शनगोचरः॥

इति आचारेण दर्शनयोग्यकालस्य पुण्यकालत्वप्रतिपादनात् योग्यता च पुनर्दर्शने शास्त्रोपजीव्यातिरिक्तबाधकमानाभावः स च मेघच्छटादिव्यवधानेऽप्यस्ति मेघाद्यपसरणेन पुनर्यावद्दर्शनस्य सम्भवात् मेघाद्याच्छन्नत्वेन दर्शनाभावस्यानुमानायोगात् दिवाचन्द्रग्रहरात्रिसूर्य्यग्रहयोस्तु दिवातनत्वादिना दर्शनाभावोऽनुमातुं शक्यत एव एवं ग्रासं दृष्टवतोऽपि पश्चात्तयोश्चन्द्रसूर्य्ययोः सत्यपि ग्रासे न कर्म्मानुष्ठानं पुनर्दर्शनबाधे प्रमाणसम्भवात्[2]। एतेन वर्त्तमानग्रहणस्यैव कर्म्माङ्गमित्युक्त्वा पश्चात्तदनन्तरमपि स्नानादिकं कर्त्तव्यमिति यत् कैश्चिदुक्तं तन्निरस्तम्। आचारेण यावद्ग्रहणमित्यनभिधाय यावद्दर्शनगोचर इत्युक्त्वा दर्शनयोग्यकालस्यैव प्रतिपादनात् दर्शनयोग्यता च दिवाचन्द्रग्रहरात्रिसूर्य्यग्रहयोर्नास्तीति सर्व्वसम्मतमेवेति।

अन्ये तु, प्रत्यक्षानपेक्षप्रतिबन्धकविरहो योग्यतेत्याहुः, तदयुक्तं दर्शनोत्तरं मेघच्छन्ने ग्रासेऽनधिकारः स्यात् मेघस्यापि प्रत्यक्षानपेक्षत्वात्।

यत्तु जीमूतवाहनेनोक्तं दर्शनपदं चक्षुर्मूलकज्ञानपरं चक्षुर्मूलता च ज्ञानस्य साक्षात् परम्परया वा ततश्चान्धस्यान्येन दृष्टाभिहिते

---

१ क पुस्तके, मुख्यकालस्तु।
२ ख पुस्तके, ॰सद्भावात्।

अप्रमत्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥

इत्यादिषु दर्शनपदश्रवणात् दृशेश्च चाक्षुषज्ञान एव मुख्यत्वात् ज्ञानमात्रपरत्वे लक्षणाप्रसङ्गात् रात्रौ सूर्य्यग्रहे दिवा चन्द्रग्रहे च मेघच्छन्नतया राहुदर्शनाभावे स्नानादिकं न कर्त्तव्यमेवेति निमित्तस्य चाक्षुषज्ञानस्याभावात्।

अतएव ज्योतिषे,—

रात्रौ सूर्य्यग्रहश्चन्द्रग्रहो यदि भवेद्दिवा।
अनादेयतमं रात्रे यत्र सूक्ष्मतमं भवेत् ॥

न च,—

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥

इति मनुवचनात् दर्शननिषेधाद्दर्शनपदमत्र ज्ञानमात्रपरमिति वाच्यं, रागप्राप्तद्वितीयादिदर्शनमादाय निषेधस्य चरितार्थत्वात् वैधस्नानाद्यङ्गभूतप्रथमराहुदर्शनस्य निषेद्धुमशक्यत्वात् अङ्गस्यापि विधिप्रयुक्तत्वात् अन्यथा विधेरस्य वैधाङ्गबाधकत्वात् अतएव मा हिंस्यात् सर्व्वाभूतानीति रागप्राप्तहिंसैव निषिध्यते न तु पशु-यागाङ्गहिंसेति। तत्र चाक्षुषं स्नानादिकर्त्तुरेव प्रकृतत्वात् वाच्यम्, एवञ्च स्पृष्टेऽपि ग्रासेऽपश्यतो नाधिकारः। कल्पतरु-कारस्यापि मतमेतत्।

ननु स्नानादिक्रियाकाले सर्व्वदा दर्शनासम्भवादतीतमेव ग्रहणदर्शनमधिकारसम्पादकं तदा च ग्रहणकालात् परमपि कथं स्नानादिकं न प्रवर्त्तेत दृष्टवतोऽधिकारात्।

यथा,—

संक्रान्तेः पुण्यकालस्तु[1] षोड़शोभयतः कला ।
चन्द्रसूर्य्यग्रहे चैव यावद्दर्शनगोचरः ॥

इति जाबालेन दर्शनयोग्यकालस्य पुण्यकालत्वप्रतिपादनात् योग्यता च पुनर्दर्शने शास्त्रोपजीव्यतिरिक्तबाधकमानाभावः स च मेघच्छन्नादिव्यवधानेऽप्यस्ति मेघाद्यपसरणेन पुनर्ग्रासदर्शनस्य सम्भवात् मेघाद्याच्छन्नत्वेन दर्शनाभावस्यानुमानायोगात् दिवाचन्द्रग्रहरात्रिसूर्य्यग्रहयोस्तु दिवातनत्वादिना दर्शनाभावोऽनुमातुं शक्यत एव एवं ग्रासं दृष्टवतोऽपि पश्चादस्तयोश्चन्द्रसूर्य्ययोः सत्यपि ग्रासे न कर्म्मानुष्ठानं पुनर्दर्शनबाधे प्रमाणसम्भवात्[2]। एतेन वर्त्तमानग्रहणस्यैव कर्म्माङ्गमित्युक्त्वा पश्चादस्तानन्तरमपि स्नानादिकं कर्त्तव्यमिति यत् केचिदुक्तं तन्निरस्तम् । जाबालेन यावद्ग्रहणमित्यनभिधाय यावद्दर्शनगोचर इत्युक्त्वा दर्शनयोग्यकालस्यैव प्रतिपादनात् दर्शनयोग्यता च दिवाचन्द्रग्रहरात्रिसूर्य्यग्रहयोर्नास्तीति सर्व्वसम्मतमेवेति ।

अन्ये तु, प्रत्यक्षानपेक्ष्यप्रतिबन्धकविरहो योग्यतेत्याहुः, तद्युक्तं दर्शनोत्तरं मेघच्छन्ने ग्रासेऽनधिकारः स्यात् मेघस्यापि प्रत्यक्षानपेक्ष्यत्वात् ।

यत्तु जीमूतवाहनेनोक्तं दर्शनपदं चक्षुर्मूलकज्ञानपरं चक्षुर्मूलता च ज्ञानस्य साक्षात् परम्परया वा तज्ज्ञाप्यज्ञान्येन दृष्टाभिषिति

---

१ क पुस्तके, मुख्यकालस्तु ।
२ ख पुस्तके, ०सम्भवात् ।

यच्चे स्नानाद्यधिकारः चाक्षुषज्ञानमूलाप्तवाक्यजन्यज्ञानयोगिनामिति । तन्मन्दम् । न हि दर्शनपदं चक्षुर्मूलकज्ञानवाचकं अनुमित्यादेरपि दर्शनपदार्थत्वापत्तेः किन्तु चक्षुर्विषयसन्निकर्षजज्ञानाभिधायकं तदा च चक्षुर्मूलकज्ञानपरत्वे लक्षणापत्तिरिति अतो नान्यस्याधिकारः ।

अन्ये तु, पूर्व्वोक्तयमविष्णुशातातपदेवलादिवचनेषु राहुदर्शनस्यैव निमित्तत्वमवगम्यते ततश्च नैमित्तिके निमित्तनिश्चयवानधिकारीति निमित्तस्य राहुविषयकचाक्षुषज्ञानस्य ज्ञानान्तरमपेक्षणीयं तदा च आप्तवाक्यादिप्रमाणेन राहुदर्शनरूपनिमित्तस्य निश्चयज्ञानान्तरसद्भाव एव स्नानदानादिकर्म्मणामधिकारः । यत्र चाक्षुषज्ञानमात्रं तत्र तथार्थव्यवसायरूपज्ञानान्तरसम्भवः अर्थव्यवसायाभावेन हि तत्र प्रमाणाभावात् । दिवाचन्द्रोपरागादिस्थले तु द्वीपान्तरवासिनां चाक्षुषज्ञानस्य शब्दादिप्रमाणावेद्यतया निश्चयाभावान्निमित्तत्वाभावः । ततो राहुमदृष्ट्वाप्यन्यदीयराहुविषयकचाक्षुषज्ञानं प्रमाणेनावधार्य्य स्नानादिकं कार्य्यं अतएव श्रीभागवते सूर्य्यग्रहणेऽस्मिन् धृतराष्ट्रस्य समागमनवर्णनं सङ्गच्छते इति नारायणोपाध्यायेनापि समयप्रकाशे ग्रहणस्नानादावन्यस्याधिकारोऽस्तीत्युक्तमित्याहुः ।

तदपि मन्दम् । यद्यपि पूर्व्वोक्तवचनेषु क्वचित् ग्रहणस्य क्वचित् राहुदर्शनस्य च निमित्तत्वमवगम्यते तथापि लाघवात् ग्रहणमेव निमित्तं न तु राहुदर्शनं तत्र ज्ञानान्तरापेक्षणेन गौरवप्रसङ्गात् तदा च नैमित्तिके निमित्तनिश्चयवानधिकारीति न्यायलभ्यं

निर्मूलमिति प्रतिभाति समूलत्वेऽपि निषेधोऽयं न सर्व्वसाधारणविषयः किन्तु विन्यस्तसमुच्चयवचनैकवाक्यतया रिष्टपरिहारेच्छुना जन्मादिचन्द्रे भिजन्मतारासु वैनाशिकनक्षत्रे च राहुर्नेक्षितव्य इति रिष्टपरिहारेच्छुविषय एव। तथापि ऐहिकाल्परिष्टदोषसहिष्णुना पश्चात् प्रतीकारेण तद्दोषप्रशमनेच्छुना वा स्नानदानश्राद्धादीनां पारलौकिकाक्षयफलाभिलाषुकेण राहुरीक्षितव्य एव।

न चानिष्टसाधने कथं प्रवृत्तिरिति वाच्यं बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानस्यैव प्रवर्त्तकत्वात्। दृश्यते हि लोके बलवदिष्टमिष्टान्नादिवाञ्छायां स्वल्पक्लेशसाधने पाकादौ प्रवृत्तिः तथा शास्त्रीये श्येनयागचिरात्रोपवासव्रतादावपि। अतएव रिष्टस्थले दर्शने प्रतीकारोऽपि वक्ष्यते।

अथवा वैधक्रियानधिकारिगोचरं रागप्राप्तदर्शनमादाय निषेधविधेश्चरितार्थत्वात् वैधस्नानाद्यङ्गभूतदर्शनं निषेद्धुं न शक्यते अङ्गस्यापि विधिप्रयुक्तत्वात् न च वैधस्य निषेधः किन्तु रागप्राप्तस्यैव अन्यथा विरुद्धस्य वैधवाधाक्षमत्वात् अतएव न पशुयागाङ्गहिंसावाधः। तथा नोपसृष्टमिति मनुवचनात् रागप्राप्तद्वितीयादिदर्शनस्यैव निषेधो न वैधस्येति प्रागुक्तम्।

न च जन्मराश्यादिगतचन्द्रादिव्यतिरिक्तस्थले राहुरीक्षितव्य इति पर्य्युदासः, भवेदेवं यदि वीक्षणविधिर्मुख्यः स्यात् न च तथा वीक्षणस्यानुपादेयत्वात् किन्तु वीक्षणानन्तरं स्नानदानादीनामुपादेयत्वात्तेष्वेव विधिप्रवृत्तेः, दृश्यते च सर्व्वत्र स्नानदानादिष्वेव विधिः। किञ्च उक्तप्रकारेण निषेधविधिसम्भवे पर्य्युदासलक्षणा अन्याय्यैवेति।

ग्रहणे च ग्रावाशौचतुल्यमशौचं विमुक्तौ जन्माशौचतुल्य-मशौचम्।

यथा ब्रह्माण्डपुराणे,—

ग्रहणे शावमाशौचं विमुक्तौ सौतिकं स्मृतम्।

तयोः सम्पत्तिमात्रेण उपस्पृश्य क्रियाक्रमः॥

तयोरशौचयोरुपस्पृश्य स्नात्वेत्यर्थः सम्पत्तिमात्रेणेत्यभिधानादन-न्तरक्षण एव स्नानं न तु विलम्बः कार्य्यः।

अतएव ग्रस्तास्ते सूर्य्ये रात्रौ मुक्तिं निर्णीय स्नातव्यम्। भोजनन्तु परदिनस्नानानन्तरमेवेति वक्ष्यते ग्रहणे ग्रहणदर्शने इत्यर्थो वक्ष्यते तेन ग्रहणदर्शने यच्छावाशौचं तत्र स्नानान्निवृत्तिः अन्यथा विमुक्तावशौचान्तरविधानमनर्थकं स्यात्।

यत्तु,—

सूतके मृतके चैव सूतकं राहुदर्शने।

इति लिङ्गपुराणवचनं तद्दृष्टापि रागादिना स्नानाकर्त्तुरशौचं बोधयति।

वस्तुतस्तु,—

तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते।

इत्युत्तरार्द्धपर्य्यालोचनया सूतके मृतके नैव सूतकमित्येव पाठो जननमरणाशौचापवादक इति वक्ष्यते।

तेनादौ मज्जनरूपं शुद्धिस्नानं कृत्वा [1][वक्ष्यमाण काम्यवैधस्नान-

---

१ ख पुस्तके, चिह्नितांशो नास्ति।

दानादि] क्रिया[1] कार्य्या पुनरपि विमुक्तौ जन्माशौचं तथापि स्नानाभिषक्तौ क्रिया कर्त्तव्या ग्रस्तास्ते मुक्तिस्नानानन्तरक्रिया-कर्त्तव्यतोपदेशात् ग्रस्तास्ते चन्द्रे गणितागतमुक्तिकालं निर्णीय शुद्धिस्नानं कृत्वा तर्पणदेवार्च्चानित्यश्राद्धादिकं कार्य्यमेव वक्ष्यमाण-वचनात्तु भोजनस्यैव तत्र चन्द्रोदयपर्य्यन्तं निषेधः ।

वृद्धाश्च पठन्ति,—

यदैवास्तङ्गतश्चन्द्रो राहोरागतगोचरः ।
आलोच्य मुक्तिकालन्तु स्नात्वा कार्य्या क्रिया बुधैः ॥

एवञ्च मेघाच्छन्नतया मुक्तदर्शनेऽपि मुक्तिकालं निर्णीय शुद्धिस्नानं कृत्वा देवार्च्चादिकं भोजनञ्च कार्य्यं तत्रापि दर्शनापेक्षा वचनाभावात् ।

अतएव देववचने ग्रस्तास्तएव विशेषो वक्ष्यते एवञ्च चिर-दिनमेघावरणेऽतिप्रसङ्गदोषोऽपि परिहृतः ।

अतएव पठन्ति,—

मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते ।
आकलय्य तु तं कालं भुञ्जीत स्नानपूर्व्वकम् ॥

अथ ग्रासाशौचजन्माशौच[2] तुल्यताभिधानात् तदन्तरविमुक्तौ पाकस्थालीपकान्नयोस्त्यागः ।

अतएव षट्त्रिंशन्मतम्,—

सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने ।

---

१ ग तर्पणक्रिया ।

२ ख पुस्तके, जन्माशौचपदं नास्ति ।

स्नात्वा कर्माणि कुर्वीत सूतकं विवर्जयेत् ।

एवञ्च ग्रस्तादर्शिनापि स्नानोपवासयोस्त्यागः स्नानञ्च कार्य्यं मुक्तिमात्रस्यैव जननाशौचातिदेशनिमित्तत्वप्रतिपादनात्, शावाशौचातिदेशनिमित्तता तु ग्रस्तदर्शनस्यैव षट्त्रिंशन्मतवचनात् ।

ग्रस्तमात्रस्य निमित्तत्वे मेघाच्छन्ने दर्शनात् शावाशौचं प्रसज्येत। शावाशौचातिदेशफलन्तु तत्कालस्पृष्टान्नजलभाण्डपरित्याग-सचेलस्नानादि । अतएव ग्रस्तदर्शनस्नानं मुक्तिस्नानस्याशौचान्तर-साघमर्षणपूर्वकसचेलमज्जनरूपमेव, ग्रहणे स्नानन्तु मध्याह्नस्नान-विधिकं सतर्पणमेव । तेन,—

अहोरात्रञ्च नाश्नीयाच्चन्द्रसूर्य्यग्रहो यदा ।
मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः ॥
सूर्य्याचन्द्रमसोर्लोकानक्षयान् याति मानवः ।
धौतपाप्मा विशुद्धात्मा मोदते दिवि देववत् ॥

इति शातातपेन स्नानं कृत्वा विधानत इति यदुक्तं तदशौचान्त-विधानतो मन्तव्यं।

अथ तद्दिने भोजनविधानात् अहोरात्रञ्च नाश्नीयादिति पूर्व्वदिनोपवासविधायकं काम्यं।

अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम् ।
यः करोति प्रयतात्मा तस्य स्यादक्षयञ्च तत् ॥

इति पूर्व्वोक्तब्रह्मपुराणवचनसमानार्थं सूर्य्याचन्द्रमसोर्लोका-नित्यादिना फलकथनात् ।

अतएव मुक्तिं दृष्ट्वा तु भुञ्जीतेति मुक्तिदर्शनमपि काम्याधि-

कारिविषयं तेन कामिना दर्शनाभावे न भोक्तव्यं । ग्रहणे च काम्योपवासः पुत्रवता गृहिणा न कार्य्यः ।

संक्रान्तौ रविवारे च ग्रहणे चन्द्रसूर्य्ययोः ।
पारणञ्चोपवासञ्च न कुर्य्यात् पुत्रवान् गृही ॥

इति ब्रह्मपुराणे पारणोपवासयोर्निषेधात् ।
ब्रह्मपुराणे,—

नाश्नीयादथ तत्काले ग्रस्तयोश्चन्द्रसूर्य्ययोः ।
मुक्तयोस्तु कृतस्नानः पश्चात् कुर्य्यात् स्ववेश्मनि ॥

तत्काले ग्रहणकाले, कुर्य्यादित्यत्राशनमिति सम्बध्यते अश्नीयादिति प्रत्ययविपरिणामेनान्वयात् । स्ववेश्मनीति पराग्नभोजननिषेधपरं । अत्र मुक्तयोरित्यभिधानात् कदाचिन्मेघादिमुक्तदर्शनेऽपि मुक्तिमनुमाय स्नात्वा भोजनादिकं कार्य्यमिति प्रागुक्तं, ग्रस्तास्ते तु वचनादेव भोजननिषेधः ।

यथा देवलः ।

चन्द्रसूर्य्यग्रहे नाद्यादद्यात् स्नात्वा विमुक्तयोः ।
अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेऽहनि ॥

अद्यात् स्नात्वा विमुक्तयोरिति नायं भोजनविधिः रागप्राप्तत्वात् नचावश्यं भुञ्जीतैवेति नियमविधिः पुत्रवद्गृहिगोचरत्वेनोपवासनिषेधवैयर्थ्यात् सर्व्वेषामेव भोजनस्यावश्यम्भावनियमात् ततश्च परिसंख्येयं मुक्तयोः सतोः स्नात्वैवाद्यात् न तु स्नानात् पूर्व्वमिति ।

अत्र विमुक्तयोरित्यभिधानात् मुक्तिनिर्णयमात्रं निमित्तं न तु दर्शनापेक्षेति प्रागुक्तं । एवञ्च ग्रस्तास्तेऽपि मुक्तिनिर्णयात् परं

भोजनप्राप्तावपवादमाह चन्द्रार्कयोरस्तमयोरिति यथोदयनिर्णयात् परमेव भोजनं न तु मुक्तिनिर्णयात् परमित्यर्थः। शुद्धेत्यस्य उदयं निरीक्ष्येत्यर्थो वक्ष्यते।

एवञ्च चन्द्रग्रहे वक्ष्यमाणवचनात्तद्दिने प्रातर्भोजनं परदिने तु रात्रावुदयं निरीक्ष्य स्नात्वा भोजनं सूर्य्यग्रहे तु तत्प्रागपि भोजननिषेधात्तद्दिने उपवास एव परदिने तूदयनिर्णयात् परं स्नात्वा भोजनमिति। अयञ्चोपवासः पुत्रवद्गृहिणामपि, काम्यरागप्राप्तोपवासमादाय निषेधविधेश्चरितार्थत्वात् अतिक्रमे चास्य प्रत्यवायस्तस्योपवासस्य बाधाक्षमत्वात्।

विष्णुधर्म्मोत्तरे,—

चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव।
ग्रहणन्तु भवेत्तत्र तत्पूर्व्वां भोजनक्रियाम्॥
नाचरेत् ग्रग्रहे चैव तथैवास्तमुपागते।
यावत् स्यादुदयस्तस्य नाश्नीयात्तावदेव तु॥
मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा परेऽहनि।
दिवैकं रात्रौ चापरमिति भोजनद्वयं विहितम्।

तत्र सूर्य्यग्रहात् पूर्व्वं दिवाभोजनं न कुर्य्यात् रात्रेः पूर्व्वार्द्धे[१] चन्द्रग्रहणे तत्पूर्व्वं दिवाभोजनं न कुर्य्यात्। रात्रिभोजनस्य तु चायं प्रक्रियपादिति वक्ष्यमाणनिषेधादिति। रात्रेः परार्द्धे तु चन्द्रग्रहे तत्पूर्व्वं रात्रिभोजनं न कुर्य्यात् दिवाभोजने तु न विरोधः।

१ ग पुस्तके, परार्द्धे।

तथाच नारदीयपुराणम्,—

अर्द्धरात्रे व्यतीते तु यदा चन्द्रग्रहो भवेत् ।
सायं तत्र न भुञ्जीत नतु प्रातरभोजनम् ॥

तथा कामधेनुलिखितं कूर्मपुराणवचनम् ।

नाद्यात् सूर्य्यग्रहात् पूर्व्वमह्नि सायं शशिग्रहात् ।
ग्रहकाले च नाश्नीयात्स्नात्वाश्नीयाद्विमुक्तयोः ॥
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।
मुक्त्वा स्नात्वा परेऽह्न्याद्ग्रस्तास्तमितयोस्तयोः ॥

शशिग्रहात् पूर्व्वं सायं रात्रिभोजनं न कुर्य्यादित्यर्थः ।
महानिशा देवलोक्ता ।

महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।

तत्र,—

मुनिभिर्दिवसग्रस्तं विप्राणां मर्त्त्यवासिनां नित्यम् ।
अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः ॥

इति परिशिष्टवचनपर्य्यालोचनया सार्द्धप्रहरोपरि यामद्वयं महानिशा । नाचरेत् सचर इति ग्रस्ते चन्द्रे सूर्य्ये इत्यर्थः । अत्र दर्शनयोग्यग्रहणस्यैव भोजननिषेधे निमित्तत्वं तेन सूक्ष्मग्रहणे द्वीपान्तरग्रहे च तत्पूर्व्वं तत्काले च भोक्तव्यमेव, योग्यता च चाक्षुषत्वम् । तथैवेति तथैव यावद्ग्रासमस्तमुपागते ससीत्यर्थः । तद्दोक्तं कथं कर्त्तव्यमित्यपेक्षायामाह मुक्तिं दृष्टेति परपरदिने उदयं निरीक्ष्य स्नात्वैव भुञ्जीतेत्यर्थः ।

अत्र केचित्,—

यावत् स्यात्तोदयस्तावत् नाश्नीयात्तावदेव तु।

इत्यनेनैवोदयानन्तरं भोजनप्राप्तौ, मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा परेऽहनि। इति पुनर्विधानं परदिनेऽप्युदयानन्तरं मेघादिना दर्शनाभावे भोजननिषेधार्थम्। किन्तु तथापि दर्शनपूर्वकमेव भोजनं अन्यथा मुक्तिं दृष्ट्वा तु भुञ्जीतेत्यनर्थकं स्यात् इत्याहुः॥

तदयुक्तम्। मुक्तिं दृष्ट्वा तु भुञ्जीतेत्यनेनैव सिद्धौ यावत्स्यात्तोदय इति वचनाद्वैयर्थ्यं दुर्निवारमेव। उत्तरार्द्धवैयर्थ्याशङ्का तु मुग्धवधूविलसितमिव उदयानन्तरितभोजनस्य मुक्तिनिर्णयानन्तरितस्नानोत्तरकर्त्तव्यत्वविधानेन सार्थक्यात् ततश्च मुक्तिं दृष्ट्वेत्यस्य उदयं ज्ञात्वा इत्यर्थः। अन्यथा पिपद्यमानादिषु मेघावरणेऽनिस्तारः। एवञ्च दृष्ट्वा स्नात्वा परेऽहनीति देवलवचनेऽपि दृष्ट्वेत्यस्य उदयं ज्ञात्वेत्यर्थः अस्यार्थः ततश्च ग्रस्तास्ते चन्द्रे मुक्तिकालं निर्णीय शुद्धिस्नानं कृत्वा उदयात् प्राक् देवार्चादिकं पाकञ्च कृत्वा कदाचिन्मेघावरणे उदयमनुमाय पुनः स्नात्वा भोक्तव्यम्।

सूर्य्ये तु ग्रस्तास्ते मुक्तिकालं निर्णीय रात्रौ शुद्धिस्नानं कृत्वा परदिने सूर्य्योदयमनुमाय स्नात्वा भोक्तव्यम्।

तथाच संवत्सरप्रदीपे,—

ग्रस्ते चास्तङ्गते[1] निन्दौ कृत्वा मुक्त्यवधारणम्।
स्नात्वा पाकादिकं कार्य्यं भुञ्जीतेन्दूदये ततः॥

---

१ ख, तथ।

अथ मुक्तिस्नानं कृत्वा चन्द्रसूर्य्याभ्यामर्घ्यं ददातीत्याचारः। मन्त्रञ्च पठन्ति।

उत्तिष्ठ गम्यतां राहो त्यज्यतां चन्द्रसङ्गमः।
कर्म्म [1]चाण्डालयोगोत्थं मम पापं व्यपोहर ॥

अयन्तु ग्रहणकाले, ग्रहणात् पूर्व्वञ्च भोजननिषेधो न उक्तः स स्नानादिकर्त्तृणामपि ज्ञातव्यः।

चन्द्रसूर्य्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्राच्छुद्धिरिष्यते ॥

इति भवदेवभट्टलिखितवचने सामान्यतः प्रायश्चित्तोपदेशात्। अन्यथा ग्रहणकालेऽपि कर्म्माकर्त्तुर्भोजनप्रसङ्गः।

किञ्च,—

सन्ध्याकाले यदा राहुर्ग्रसते शशिभास्करौ।
तदा दिवा न भोक्तव्यमातुरस्त्रीशिशून् विना ॥

इति ब्रह्मवैवर्त्तवचने आतुरस्त्रीशिशुव्यतिरेकेणान्येषां सर्व्वेषां भोजननिषेधात्। कर्म्मकर्त्तृमात्रगोचरनिषेधे तु आतुरादिप्रतिप्रसवो नोपपद्येत।

तथा वृद्धगौतमः,—

*सूर्य्यग्रहे तु नाश्नीयात् पूर्व्वं यामचतुष्टयम्।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ॥

यामचतुष्टयमिति दिवोपलक्षणं यामांस्त्रीनिति चतुर्द्दशादध-

---

१ ग, चण्डाल०।

सूत्रयते बोद्धव्यम्। पञ्चाशे भोजननिषेधस्तु दृष्टोपरागविषय एवेति केचित्, तन्न, सर्व्वत्र सामान्योपक्रमात् सामान्यत एव निषेधात्।

शवस्पर्शानमाशौचादिकमशौचेऽपि कार्य्यम्।

नित्यस्य कर्म्मणो हानिः केवलं मृत्युजन्मनोः।

न तु नैमित्तिकोच्छेदः कर्त्तव्यो हि कथञ्चन॥

इति वामनपुराणवचनादिति कल्पतरुसमयप्रकाशादयः। अतएव विष्णुपुराणे,—

सूतके मृतके चैव सूतकं राहुदर्शने।

तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते॥

सूतके मृतके इति कर्म्मानधिकारोपलक्षकं न तु नैमित्तिकोच्छेदः कर्त्तव्यो हि कथञ्चनेत्यत्र कथञ्चनेत्यभिधानात्।

अतएव दक्षः,—

नैमित्तिकानि काम्यानि निपतन्ति यथा यथा।

तथा तथैव कार्य्याणि न कालस्तु विधीयते॥

तेन मलमासे रजआदिपातेऽपि ग्रहणे स्नानादिकं कार्य्यम्। गङ्गावाक्यावलीकारस्तु,—

सूतके मृतके चैव न दोषो राहुदर्शने।

स्नानमात्रं प्रकुर्व्वीत दानश्राद्धं विवर्ज्जयेत्॥

इति नामशून्यवचनात् स्नानमेव कर्त्तव्यं नान्यदित्याह तन्तु राजादिभिरलिखितत्वान्निर्मूलत्वेव। समूलत्वेऽप्ययमर्थः सूतके मृतके राहुदर्शने स्नानादिकर्म्मसु दोषो नास्तीति पूर्व्वार्द्धे नित्यस्य कर्म्मणो हानिरिति प्रागुक्तवचनसमानार्थमेव न दोष इत्युपादानात्

ऽनाशौचन्तु महागुरुनिपातिविषयं महागुरुनिपाते तु संवत्सर-पर्य्यन्तं मृतकेऽपि स्नानमात्रमेव कुर्व्वीत न तु दानश्राद्धादिकम् ।

अतएव मत्स्यपुराणे,—

ततः प्रभृति संक्रान्त्युपरागादिपर्व्वस्वित्यनेन सपिण्डनात् प्राक्कुपरागश्राद्धं नास्तीत्युक्तम् ।

यत्तु,—

चन्द्रसूर्य्यग्रहे स्नायात् सूतके मृतकेऽपि च ।
अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति ॥

इति विष्णुपुराणवचनमिति कृत्वा कालविवेके लिखितं तत् सूतकमृतकयोरपि राहुदर्शनजनितग्रावाशौचापनोदनार्थं शुद्धि-स्नानविधायकं, अतएव अस्नायी मृत्युमाप्नोतीत्यकरणे दोष उक्तः स्नायीत्यादिना च अशौचरूपपापापनोदनफलं स्पष्टमुक्तं काम्यस्नान-दानादिकन्तु कामिनामैच्छिकं नैमित्तिकत्वात् सूतकेऽप्यशुद्धत्व-मेवेति ॥

अथ ग्रहणकर्त्तव्यकर्म्माणि ।

विष्णुधर्म्मे,—

स्नाने जप्ये तथा दाने होमे श्राद्धे सुरार्च्चने ।
पुण्यः स कालो भविता नित्यमेवासुरेश्वर ॥
नित्यं राशिवामाकादिकालेऽपीत्यर्थः ।

तथा यमः,—

स्नानं दानं जपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्ज्जयेत् ॥

स्नानमत्र सतर्पणं दैवम्। ग्रहणस्नाने च नदीरजोदोषो नास्ति।

मासद्वयं श्रावणादि सर्व्वा नद्यो रजस्वलाः।

तासु स्नानं न कुर्व्वीत वर्ज्जयित्वा समुद्रगाः॥

चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते।

इति छन्दोगपरिशिष्टवचनात्। नद्यो नाद्यः साक्षात् समुद्रगा न तु परम्परया, सर्व्वासां तथात्वात्। श्राद्धमामान्नेनैव[1]।

आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा।

आमश्राद्धं द्विजैः कार्य्यं शूद्रेण तु सदैव हि॥

इति प्रचेतोवचनात्। एतच्च श्राद्धं नित्यमिति प्राञ्चः सर्व्व-मन्यग्रहणे काम्यं।

भविष्ये,—

योऽर्च्चयेद्विधिवद्दुर्गां ग्रहणे चन्द्रसूर्य्ययोः।

कृतोपवासो विधिवत् स भवेत् पुत्रवान्नरः॥

आगमे,—

अथवान्यप्रकारेण पुरश्चरणमिष्यते।

ग्रहणेऽर्कस्य चैवेन्दोः शुचिः पूर्व्वमुपोषितः॥

[2][नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः।

यद्वा पुण्योदके स्नात्वा शुचिः[3] पूर्व्वमुपोषितः॥]

स्पर्शादिमुक्तिपर्य्यन्तं जपेन्मन्त्रमनन्यधीः।

---

१ ख पुस्तके, श्राद्धमामात्रेणैव।

२ ग पुस्तके, [ ] चिह्नितांशो नास्ति।

३ ख पुस्तके, स्नानशुद्धः।

अनन्तरं दशांशेन क्रमाद्धोमादिकञ्चरेत् ॥
तदन्ते महतीं पूजां कुर्य्याद्ब्राह्मणतर्पणम् ।
ततो मन्त्रस्य सिद्ध्यर्थं गुरुं सम्पूज्य तोषयेत् ।
एवञ्च मन्त्रसिद्धिः स्याद्देवता च प्रसीदति ॥

अथ मज्जनमात्रं स्नानम् । यस्तोदये तु नायं जपः । स्पर्शादि-मुक्तिपर्य्यन्तमित्यभिधानात् ।

छन्दोगपरिशिष्टम्,—

सर्भांशुना चोपसृष्टे आदित्ये चन्द्रमस्यपि ।
यत्तावरौन् यत्र पूर्व्वांस्तत्सृष्टस्तारयेद्बुधः ॥

अथ च सगणेशमातृकापूजा-वसुधारा-दान-वृद्धिश्राद्धानि प्राक् कर्त्तव्यानि ।

सर्व्वाण्येवान्वाहार्य्यवन्तीति गोभिलेन गृह्योक्तकर्म्मसु श्राद्ध-विधानात् वृषोत्सर्गस्य पारस्करगोभिलयोरुक्तत्वात् ।

अथ वृषोत्सर्गो गोयज्ञेन व्याख्यात इति पारस्करेण गोय-ज्ञातिदेशाच्च ।

तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं विधीयते ।
इति मत्स्यपुराणवचनाच्च ।

तच ग्रहणकाल एव न तु तत्पूर्व्वं अङ्गानां प्रधानदेशकाल-कर्त्तव्यतानियमात् भविष्यद्ग्रहप्रत्ययस्य सन्देहेन प्रधानकर्त्तव्यता-निश्चयाभावाच्च, अतएव लुगन्तवेकाख्यायागे पूर्व्वदिने अधिवासवाध उक्तः । एवं यानि कर्म्माणि ग्रहणपाक्षिकतया भूयन्ते तान्येव कार्य्याणि न तु पुष्करिणीप्रतिष्ठादीनि ।

साधारणस्नाने चन्द्रमाह कल्पोगपरिशिष्टम्,—

सर्वाण्यम्बःसमानि स्युः सर्वाण्यनाखि भूतले।

कूपस्थान्यपि चन्द्रार्कग्रहणे नात्र संशयः॥

भूतले इत्यनेन भूमिस्थान्येव न तदुद्धृतानि।

व्यासः,—

सर्व्वं गङ्गासमं तोयं सर्व्वे व्याससमा द्विजाः।

सर्व्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्य्ययोः॥

अत्र केचित् अमुके मासि अमुकराशिस्थे भास्करे पौर्णमासी-प्रतिपत्सन्धौ राहुग्रस्ते निशाकरे इति वाक्यं वर्णयन्ति। तदसत् तिथिपर्व्वोल्लेखविधिबाधापत्तेः न वा सन्धौ राहुग्रासः किन्तु पौर्णमास्यां स्पर्शः प्रतिपदि च मोक्षः तथापि पौर्णमास्या यावद्दण्डाव-स्थाने स्पर्शः प्रतिपदोऽपि तावद्दण्डान्ते मोक्ष इति चन्द्रग्रहणे नियमः, सूर्य्यग्रहणे तु नायं नियमः कदाचिदमावस्यायां स्पर्शो मोक्षश्च कदाचित् प्रतिपद्यपि स्पर्शो मोक्षश्च कदाचिदुभयोः सम-कालव्याप्तिः कदाचिद्विषमकालव्याप्तिश्चेति स च कालनिर्णयः सूर्य्यसिद्धान्तानुसारेणास्माभिर्ज्ञातकार्णवपत्रे विहतोऽस्ति।

ततश्च यदा या तिथिर्यो वा पर्व्वतदुल्लेखः कार्य्यः। तदिदं वाक्यम्।

ॐ अद्य अमुके मासि अमुकराशिस्थे भास्करे शुक्लपक्षे पौर्ण-मास्यां तिथौ यदा तु प्रतिपत्तमयत्तदा कृष्णपक्षे, राहुग्रस्ते निशाकरे भारतवर्षाख्यभूप्रदेशे अमुकगोत्रोऽमुकशर्म्माहं[1] गङ्गा-स्नानजन्यफलसमफलप्राप्तिकामोऽस्मिन् जले स्नानं करिष्ये इति।

---

१ ख, ग पुस्तके, अमुकशर्म्मा।

गङ्गायां-स्नानफलमाह गारुडे,—

चन्द्रसूर्य्यग्रहे चैव योऽवगाहेत जाह्नवीम्।

स स्नातः सर्व्वतीर्थेषु किमर्थमटते महीम्॥

अद्येत्यादि चन्द्रग्रहे सूर्य्यग्रहे वा पृथिव्यधिकरणकसर्व्वतीर्थ-स्नानजन्यफलसमफलप्राप्तिकामो जाह्नवीस्नानमहं करिष्य इति॥

ब्रह्मपुराणे,—

गवां कोटिसहस्रस्य सम्यग्दत्तस्य यत् फलम्।

तत् फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे॥

दिवाकरे पुनस्तस्य दशसंख्यमुदाहृतम्।

अद्येत्यादि राहुग्रस्ते निशाकरे गोकोटिसहस्रसम्यग्दानजन्य-फलसमफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्य इति। राहुग्रस्ते दिवाकरे चन्द्रग्रहणकालीनगङ्गास्नानजन्यफलदशगुणफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

गारुडे,—

सूर्य्यग्रहः सूर्य्यवारे सोमे[1] सोमग्रहस्तथा।

चूड़ामणिरिति ख्यातस्तदा योगः प्रकीर्त्तितः॥

अन्यस्माद्ग्रहणात् कोटिगुणमत्र फलं लभेत्।

राहुग्रस्ते चूड़ामणियोगेऽस्मिन् गङ्गाधिकरणकान्यकालीन-सूर्य्यग्रहस्नानजन्यफलकोटिगुणफलप्राप्तिकामोऽस्मिन् जले स्नानमहं करिष्ये। चन्द्रग्रहणे च चन्द्रग्रहणस्नानजन्येति विशेषः।

---

१ क, ख पुस्तके, सोमे प्रहं नास्ति।

अन्यत्र तु चूडामणियोगेऽस्मिन् अन्यकालीनचन्द्रसूर्य्यग्रहण-स्नानजन्यफलकोटिगुणफलप्राप्तिकामोऽस्मिन् जले स्नानमहं करिष्ये। पुष्करादौ फलमाह[1] व्यासः,—

इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणञ्च तत्।
गङ्गातोये तु संप्राप्ते इन्दोर्कोटौ रवेर्दश॥

अन्यकाले यत्तीर्थस्नाने यत्फलं चन्द्रग्रहे तत्र स्नाने तत्फलं लक्षगुणं रविग्रहे तु दशलक्षगुणं गङ्गायान्तु अन्यकालीनगङ्गा-स्नाने यत्फलं तदिन्दुग्रहे कोटिगुणं सूर्य्यग्रहे तु दशकोटिगुणं भवतीत्यर्थः॥

अद्येत्यादि राहुग्रस्ते निशाकरे अन्यदैतत्तीर्थस्नानजन्यफललक्ष-गुणफलप्राप्तिकामोऽस्मिंस्तीर्थे स्नानं करिष्ये। सूर्य्यग्रहे तु दश-लक्षगुणेति विशेषः। गङ्गायान्तु राहुग्रस्ते निशाकरे अन्यकालीन-गङ्गास्नानजन्यफलकोटिगुणफलप्राप्तिकामो गङ्गास्नानं करिष्ये इति॥

सूर्य्यग्रहे तु दशकोटिगुणेति विशेषः।

सम्पूर्णग्रहणे फलमाह मार्कण्डेयपुराणे,—

चन्द्रे वा यदि सूर्य्ये दृष्टे राहौ महाग्रहे।
अक्षयं कथितं पुण्यं तथाप्यर्के विशेषतः॥

यद्यप्यक्षये पुण्ये विशेषो नास्ति तथापि तत्रान्यत्र स्वर्गफल-स्योत्कर्षादिविशेषः। सम्पूर्णग्रस्ते चन्द्रे अक्षयपुण्यप्राप्तिकाम इति वाक्यम्।

---

१ ग, स्नानफलमाह।

माल्ये,—

गङ्गाकनखले पुण्ये प्रयागं पुष्करं गया।
कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे॥

अत्र गङ्गामाहात्म्यात् कुरुक्षेत्रादिष्वपि सूर्य्यग्रहे प्रागुक्तगङ्गा-स्नानफलमेव।

तथा तत्रैव,—

कोटिजन्मकृतं पापं पुरुषोत्तमसन्निधौ।
कृत्वा सूर्य्यग्रहे स्नानं विमुञ्चति महोदधौ॥
दशजन्मकृतं[1] पापं स्नानान्नश्यति पुष्करे।
शतजन्मकृतं पापं गङ्गासागरसङ्गमे॥
जन्मनान्तु सहस्रेण यत्पापं समुपार्ज्जितम्।
तत्सर्वं सन्निहत्यायां राहुग्रस्ते दिवाकरे॥

तत्सर्वं पापं सन्निहत्यानामनदीविशेषे स्नानान्नश्यतीति पूर्वेण सहान्वयः। अत्रोपक्रमोपसंहारयोः सूर्य्यग्रह इत्यभिधानात् सूर्य्यग्रह एवैतत् फलं न चन्द्रग्रहे।

अथ ग्रहणे त्याज्यानि निषिद्धानि।

मनुः,—

त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके।

ज्योतिषे,—

अनिष्टे त्रिविधोत्पाते किंचित्कालसमुदर्शने।
सप्तरात्रं न कुर्वीत यात्रोद्वाहादिमङ्गलम्॥

---

१ क पुस्तके, शतजन्मकृतम्।

त्रिविधत्वं दिव्यभौमान्तरीक्षभेदेन, अत्रापि राशेर्दर्शनादेव दोषो न तु मेषादिनाऽदर्शन इति ।

षण्नाड़ीनक्षत्रेषु ग्रहणे दोषमाह ज्योतिषे,—

रोगाद्यागमवित्तनाशकलहाः संपीड़िते जन्मभे
सिद्धिं कर्म न याति कर्मणि हते भेदस्तु सांघातिके ।
द्रव्यस्योपचितस्य[1] सामुदयिके संपीड़िते संक्षयो
वैनाशे तु भवन्ति कार्य्यविपदश्चित्तासुखं मानवे ॥

जन्मादिसंज्ञामाह तत्रैव,—

जन्माद्यं कर्म ततोऽपि दशमं सांघातिकञ्च षोड़शभम् ।
समुदयमष्टादशभं विनाशसंज्ञं त्रयोविंशम् ॥
आद्यात्तु पञ्चविंशं मानसमेवं नरः षड्भः स्यात् ।
नवनक्षों नृपतिः स्वजातिदेशाभिषेकर्क्षैः[2] ॥
यस्मिन् पुंसो जन्म तदाद्यं नक्षत्रं ।

अत्रिः,—

यस्य जन्मर्क्षमासाद्य ग्रस्येते शशिभास्करौ ।
व्याधिं प्रवासं क्लेशञ्च दिशेत्तस्य सदक्षयम् ॥

दोषकालमाह ज्योतिषे,—

ग्रहणं रविचन्द्रमसोर्नाड़ीनक्षत्रवासरे यस्य ।
अब्दार्द्धाभ्यन्तरतो दोषो नाड़ीसमं तस्य ॥
पूर्वोक्तं जन्मादिनक्षत्रषट्कं नाड़ीसंज्ञम् ।

---

1 ख पुस्तके, द्रव्यस्यापचितस्य ।

2 क ०भिषेकर्क्षः ।

तत्प्रतीकारमाह राजमार्त्तण्डे,—

ग्रहणग्रहपरिपीड़ितनाड़ीनक्षत्रदोषशमनाय।
स्नायात् शतपुष्पैः फलिनीफलचन्दनोशीरैः॥

शतपुष्पा शलुफा इति यस्य ख्यातिः फलिनी प्रियङ्गु उशीरं वीरणमूलं।

तथा राजमार्त्तण्डे,—

गव्यपयो गुड़पूपं घृतदधिमधुपायसं क्रमेणैव।
तरणद्विजाय दद्यादनिष्टनाड़ीविशुद्ध्यर्थम्॥

षट्कनाड़ीषु यथाक्रमं गव्यदुग्धादिषट्द्रव्याणि।

तथा,—

घृतकुम्भोपरिनिहितं शङ्खं नवनीतपूरितं दद्यात्।
नाड्यादिदोषशान्त्यै द्विजाय दोषाकरग्रहणे॥

आदिशब्दाज्जन्मपञ्चाष्टरिष्फाङ्केत्यादिनोक्तानां जन्मराश्यादीनां ग्रहणम्।

तथा,—

ताम्रपात्रं तिलैः पूर्णं पूर्णं वा गव्यसर्पिषा।
भास्करग्रहणे दद्यान्नाड़ीराश्युपपीड़ितः॥

राशयो जन्मराश्यादयः। तथा तत्रैव,—

त्रिमधुरपरिपूर्णं चन्द्रमानानुरूपं
रजतरचितचन्द्रं कांस्यपात्रान्तरस्थम्।
वितरतु घनखण्डैः पूजयित्वैव विप्रे
हरति दुरितमस्मात् सर्वकाले शशाङ्कः॥

दधिमधुघृतपूर्णं ताम्रपात्राकरस्य
कनकरचितमूर्त्तिं सूर्य्यबिम्बानुरूपम्।
अरुणकुसुमवस्त्रैः पूजयेद्दैवचेता
हरति दुरितमस्यार्द्राउक्ष्वा पद्मभानुः॥

त्रिमधुरं घृतमधुशर्कराः। तथा,—

जन्माष्टआयान्त्यवधर्म्मसंस्थे[1]
निशाकरे जन्मसु तारकासु।
कृत्वा तमश्चन्द्रमसं प्रयत्ना-
दथार्च्य दद्यात् कनकं द्विजाय॥

एते च प्रतीकाराः शक्त्यनुरूपं यथासम्भवं कार्य्याः वित्तशाठ्यं न कार्य्यं। मत्स्यपुराणोक्तप्रतीकारस्तु प्रक्रियागौरवादग्रन्थबाहुल्याच्च नोक्तः॥

इति ग्रहणनिर्णयः।

अथेदानीं सामान्यतस्तिथिकृत्यमभिधाय तत्तोक्तानां वक्ष्यमाणानां श्रीगोविन्दादिदेवतापूजानां विधिर्विविच्यते।

तत्र श्रीभागवते एकादशस्कन्धे भगवदुद्धवसम्वादे,—

वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः।
त्रयाणामीप्सितेनैव विधिना मां समर्च्चयेत्॥

मखः पूजा वैदिकः पुरुषसूक्तादिवेदमन्त्रैर्ऋषिपुराणादायुक्तः, तान्त्रिक आगमोक्तः मिश्रो वैदिकतान्त्रिकाभ्यां सम्बलितः। तत्र प्रथमं तान्त्रिकपूजाभिधीयते इतरयोरुक्तत्वापेक्षत्वात्।

---

[1] ख, ०सधर्म्म०।

तथैव,—

शुचिः सम्भृतसम्भारः प्राग्दर्भैः कल्पितासनः ।
आसीनः प्रागुदग्वार्च्चेदर्च्चायामथ सम्मुखः ॥

शुचिः, स्नानकरप्रक्षालनाचमनैः शौचसम्पन्नः ।

तथाच शारदातिलके,—

देशिको विधिवत् स्नात्वा कृत्वा पौर्व्वाह्निकीः क्रियाः ।
यायादलङ्कृतो मौनी यागार्थं[१] यागमण्डपम् ॥

पौर्व्वाह्निकीः प्रातःसन्ध्याद्याः, अलङ्कृतः शुचिवस्त्रतिलका-दिनेत्यर्थः । पादप्रक्षालनमाह देवलः,—

प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः ।
उदङ्मुखो वा दैवत्ये पैत्रके दक्षिणामुखः ॥

आचमनञ्च द्विः कार्य्यम् ।

निष्ठीविते तथाभ्यक्ते तथा पादावसेचने ।

इत्यादिवायुपुराणवचनात् ।

सम्भृतसम्भार इति । प्राक् प्रथमं निर्व्वर्त्तितपूजासाधनः न तु तदर्थं पुनरुत्थितेत्यर्थः । दर्भैः कल्पितं सन्नद्धं आसनं यस्य तथा, प्रागग्रैर्दर्भैः कल्पितासन इति वा ।

आगमे,—

सम्मृष्टे शुद्धभागे तु विलिप्ते गोमयाम्बुना ।
शुद्धासने समासीनः पूजयेच्च समाहितः ॥

आसनमुक्तं पुरश्चरणचन्द्रिकायाम् ।

---

१ ख पुस्तके, यागार्थं, पदं नास्ति ।

चर्म्मसिद्धौ व्याघ्रचर्म्म ज्ञानसिद्धौ मृगाजिनम्।
वस्त्रासनं रोगहरं वेत्रजं प्रीतिवर्द्धनम्॥
कौशेयं पुष्टिदं प्रोक्तं कम्बलं सर्व्वसिद्धिदम्।
वंशासने च दारिद्र्यं दौर्भाग्यं दारुजासने॥
धरण्यां दुःखसम्भूतिः पाषाणे व्याधिसम्भवः।
तृणासने यशोहानिः पल्लवे चित्तविभ्रमः॥
न दीक्षितो विशेत्तत्र कृष्णसाराजिने गृही।
कुशासनस्वरूपञ्च चतुरस्रं समन्ततः।
एकहस्तं द्विहस्तं वा चतुरङ्गुलमुच्छ्रितम्॥
स्वस्तिकादिक्रमेणैव विशेत्तत्र निराकुलः।
स्वस्तिकं पद्मकं वीरं भद्रञ्चेति चतुष्टयम्॥

कालिकापुराणे,—

आसनञ्चार्घ्यपात्रञ्च भग्नमासादयेन्न तु।

तथा,—

सर्व्वाणि परकीयाणि यानि तानि च वर्ज्जयेत्।

प्राचीन इति प्राक् प्राङ्मुख उदक् उदङ्मुखः। अर्च्चा प्रतिमा तस्यां स्थिरायान्तु सम्मुखः प्रतिमाभिमुखोपविष्टः सन्नित्यर्थः।

तथा तत्रैव,—

शुचिः सम्मुख आसीनः प्राणसंयमनादिभिः।
देहं विशोध्य विन्यासकृतरक्षोऽर्च्चयेद्धरिम्॥

सारदातिलके,—

विशेन्मृद्वासने मन्त्री प्राङ्मुखो वाप्युदङ्मुखः।

एतेन प्राचीदिङ्मुखम् इति क्रमदीपिकादर्शनाद्विष्णुपूजायां प्राङ्मुखत्वनियम [इति यत् कैश्चिदुक्तं तन्निरस्तं तद्वचनस्यैकदेश-कीर्त्तनपरतयैवोपपत्तेः।

रात्रौ तूदङ्मुखत्वनियममाह गोतमः,—

रात्रावुदङ्मुखः कुर्य्याद्देवकार्य्यं सदैव हि।
शिवार्च्चनं सदैवैवं शुचिः कुर्य्यादुदङ्मुखः॥

देवीपूजायामुत्तरदिङ्मुखत्वमुक्तं] कालिकापुराणे,—

दिग्विभागेषु कौवेरी दिक् शिवाप्रीतिदायिनी।
तस्मात्तन्मुख आसीनः पूजयेच्चण्डिकां सदा॥
नीचैरासनमासाद्य सर्व्वान् देवान् प्रपूजयेत्।

शारदातिलके,—

अनन्तरं देशिकेन्द्रो दिव्यदृष्ट्यावलोकनात्।
* दिव्यानुत्सारयेद्विघ्नानस्त्राद्भिरान्तरीक्षगान्।

पार्ष्णिघातेन भौमानिति विघ्नान् निवारयेत्। मन्त्रपूता दृष्टिः दिव्य-दृष्टिः, अस्त्राद्भिः अस्त्राय फडित्यस्त्रमन्त्रजप्ताभिरद्भिरित्यर्थः।

योगिनीतन्त्रे,—

नीचैरासनमासाद्य शालिकादिक्रमेण तु।
विघ्नेभ्निराकुर्वन्नथ पादौ संक्षाल्य वाससा॥
कुसुमाक्षतविक्षेपान् नाराचास्त्रधिया बुधः।
अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः॥
ये भूता विघ्नकर्त्तारस्ते गच्छन्तु शिवाज्ञया।

---

१ अ पुस्तके, [ ] चिह्नितसन्दर्भो नास्ति।

इत्यस्त्रेऽत्रं चतुर्थार्थं मन्त्रपाल्तः परिक्षिपेत् ॥

अत्र षट्कारम्। शारदातिलके,—

स्थापयेद्दक्षिणे भागे पूजाद्रव्याणि साधकः।

सुवासिताम्बुसम्पूर्णं वामे कुम्भं सुशोभनम् ॥

कृताञ्जलिपुटो भूत्वा वामदक्षिणपार्श्वयोः।

नत्वा गुरुं गणेशानं भूतशुद्धिं समाचरेत् ॥

अभीष्टदेवतानमस्कारोऽपि बोद्धव्यः।

नत्वा गुरुं गणेशानं पुरतः स्वेष्टदेवताम्।

इति पुरश्चरणचन्द्रिकावचनात्।

क्रमदीपिकायाम्,—

ततोऽस्त्रमन्त्रेण विशोध्य पाणी

चिताबहिर्व्वह्निकृताग्निशालाम्।

विधाय भूतात्मकमेतदङ्गं

विशोधयेच्छुद्धमतिः क्रमेण ॥

कृताग्निशालोऽग्निप्राकारः।

शारदातिलके,—

करशुद्धिं समाधाय कुर्य्यात्तालत्रयं ततः।

ऊर्द्ध्वोर्द्ध्वमस्त्रमन्त्रेण दिग्बन्धमपि साधकः ॥

अस्त्रमन्त्रेण अस्त्रायफडित्यनेन।

भूतशुद्धिमाह तत्रैव,—

सुषुम्णावर्त्मनात्मानं परमात्मनि योजयेत्।

योगयुक्तेन विधिना चिन्मन्त्रेण समाहितः।

कारणे पञ्चभूतानि तन्मात्राण्यपि विचिन्तयेत् ॥
बीजभावेन लीनानि व्युत्क्रमात् परमात्मनि ।
ततः संशोषयेद्देहं वायुबीजेन वायुना ॥
वह्निबीजेन तेनैव निर्दहेत् सकलां तनुम् ।
निर्वापयेत्ततो दीप्तामृतेनामृतात्मना ॥
आप्लाव्याप्लावयेद्देहमापादतलमस्तकम् ।
आत्मबीजानि भूतानि स्वस्थानं प्रापयेत्ततः ॥
आत्मानं हृदयाम्भोजमानयेत् परमात्मनः ।
मनुना हंसदेवस्य कुर्य्यान्न्यासादिकं ततः ॥

आत्मानं हृदयाम्भोजमानयेदित्युपसंहारात् स्वेष आत्मा स्थितो योऽसौ हृदये दीपवत् प्रभुरिति याज्ञवल्क्याच, हृदयस्थितमात्मानं जीवं दीपशिखाकारं ध्यात्वा शिरसि षट्चक्रकमलस्थे परमात्मनि सुषुम्नानाडीवर्त्मना चित्रिण्यैव हंस इति मन्त्रेण योजयेत् ।

तथा चागमसंहितायाम्,—

नयनानयनार्थं हि हंसः सोऽहमितीरयेत् ।

ततश्च सर्वसंहारेण[1] परमात्मनि पृथिव्यादीनि पञ्चभूतानि तन्मात्रशब्दादीनि च व्युत्क्रमेण बीजरूपेण सूक्ष्मभूतकारणरूपेण लीनानि चिन्तयेत् ।

आचरणः, पादे पृथिव्याः, लिङ्गमूले जलस्य, हृदये तेजसः, मुखे वायोः, भाले आकाशस्यावस्थितिः ।

---

१ क, ग० सारेण ।

तत्र कुम्भकेन पृथिवीं[1] कुम्भकद्वयेन जले जलञ्च तेजसि तेजश्च वायौ वायुञ्चाकाशे आकाशञ्च परमात्मनि नयेत् ।

यथाक्रमसृष्टौ तु श्रुतिः,—

आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवीति ।

अतएवागस्त्यसंहितायाम्,—

भूतानि नाम पृथिवी अपां तेजो मरुद्वियत् ।
यद्यतो जायते तस्मिन् प्रलयोत्पादनं पुनः ॥

प्रलयो लीनता तस्मात् पुनरुत्पादनञ्च सृष्टिरर्थः । ततः संशोषयेद्देहमिति वायुबीजेन यमित्यनेन वायुना वामनासा-पूरितवायुनेत्यर्थः । वह्निबीजेन रमित्यनेन दक्षिणनासापूरित-वायुना तनुं दहेत् दग्धमिति चिन्तयेत् । ततो दोषान् पापानि भस्मतया तानि वामनासया वायुना विरेचयेत् बहिः कुर्यात् ततः सहस्रदलकमलस्थं परमात्मानं चन्द्ररूपं चिन्तयित्वा तस्माद्गलता-मृता सुधारूपजलेन अमृतेन[2] जलबीजेन वमित्यनेनाप्लाव्य संसिच्य देहं [लमित्यनेन इन्द्रबीजेनापादयेत् जनयेत् दृढं सकलं][3] देहं विभावयेत्, एतच्च शोषणादिकं पञ्चाशन्मातृकाभिन्नबीजेन कार्यम् ।

यथागस्त्यसंहितायाम्,—

मरुदग्न्यम्बुबीजैस्तु पञ्चाशन्मातृकात्मकम् ।
प्राणायामसंख्यात्मदेहे शोषणादीन् प्रकल्पयेत् ॥

---

१ ख पुस्तके, पृथिवी ।

२ ग पुस्तके, जलेन अमृतेन इति पदद्वयं नास्ति ।

३ ग पुस्तके, [      ] चिह्नितांशो नास्ति ।

प्रपञ्चसारेऽपि,—

अथ वै शोषणदहनप्लावनभेदेन शोधिते देहे।
पश्चाग्रन्थिमार्गाभेदैर्विधिवत् समापयेत् प्राणान्॥

आत्मलीनानीति आत्मनि परमात्मनि लीनानि भूतानि सृष्टिक्रमेण सुषुम्नां प्रापयेत्। तथाहङ्कारादीनि च आत्मानञ्च हंसदेवस्य जीवस्य[1] मन्त्रेण सोऽहमित्यनेन परमात्मनः सकाशात् सत्पथमानयेदिति भूतशुद्धिः। अत्र शोषणादौ यो विशेष उक्तः स क्रमदीपिकानुसारेण मन्तव्यः। कुर्य्यान्न्यासादिकं तत इति। अनन्तरं न्यासादिकं विवृणोति स एव।

ऋषिच्छन्दो दैवतानि न्यसेन्मन्त्रस्य मन्त्रवित्।
आत्मनो मूर्द्ध्नि वदने हृदये च यथाक्रमम्॥
विधाय मूलमन्त्रेण प्राणायामान् यथाविधि।
विदध्यान्मातृकान्यासं मन्त्रन्यासमतःपरम्॥

केचित्तु ऋष्यादिभिश्चतुर्थ्यन्तैर्नमोऽन्तैर्न्यासं कुर्व्वन्ति तदयुक्तं प्रमाणाभावात् गरुडकालिकापुराणादिषु प्रथमान्तानां केवलानां ऋष्यादीनां न्यासदर्शनाच्च।

मन्त्रन्यासो द्विविधः अङ्गन्यासस्तत्त्वमन्त्रन्यासश्च स्वयमेवानन्तरं तथैव विशेषितत्वात्। प्राणायामानिति बहुवचनात् त्रयः प्राणायामाः कार्य्याः कपिञ्जलाधिकरणन्यायात्, एतेन भूतशुद्धि ऋष्यादिन्यासप्राणायाममातृकान्यासमन्त्रन्यासाः पञ्चावश्यकाः, अन्ये तु काम्या इति दर्शितम्। क्रमोऽप्यस्मादेवमन्तव्यः।

१ ख पुस्तके, जीवस्य पदं नास्ति।

तथाचागमसंहितायाम्,—

शरीरं शोधयेदादावधिकारार्थमन्वहम्।
तीर्थावगाहनं वाह्मेयन्तर्भूतविशोधनम्॥
मातृकान्यासयोगश्च शोधयेद्विष्णुचिन्तितः।
पूजाद्रव्याण्यपि ततः शोधयेत् प्रोक्षणादिभिः॥
शुद्धः शुद्धैश्च द्रव्यैस्तु पूजयेत् पुरुषोत्तमम्।
न चेन्निरर्थकं सर्व्वं विन्दुसेकतदृष्टिवत्॥
शौचाचमनहीनस्य स्नानसन्ध्यादिकाः क्रियाः।
यथा स्युर्निष्फलास्तैतदन्तरेण भवेत्तथा॥

अन्तःशरीरं शोधयेदित्यनेन एकस्मिन् दिने सकृदनुष्ठितेन स्नानभूतशुद्ध्यादिना शरीरशुद्धेर्जातत्वात् प्रतिकर्म्मणि स्नानभूतशुद्ध्यादिकं पृथक् नानुष्ठेयमित्युक्तम्। मातृकान्यासश्च देहं शोधयेदित्यर्थः। आदिग्रहणादीक्षणताड़नार्च्चनानां ग्रहणम्।

तदुक्तं तत्रैव,—

अवेक्षणं प्रोक्षणञ्च वीक्षणं ताड़नं कुशैः।
अर्च्चनञ्चैव सर्व्वेषां पावनत्वं प्रकल्पयेत्॥

अवेक्षणं रक्षणं अस्त्रमन्त्रेण चिताग्निवन्त्रनरूपं, प्रोक्षणं वीक्षणञ्च मूलमन्त्रेण अर्च्चनं पुष्पेणेत्यर्थः।

शौचेति, शौचाचमनहीनस्य पुंसो यथा सर्व्वाः क्रिया निष्फलास्तथा एतत् पूर्व्वोक्तचतुष्टयस्नान भूतशुद्धि मातृकान्यास द्रव्यशोधनमन्तरेण देवार्च्चनं निष्फलं भवेदित्यर्थः।

तथा तत्रैव,—

प्राणायामैर्विना यद्यत् कृतं कर्म्म निरर्थकम् ।
अतो यत्नेन कर्त्तव्याः प्राणायामाः शुभार्थिभिः ॥

प्राणायाममाह शारदातिलके,—

इड़या कर्षयेद्वायुं वाह्यं षोड़शमात्रया ।
धारयेत् पूरितं योगी चतुःषष्ट्या तु मात्रया ॥
सुषुम्णामध्यगं सम्यक् द्वात्रिंशन्मात्रया शनैः ।
नाड्या पिङ्गलया चैवं रेचयेद्योगवित्तमः ॥
प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः ।
भूयोभूयः क्रमात्तस्य व्यत्यासेन समाचरेत् ॥

इड़ा नाम नाड़ी वामनासागता, पिङ्गला दक्षिणनासागता सुषुम्णा तयोर्मध्यगता। व्यत्यासेनेति यया नासया रेचनं कृतं तयैव पुनस्तोलयेदित्यर्थः ।

मात्रोक्ता [१]प्रपञ्चसारे,—

कालेन यावता स्वीयो हस्तः स्वं जानुमण्डलम् ।
पर्य्येति मात्रा सा तुल्या स्पर्शकालसमानया ॥

अथवा विष्णुपूजायां प्रणवं कामवीजं षोड़शादिसङ्ख्यं जपन् प्राणायामं कुर्य्यात् । देवीपूजायान्तु भुवनेश्वरीवीजं, गणेशपूजायां गणेशवीजं, [शिवपूजायां शिववीजं][२] प्रासादाख्यमिति । इदमन्येष

१ ख पुस्तके, प्रपञ्चसारकारेण ।

२ ग पुस्तके, [ ] चिह्नितांशो नास्ति ।

प्राणायामे तु यथाशक्तिवारं जपन् वायोः पूरणधारणरेचनानि कुर्यात् ।

तदुक्तमगस्त्यसंहितायाम्,—

यावच्छक्यं नियम्यासून् मनसैव जपेन्मनुम् ।
आपादमस्तकं यावत् प्रविशत्यनिलो यथा ॥
यावतीभिस्तु मात्राभिरिन्द्रियाण्यपि धारतः ।
प्रशुष्यन्तः शरीरस्य तावत्प्राणोऽस्य संयमः ॥

धारतो वायुं धारयतः पुंस इत्यर्थः ।

अतएव शारदातिलके,—

विधाय मूलमन्त्रेण प्राणायामं यथाविधीत्यत्र मूलमन्त्रेण प्राणायामे संख्या नोक्ता ।

यत्त्वाचार्य्यैव प्रपञ्चसारे योगिप्राणायाममधिकृत्य सुषुम्नेडिय-यानिलमपानयेदात्मना च मध्यगया संज्ञापयेच्च नाडोत्येवं प्रोक्तानि रेचकादीनीत्यनेन रेचनादिक्रम उक्तः, स यद्यपि प्रागुक्तपूरणादि-क्रमेण[1] वैकल्पिकस्तथापि न प्राचां व्यवहारविषयः वशिष्ठसंहितादिषु बहुषु तन्त्रेषु पूरणादिक्रमदर्शनात् ।

अत एव श्रीभागवते प्राधान्येन पूरकादिक्रममुक्त्वा [2]रेचकादि-क्रमोऽप्युक्तः । यथा

प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ।
विपर्य्ययेणापि शनैरभ्यसेन्निर्जितेन्द्रियः ॥

---

१ ग पुस्तके, "क्रमेण वा" इत्यधिको पाठः ।
२ ग पुस्तके, रेचकादिक्रमोऽपीत्यंशो नास्ति ।

एवं प्रणवसंयुक्तं प्राणमेव समभ्यसेत् ।

विपर्य्ययेण रेचकपूरककुम्भकक्रमेणापीत्यर्थः । एतेन वैष्णवे रेचनादिक्रमोऽन्यत्र पूरणादिक्रम इति कस्यचिन्मतं निरस्तम् । मातृकान्यासमाह शारदातिलके,—

ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः ।
ओष्ठदन्तोत्तमाङ्गास्ये दोःपत्सन्ध्यग्रकेषु च ॥
पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेऽंसके ।
ककुद्यंसे च हृत्पूर्व्वं पाणिपादयुगे ततः ॥
जठराननयोर्न्यस्येन्मातृकार्णान् यथाक्रमम् ।

मातृकामन्त्रस्याकारादिक्षान्तस्यैकपञ्चाशद्वर्णात्मकस्य वर्णान् यथाक्रमं ललाटाद्येकपञ्चाशत्स्थानेषु न्यसेत् ।

लकारपूर्व्वं पुनर्लकारपाठादेकपञ्चाशदक्षरता मातृकामन्त्रस्येति । ललाटे केशान्तभाग एव । केशान्ते वदने तथा नयनयोरिति तन्त्रान्तरदर्शनात् । मुखवृत्ते मुखावरणे प्रदक्षिणक्रमेण भ्रूमध्यादि तदन्त इत्यर्थः, ओष्ठादिदन्तानां द्वये द्वये, उत्तमाङ्गे शिरसि, दोःपदामंसोरुमूलाद्यं सन्धिचतुष्कं अग्रचतुष्टयञ्च एषु कादिनान्ता विंशतिवर्णाः ।

अंसके दक्षिणांसके, हृत्पूर्व्वं हृदयादि यथा स्यात् तथा व्यापकभावे पाणिपादचतुष्टये न्यसेदित्यर्थः ।

अत्रैव न्यासस्थान्ये बहवो भेदाः कामाधिकारिविषयास्तेषु तेषु फलश्रुतेः । किन्तु तेषामेकस्मिन्नपि कृते देवपूजाया कर्म्माधिकारो जायत एव फलमप्यधिकं भवतीति ध्येयम् ।

सनत्कुमारसंहितायाम्,—

पञ्चाशदक्षरन्यासः क्रमेणैवं विधीयते।
श्रीमायाद्यन्तो नमोऽन्तो वा सबिन्दुर्बिन्दुवर्जितः॥
मायालक्ष्मीकामबीजपूर्वो वा न्यास इष्यते।
मूर्त्तिभिः केशवाद्यैस्तु कीर्त्त्याद्यैः शक्तिभिः सह॥

मायाबीजपूर्व्वो लक्ष्मीबीजपूर्व्वः कामबीजपूर्व्वश्चेति न्यासत्रयम्।
प्रकारान्तरमाह मूर्त्तिभिरिति।

तथाच तन्त्रान्तरे,—

यथाख्याः प्रणवादिका नतिपरा विष्णोस्तु ताः मातृकाः
श्रीकण्ठादिभिरेव शक्तिभिरथो पूर्व्वोक्तरीत्यादिभिः।
केशवादिक्रम उक्तः क्रमदीपिकायाम्,—

वर्णान्तुक्त्वा सार्द्धचन्द्रान् पुरस्तात्
मूर्त्तीः शक्तीर्ङेऽवसानानतिश्च।
उक्त्वा:[1] न्यस्येदादिभिः सम्यगाद्यन्
प्राणं शक्तिं क्रोधमप्यात्मनेऽन्तान्॥
ध्यात्वा तं परमपुमांसमक्षरैर्वा
विन्यस्येदिनमनु केशवादियुक्तैः।
मेधायुःस्मृतिधृतिकीर्त्तिकान्ति-
लक्ष्मीसौभाग्यैश्चिरमुपसंश्रितो भवेत्सः॥
अमुनैव रमापुरःसरं
प्रजपेद्यो मनुजो विधिं बुधः।

१ न पुस्तके, उक्त्वान्यासे मार्तिभिः।

समुपेत्य रमां प्रयोधयेत्
पुनरन्ते हरितां प्रजल्पयेत् ॥

मूर्त्तीः केशवाद्याः, शक्तीः कीर्त्त्याद्याः, ङेऽवसाना इत्यनेन केशवाय कीर्त्त्यै नम इत्यादि प्रयोग उक्तः, एतेन केशवकीर्त्तिभ्यो नम इति केषाञ्चिन्मतं निरस्तं, एतच्चागस्त्यसंहितावचने व्यक्तीभविष्यति। यादिभिरिति यत्र यादयो दशवर्णा न्यस्यन्ते तत्र सप्तधातून् प्राणशक्तिक्रोधांश्च दश आत्मनेपदान्तान् कृत्वा न्यसेत्।

तत्र '[1]सधातुप्राणशक्त्यात्मयुक्तयादिषु विष्णव इति शारदावचनात् विष्णुविशेषणतया प्रयोक्तव्यम्।

धातवश्चोक्तास्तत्रैव,—

त्वगसृङ्मांसमेदोऽस्थिमज्जशुक्रादिधातवः।

एतेन, यं त्वगात्मने पुरुषोत्तमाय वसुधायै नम इत्यादयः प्रयोगाः सम्पन्नाः।

एवं श्रीत्यादिन्यासो मन्तव्यः। फलमाह ध्यात्वेति, ध्यानञ्च प्रयोगे वक्ष्यते। अत्रैव श्रीबीजयोजनफलातिशयमाह अमुनैवेति। मूर्त्तीः शक्तीश्चागस्त्यसंहितायाम्,—

केशवाय च कीर्त्त्यै च ततो नारायणाय च।
कान्त्यै ततो माधवाय तुष्ट्यै नम इति न्यसेत् ॥
गोविन्दाय च पुष्ट्यै च विष्णवे धृत्यै च ततः।
मधुसूदनाय शान्त्यै च त्रिविक्रमाय क्रियायै ॥

---

१ ख पुस्तके, सप्तधातु०।

वामनाय क्षमायै च श्रीधराय वदेत्ततः।
मेधायै हृषीकेशाय हर्षायै च नमस्तथा॥
पद्मनाभाय श्रद्धायै ततो दामोदराय च।
लज्जायै वासुदेवाय लक्ष्म्यै सङ्कर्षणाय च॥
सरस्वत्यै प्रद्युम्नाय प्रीत्यै नम इतीरयेत्।
अनिरुद्धाय रत्यै च ततश्चैव प्रवदेद्‌य॥
चक्रिणे च जयायै च गदिने शार्ङ्गिणे तथा।
दुर्गायै च प्रभायै च खड्गिने विन्यसेदथ॥
सत्यायै शङ्खिने चैव चण्डायै नम उच्यते।
हलिने वाण्यै च नमस्ततो मूषलिने वदेत्॥
विलासिन्यै शूलिने च विजयायै ततः परम्।
पाशिने विरजायै च तथा चाङ्कुशिने वदेत्॥
विश्वायै च मुकुन्दाय विनयायै[१] नमस्तथा।
नन्दजाय सुनन्दायै नन्दिने स्मृतये नमः॥
ततो नराय ऋद्ध्यै च नमो नरकजिते तथा।
समृद्ध्यै हरये शुद्ध्यै कृष्णाय बुद्धये तथा॥
सत्याय भुक्त्यै सात्वताय मत्यै नम इतीरयेत्।
शौराय च क्षमायै च शूराय रमायै नमः॥
जनार्दनाय यामायै ततः शार्ङ्गधराय च।
क्लेदिन्यै विश्वमूर्त्तये क्लिन्नायै तदनन्तरम्॥

---

१ ख, ग, पुस्तकद्वये, विनदायै।

वैकुण्ठाय ततो ब्रूयादधुदायै नमस्तथा।
पुरुषोत्तमाय वसुधायै बलिने परायै तथा॥
बलानुजाय परायणायै नम इतीरयेत्।
तथा बालाय सूक्ष्मायै नमः स्यात्तदनन्तरम्॥
वृषघ्नाय च सन्ध्यायै वृषाय प्रज्ञायै नमः।
हंसाय च प्रभायै च वराहाय च निशायै॥
विमलाय अमोघायै नृसिंहाय ततः परम्।
विद्युतायै नमस्तद्वत् वैष्णवीं मातृकीं[१] यजेत्॥
शिरोवदनहस्तादिस्थानेष्वेवं विधिः स्मृतः।
ॐकारं मारबीजञ्च मातृकाचरमेव च॥
एकं द्वेवं यथाशक्ति एकां नम इति क्रमः।
केशवादिरयं न्यासो न्यासमात्रेण देहिनाम्॥
अच्युतत्वं ददात्येव सत्यं सत्यं न संशयः।

कामबीजाद्यं प्रकारान्तरमिदम्। ॐकारयोगात्तु फलातिशयः। प्रणवं विनापि कामादिकेशवन्यासस्य शारदादिषु दृष्टत्वात्।

अयञ्च केशवादिन्यासो विष्णुविषयः श्रीकण्ठादिस्तु देवीशिवविषयः। अस्मिन्नेव विष्णुविषये तत्त्वन्यासपञ्जरन्यासौ कार्यौ कर्त्तव्यौ। तत्त्वन्यासस्तु समाहागमसंहितायाम्,—

इतीदञ्च त्वां प्रवक्ष्यामि तत्त्वन्यासमतः शृणु।
यत्तत्त्वन्यासमात्रेण तत्त्वमेव प्रजायते॥

तत्त्वं ब्रह्मैव। न्यासोद्धार उक्तो योगिनीतन्त्रे,—

---

१ अ पुस्तके, मातृकां।

वर्णान् सबिन्दून् प्रणवादौ नमोऽन्तेऽथ पराय च ।
तत्त्वनामात्मने न्यासो नमोऽन्तोऽयमुदीरितः ॥
एताभ्यां सर्व्वदेहे च जीवप्राणौ न्यसेत् क्रमात् ।
हृन्मध्ये बुद्ध्यहङ्कारमनांसि च पदैः सह ॥
शब्दस्पर्शरूपरसगन्धांस्तानेव नामभिः ।
शिरोवदनहृद्गुह्यपादेषु च यथाक्रमम् ॥
श्रोत्रं त्वक्चक्षुषी जिह्वां नासाञ्चैव तु पञ्चमीम् ।
युक्तानेव टवर्गेण स्वस्वस्थानेषु विन्यसेत् ॥
कर्म्मेन्द्रियाणि वाक्पाणिपादपायूपस्थकम् ।
तत्तत्स्थानेषु विन्यसेत्तादिनान्तैः पृथक् पृथक् ॥
पादिमान्तैः शिरोवक्त्रहृद्गुह्यचरणेषु च ।
आकाशवायुतेजांसि जलञ्च पृथिवीं क्रमात् ॥
शिरोवदनहृद्गुह्यपादेषु व्यापकं पुनः ।
परमेष्ठी च पुरुषो विश्वो निवृत्तिरेव च ॥
सर्व्वः कोपः षड्भिरेभिः क्रमादादौ समन्वितान् ।
वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम् ॥
नारायणं नृसिंहञ्च आत्मनेऽन्तान्न्यसेच्च षट् ।
यस्यानुष्ठानमात्रेण देवभावः प्रजायते ॥

तत्त्वानां जीवादीनां नामानि जीवादिशब्दास्तदन्ते आत्मने इति पदमित्यर्थः ।

प्राञ्चस्तु तत्त्वन्यासप्रमाणाभावाज्जीवादीनां विशेषणतया तत्त्वपदमपि प्रयुञ्जते ।

[1][ओमेति ओम अकारः भृगुः मकारः अग्नीरेव इत्यर्थः। यययोरिति अगस्त्यसंहितायामपि केवलयोः यलयोर्न्यास उक्तः, यथा, यहौ यवौ च यलापि यव लव वलावपीति, क्रमदीपिकायान्तु येयलावनार्णैरित्यनेन यलयोरेको वाकारसहितयोर्न्यास उक्तः]। हयग्रीवपञ्चरात्रेऽपि,—

योऽङ्कारं विन्यसेत् पश्चात् प्रणवेन सुरोत्तम।

इत्यादि, तदयं वैकल्पिको विधिः फलभूमार्थः, यदपि प्रणवादिरयं न्यास इत्यगस्त्यसंहितायामुक्तं तदपि फलभूमार्थं मन्तव्यम्। मूर्त्तिपञ्जरन्यासमाह शारदातिलके,—

अतस्तन्मन्त्रवर्णाद्या द्वादशाक्षरसंयुताः।
द्वादशादित्यसहिता मूर्त्तीर्द्वादश विन्यसेत्॥
ललाटे केशवं धात्रा कुक्षौ नारायणं पुनः।
अर्य्यम्णा हृदि मित्रेण माधवं कण्ठदेशतः॥
वरुणेन च गोविन्दं पुनर्दक्षिणपार्श्वके।
अंशुना विष्णुमंसस्थं भगेन मधुसूदनम्।
गले विवस्वता युक्तं त्रिविक्रममनन्तरम्॥
वामपार्श्वे तथेन्द्रेण वामनाख्यमथांसके।
पूष्णा श्रीधरनामानं गले पर्जन्यसंयुतम्॥
हृषीकेशाह्वयं पृष्ठे पद्मनाभं ततः परम्।
त्वष्ट्रा दामोदरं पश्चात् विष्णुना ककुदि न्यसेत्॥

---

१ [ ] चिह्नितसन्दर्भस्य मूलप्रमाणमादर्शपुस्तकेष्ववलम्बितग्रन्थे च न दृश्यते।

द्वादशार्णं महामन्त्रं ततो मूर्द्ध्नि प्रविन्यसेत्।
एवं न्यस्तशरीरोऽसौ वासुदेवः स्वयं भवेत्॥

तन्मन्त्रस्य द्वादशाक्षरवासुदेवमन्त्रस्य एकैकवर्णाद्याः ऋ ॠ ऌ ॡ वर्ज्जितैः स्वरैर्द्वादशभिः सर्व्वादौ संयुताः वक्ष्यमाणधात्रादिद्वादशादित्यैः परतः सहिताः केशवादिद्वादशमूर्त्तीर्न्यसेत्। अत्र सानुस्वाराः स्वरा इति कस्यचिन्मतं हेयं प्रमाणाभावात्।
ऋ ॠ ऌ ॡ वर्ज्जितत्वन्तु स्वराणां क्रमदीपिकायामुक्तम्,—

केशवादियुगपञ्चमूर्त्तिभि-
र्धातृपूर्व्वमिहिरान् नमोऽन्तकान्।
द्वादशाक्षरभवाक्षरैः स्वरैः
क्लीववर्णरहितैः क्रमान्न्यसेत्॥

अत्र चतुर्थ्यन्तकेशवादिनाम्नः पश्चाच्चतुर्थ्यन्ता धात्राद्यादित्या नमोऽन्ताः प्रयोक्तव्या दर्शितम्।
तथाचागस्त्यसंहितायाम्,—

नमो भगवते ब्रूयाद्वासुदेवाय इत्यथः।
ओमादेरस्य मन्त्रस्य आदायैकैकमक्षरम्।
द्विराद्यस्याक्षरादानं श्रीरामाख्यमनोरपि॥
एकैकं केशवाद्यन्तु विष्णोर्द्वादशनाम च।
धात्राद्येकैकमादाय सूर्य्यस्यापि च नाम तु॥
स्वरादिश्च नमोऽन्तोऽयं न्यस्तव्यो न्यास उत्तमः।
एवं विन्यस्य विधिवत् साक्षान्नारायणो भवेत्॥
ज्वररोगाभिचाराद्याः प्रशमं यान्ति नान्यथा।

तन्मूर्त्तिपञ्जरन्यासोऽभिहितः परमेष्ठिना ॥

द्विरावृत्त्याचरावृत्तमिति रामचन्द्रस्य षड़क्षरत्वात् द्विरावृत्त्या द्वादशाक्षराणि भवन्ति । एतच्च रघुनाथपूजाविषये मन्तव्यं नान्यत्रेति । तेन, ॐ केशवाय धात्रे नम इत्यादयः प्रयोगाः सम्यक्ः । पञ्चकपञ्चाय काम्यतमस्य न्यासस्य ।

तथा क्रमदीपिकायाम्,—

चैतन्यामृतवपुरर्ककोटितेजा
मूर्द्धस्थो वपुरखिलं स वासुदेवः ।
अधस्तं सवितमनपायवीव चित्तं
व्याप्नोति प्रकटितमन्त्रवर्णकीर्णम् ॥

सारदातिलके मन्त्रन्यासमनन्तरमित्युक्त्वा तत्रैव विवृणोति,—

अङ्गुष्ठादिष्वङ्गुलीषु न्यसेदङ्गैः सजातिभिः ।
मध्यं तलतलयोर्न्यस्य कुर्य्यात्तालत्रयं ततः ॥
दिग्बन्धेनैव बध्नीयाच्छोटिकाभिः समन्ततः ।
हृदयादिषु विन्यस्येदङ्गमन्त्रांस्तथा सुधीः ॥
हृदयाय नमः पूर्व्वं शिरसे वह्निवल्लभा ।
शिखायै वषडित्युक्तं कवचाय हुमीरितम् ॥
नेत्रत्रयाय वौषट् स्यादस्त्राय फडिति [१क्रमात् ।
षडङ्गमन्त्रानित्युक्तान् षड़ङ्गेषु नियोजयेत् ॥
पञ्चाङ्गानि मनोर्यस्य तत्र नेत्रमतं त्यजेत् ।
तत्तत्कल्पोक्तविधिना न्यासानन्यान् समाचरेत् ॥

---

१ ख पुस्तके, [ ] चिह्नितांशो नास्ति ।

षडङ्गेषु तत्तन्मन्त्रेषु विनियोक्तेषु तत्तन्मन्त्रवर्णैः स्वजातिभिः। जातयो नमः स्वाहा वषट् हुं वौषट् फडिति] मन्त्राः षट्, तन्त्वर्चितैः एषां सर्व्वमन्त्रेष्वनुगतत्वाज्जातिपदवाच्यत्वम्। अङ्गुष्ठादौ अङ्गुष्ठाभ्यामित्यादीनां हृदयादौ हृदयायेत्यादीनाञ्च प्रयोगश्च तत्र न्यासवन्नाद‌र्श्यत्वलभ्यः एतत् सर्व्वमगस्त्यसंहितावचने व्यक्तीभविष्यति। तलयोः करतलयोरस्त्रं तत्तन्मन्त्रोक्तं अर्थात् फट्कारसहितं न्यस्य तालत्रयं कृत्वा तेनैवास्त्रमन्त्रेण छोटिकाभिरङ्गुष्ठतर्ज्जन्याक्षेपजनितध्वनिरूपाभिर्दिग्बन्धनं कार्य्यम्। एवं हृदयादिष्वप्यङ्गमन्त्रान् तत्तन्मन्त्रेषु विनियोक्तान् तथा स्वजातीन् न्यसेदित्यर्थः।

हृदयादीनां प्रकृतत्वात् तत्सहितान् कृत्वा नम इत्यादीन् जातिमन्त्रानाह, हृदयाय नम इति। वह्निवल्लभा स्वाहा, नेत्रत्रयायेति त्रिनेत्रदेवताविषयं द्विनेत्रदेवतायान्तु नेत्राभ्यां वौषडिति प्रयोक्तव्यम्।

तथाचागस्त्यसंहितायाम्,—

> चतुर्थ्यन्तनमस्कारान्ताय स्वाहान्ताय वह्नये।
> नेत्राभ्यां वौषडन्ताय रोषयस्त्राय फडात्मने॥

षडङ्गेति। इति प्रकारेणोक्तान् योजयेत् नत्वङ्गुलीषु हृदयाय नम इत्यादि अन्यथा षडङ्गेति व्यर्थं स्यात्। एतेन हृदयादयः समुदाया एवाङ्गमन्त्रा इत्युक्त्वाऽङ्गुलीष्वपि हृदयाय नम इत्यादि ये प्रयुञ्जन्ते ते निरस्ताः। तथा सति मन्त्रयन्त्रोद्धारे कवचास्त्रादिपदेषु का गतिः स्यात्।

---

१ ख पुस्तके, अस्त्रं।

क्रमदीपिकायामपि नमः पदादीनामेवाङ्गमन्त्रमुक्तं,
हृदये नतिः शिरसि पावकप्रिया वषट् शिखा क्रमपि वर्मणि स्मृतम्।
वषडस्त्रमित्युदितमङ्गपञ्चकं चतुर्थिं वौषडुदितं दृशौ यदि॥
तथा व्यक्तमाह अगस्त्यसंहितायाम्,—
अङ्गुष्ठाद्यङ्गुलीनाञ्च तथैव तलपृष्ठयोः।
न्यासस्ततः षडङ्गानां भवत्येवं प्रकल्पना॥
हृदि मूर्द्ध्नि शिखायाञ्च सर्व्वाङ्गे नेत्रयोरपि।
दिक्ष्वस्त्रञ्च नमः स्वाहा वषट् हुं वौषडप्यथ॥
तथा चैव फडित्येवं षडङ्गानाञ्च पञ्चकम्।
तत्तत्स्थाने चतुर्थ्यन्ते तत्तत्पल्लवयोगतः॥
तत्तदङ्गगतो न्यासः कर्त्तव्यश्च यथाक्रमम्।
तत्तत्स्थानेऽङ्गुष्ठादौ च चतुर्थ्यन्त इत्यर्थः।
तथा तत्रैव हनूमन्मन्त्रस्य करन्यासे स्फुटमुक्तम्।
नमो भगवते आञ्जनेयायेत्यङ्गुष्ठाभ्यां नमः स्मृतम्।
रुद्रमूर्त्तय इत्येवं तर्ज्जनीभ्यां स्वाहा ततः॥
वायुसुतायेत्यपि च मध्यमाभ्यां वषट् तथा।
अग्निगर्भाय च तथाऽनामिकाभ्यां क्रमीरितम्।
रामदूताय च पुनः कनिष्ठाभ्याञ्च वौषडित्यादि॥
तथा कालिकापुराणे मातृकान्यासे,—
आकारञ्च तथोच्चार्य्य अङ्गुष्ठाभ्यां नमस्ततः।
एवं मातृकाङ्गन्तु अङ्गुष्ठद्वयतो न्यसेत्॥ इत्यादि।
पञ्चाङ्गानीति पञ्चाङ्गमन्त्रे करतलन्यासोऽपि नास्तीति मन्तव्यम्।

अङ्गन्यासश्च निगदितोऽत्र प्राणमायाभ्याम्।
पूजाजपार्चनाहोमाः सिद्धमन्त्रकृता अपि।
अङ्गविन्यासविधुरा न ददत्यभि फलान्यमी॥

तत्तत्कृत्योक्तेति। अन्यान् मन्त्रान् प्रतिवर्णं न्यासानित्यर्थः।
शारदातिलके,—

कल्पयेदात्मनो देहे पीठं धर्मादिभिः क्रमात्।
अंसोरुयुग्मके विद्वान् प्रादक्षिण्यक्रमेण तु॥
धर्मं ज्ञानञ्च वैराग्यमैश्वर्यञ्च न्यसेत्ततः।
मुखपार्श्वनाभिपार्श्वेष्वधर्मादींश्च विन्यसेत्॥
अनन्तं हृदये पद्मं सूर्य्यसोमाग्निमण्डलान्।
सत्त्वादींस्त्रीन् गुणान् न्यसेत् कलाभावपुराविद्
आत्मानमन्तरात्मानं परमात्मानमेव च।
ज्ञानात्मानं प्रविन्यस्य न्यसेत् पीठमनुं ततः॥
एवं देहमये पीठे चिन्तयेदिष्टदेवताम्।
मुद्राः प्रदर्श्य विधिवदर्घ्यस्थापनमाचरेत्॥

धर्मादिभिः पीठं कल्पयेदित्यनेन पीठपूजायां वक्ष्यमाणायामाधारशक्त्यादीनां न्यासे उपयोगो नास्तीति दर्शितम्। प्रपञ्चसारेऽप्येवं। क्रमदीपिकायान्तु आधारशक्त्यादीनामपि न्यास उक्तः।

प्रादक्षिण्येनेत्यनेन आदौ दक्षिणांसे ततो वामांसे ततो वामोरौ ततः पश्चाद्दक्षिणोरौ धर्मादिचतुष्टयमित्यर्थः। अधर्मादीनपि प्रादक्षिण्येन मुखे वामपार्श्वे नाभौ पश्चाद्दक्षिणपार्श्वे क्रमादित्यर्थः।

---

१ ख, ग, प्रतिपदप्रतिवर्णन्यासान्।

न्यासस्तु चतुर्थ्यन्तनाम्ना नमोऽन्तेन कार्य्यः। सूर्य्यादिमण्डलान् क्रमेण प्रणवस्य वर्णत्रयादिकान् न्यसेत्। पीठपूजायां प्रणवस्य त्रिभिर्वर्णैरिति वक्ष्यमाणत्वादिति। आत्मादित्रयमपि स्वनामाद्यक्षरादिकमित्यर्थः। ज्ञानात्मानन्तु भुवनेश्वरीबीजाद्यं कृत्वा न्यसेत्। ततो हृदयस्याभितः पूर्व्वादिदिक्षु मध्ये च पीठशक्तीर्नव विन्यस्य पश्चात् पीठमन्त्रं तन्मध्ये न्यसेदिति बोद्धव्यं। पीठपूजायां तथाभिधास्यमानत्वात्।

एतच्चाप्युक्तं क्रमदीपिकायाम्,—

सूर्य्येन्दुवह्नीन् प्रणवांशयुक्तान्
आद्याक्षरैः सत्वरजस्तमांसि।
आत्मादित्रयमादिबीजघटितं व्योमाग्निमायालवै
र्ज्ञानात्मानमथाष्टदिक्षु परितो मध्ये च शक्तीर्नव।
न्यस्येत् पीठमथास्य मनुञ्च विधिवत् हृत्कर्णिकामध्यगं
नित्यानन्दचितिप्रकाशममलं सञ्चिन्तयेद्धाम तत्॥

देवताभेदेन पृथक् पृथक् नव पीठशक्तयः पीठमन्त्रश्च। तत्र विष्णोर्यथा सारदातिलके,—

विमलोत्कर्षिणी ज्ञाना क्रिया योगा ततः परम्।
प्रह्वी सत्या तथेशानाऽनुग्रहा नवमी स्मृता॥
नमो भगवते विष्णुपूर्वादिभ्योऽथ पदं ततः।
सर्व्वभूतात्मने वासुदेवायेति वदेत्ततः॥
सर्व्वात्मसंयोगपदाद्योगपद्मपदं ततः।
पीठात्मने नमोऽन्तोऽयं प्रणवादिर्मनुर्मतः॥

शक्तेर्यथा,—

जयाख्या विजया पश्चादजिता चापराजिता।

नित्या विलासिनी दोग्ध्री चाघोरा मङ्गला नव॥

ह्रीँ पद्मासनाय नमः पीठमन्त्रः प्रकीर्त्तितः।

दुर्गापीठन्तु वक्ष्यते। शिवस्य यथा,—

वामा ज्येष्ठा ततो रौद्री काली कलविकरणी।

बलविकरणी[1] पश्चाद्बलप्रमथनी ततः॥

सर्व्वभूतदमनी च नवमी ह्युन्मनोन्मनी।

ॐ नमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठात्मने नमः इति पीठमन्त्रः।

अन्येषान्तु देवानां पीठशक्तिपीठमन्त्रास्तत्कल्पेषु द्रष्टव्याः।

एवं देवं पीठत्वेन सञ्चिन्त्य तत्पद्मे इष्टदेवतां ध्यायेत्। ध्यानन्तु पृथक् पृथक् वक्ष्यते।

कालिकापुराणे,—

प्रत्यक्षीकृत्य हृदये मानसैरुपचारकैः।

षोड़शानां प्रकारैस्तु हरिं वा पूजयेच्छिवाम्॥

मुद्राः प्रदर्श्येति विष्णोर्मुद्राः शङ्खाद्याः।

यथागस्त्यसंहितायाम्,—

शङ्ख-चक्र-गदा-पद्म-धेनु-कौस्तुभ-गारुडाः।

श्रीवत्सवनमालाख्या योनिमुद्राः प्रदर्शयेत्॥

मुद्रालक्षणं वक्ष्यते। शङ्खस्थापनञ्चावश्यकमनुक्रमागमे,—

---

१ ख पुस्तके, बलविकरणी पदं नास्ति।

विनैव शङ्खपूजां यो वैष्णवः पूजयेद्धरिम्।
पूजाफलं न चाप्नोति स सम्यक्पूजकोऽपि सन्॥

अर्घ्यस्थापनमुक्त्वा तद्विधिमाह तत्रैव,—

शङ्खमस्त्राम्बुना प्रोक्ष्य वामतो वह्निमण्डले।
साधारं स्थापयेद्विद्वान् इन्दुस्रुतसुधामयैः॥
तोयैः सगन्धपुष्पाद्यैः पूजयेत्तं यथाविधि।
आधारं पावकं शङ्खं सूर्य्यं तोयं सुधाकरम्॥
स्मरेदग्न्यर्कचन्द्राणां कलास्तास्वनुक्रमात्।
मूलमन्त्रं जपेत् स्पृष्ट्वा न्यसेत्तस्याङ्गमन्त्रवित्॥
अस्त्रमन्त्रेण संरक्ष्य कवचेनावगुण्ठयेत्।
दर्शयेद्धेनुमुद्राञ्च बोधयेत्तत्समुद्रया॥
दक्षिणे प्रोक्षणीपात्रमाधायाद्भिः प्रपूरयेत्।
किञ्चिदर्घ्याम्बु संगृह्य प्रोक्षण्यामपि योजयेत्॥
अर्घ्यस्यान्तरतः कार्य्यं पाद्यमाचमनीयकम्।
आत्मानं यागवस्तूनि मण्डपं प्रोक्षयेद्बुधः॥
प्रोक्षणीपात्रतोयेन मनुनान्यान्यपि क्रमात्।

अस्त्रमन्त्रजपितजलेन शङ्खं प्रोक्ष्य स्ववामभागे भूमौ वह्निमण्डले त्रिकोणे आधारसहितं स्थापयेत् ततश्चन्द्रमण्डलनिर्गतसुधारूपैस्तोयैर्गन्धपुष्पाद्यैश्च तं शङ्खं यथाविधि पूरयेत्।

आदिग्रन्थात्,

गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः।
सदूर्वैः सर्वदेवानामेतदर्घ्यमुदीरितम्॥

इति वज्रमातृकान्यासानां वदनम्।

यथाविधीति वज्रमातृकापूरणविधिना त्रिभागक्रमेण पूरणम्।

तथा कालिकापुराणे,—

पूर्व्ववद्भावनं कृत्वा चार्घपात्रे ततो जलैः।

त्रिभागैः पूरयेत् पात्रं पुष्पं तत्र विनिक्षिपेत्॥

तथा,—

मात्मभेदेन विधिवन्मातृका प्रतिलोमतः।

जपेन्मूलमनुश्चैव पूजयेद्देवताधिया॥

देवताधिया अर्घ्यं चिन्तयन्नित्यर्थः।

गन्धपुष्पादिदानन्तु नमोमन्त्रेण कार्य्यम्।

यथा क्रमदीपिकायाम्,—

तत्र गन्धकुसुमेऽक्षतानथो निक्षिपेद्धृदयमन्त्रमुच्चरन्।

तीर्थावाहनमप्यत्र कार्य्यं यथा तत्रैव।

तत्र तीर्थमनुनाभिवाहयेत्तीर्थमुष्णहविमन्त्रमातृतः।

गङ्गे च यमुने चैव गोदावरि सरस्वति॥

नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु।

एष तीर्थमनुः प्रोक्तो दुरितौघनिवारणः॥

क्रमदीपिकायान्तु सबिन्दुकैः प्रतिलोमाक्षरैः पूरणं यल्लिखितं तन्मन्त्रातिरिक्तार्थम्। अन्यत्र केवलविलोममातृकाविधानात्॥

आधारमिति। आधारादिकं वह्न्यादिरूपेण कृत्वा तेष्वाधारादिषु वह्न्यादीनां कला अपि स्मरेत्। वह्न्यादीन् कलाश्च पूजयेदिति तात्पर्य्यम्।

तदुक्तमगस्त्यसंहितायाम्,—

अस्त्रमन्त्रेण[1] संशोध्य तदाधारे निधाय च।
पूरयेत्कुङ्कुतोयेन मूलमन्त्रेण मन्त्रवित्॥
पूजयेदग्निसूर्य्येन्दुबिम्बैस्तत्तत्कलान्वितैः।
तत्तत्कलानां संख्या तु दशद्वादशषोडश॥
आधारमण्डलतोयेषु तत्तदात्मानमर्च्चयेत्।
तीर्थावाहनमन्त्रेण तीर्थमावाहयेज्जले॥
बिम्बैर्मण्डलैस्तत्तद्दश्यादिकलान्वितै[2]रित्यर्थः।

कुत्र वा कथं वा पूजयेदित्याशङ्क्याह आधारेति यथाक्रममाधारादिषु तत्तद्दशादिसंख्यकलात्मानं कृत्वा तत्तन्मण्डलमर्च्चयेदित्यर्थः।

तेन दशकलात्मने वह्निमण्डलाय नम इत्यादयः प्रयोगाः।

अपःसूक्तमनुमिति जलं स्पृष्ट्वाष्टवारं मूलमन्त्रं जपेत्, तत्र मन्त्रस्याङ्गं षडङ्गन्च विधिज्ञो न्यसेत्।

तदुक्तं क्रमदीपिकायाम्,—

[3][संस्पृशन् जपतु मन्त्रमष्टश इति]।

अस्त्रमन्त्रेण संरक्ष्य तालत्रयं दिग्बन्धनञ्च कृत्वा कवचमन्त्रेण हुमित्यनेन वक्ष्यमाणावगुण्ठमुद्रयाऽवगुण्ठयेत्।

---

१ ग पुस्तके, अस्त्रं मन्त्रेण।
२ क पुस्तके, तत्तत्कलान्वितैः।
३ ग पुस्तके, [ ] चिह्नितांशो नास्ति।

क्रमदीपिकायान्तु,—

वर्म्मणा समवगुण्ठ्य दोर्युगेति स्वातन्त्र्येऽपि अभिहितं तत् सार-दाद्यसम्मतमिति ।

तस्य बोधनमुद्रया बोधयेत् ।

धेनुमुद्रा सन्निरोधनमुद्रा च वक्ष्यते ।

दक्षिणेऽर्घ्यस्येति विशेषः । अर्घ्यपात्रस्योत्तरतो वामे इत्यर्थः ।

पाद्याचमनीयद्रव्याणि वक्ष्यन्ते ।

यागवस्तूनि पूजासाधनद्रव्याणि गन्धपुष्पादीनि मनुना इष्टेन अन्यानि पूजाद्रव्याधारपात्रादीनि ।

अनन्तरमात्मार्च्चनमाह शारदातिलके ।

न्यासक्रमेण देहे स्वे धर्म्मादीन् पूजयेत्ततः ।
पुष्पाद्यैः पीठमन्त्रान्तं तस्मिंश्च परदेवताम् ॥
त्रिना निवेद्यं गन्धाद्यैरुपचारैः समर्च्चयेत् ।
पञ्चकलः पुनः कुर्य्यात् पुष्पाञ्जलिमनन्यधीः ॥
उत्तमाङ्गे हृदाधारे पदे सर्व्वाङ्गके क्रमात् ।
गुरूपदिष्टविधिना शेषमन्यत् समापयेत् ॥

स्वदेहे पीठन्यासोक्तविधिना तेषु तेषु स्थानेषु धर्म्माय नम इत्यादिक्रमेण धर्म्मादीन् पीठमन्त्रान्तान् पुष्पाद्यैर्गन्धपुष्पैः पूजयेत्। तस्मिंश्च पीठरूपे देहे हृन्मध्ये परदेवतामिष्टदेवं सञ्चिन्त्य गन्धाद्यै-र्गन्धपुष्पधूपदीपनैवेद्यैः पञ्चोपचारैर्नैवेद्यवर्ज्जितैश्चतुर्भिः समर्च्चयेत्तत-श्चानन्यधीर्देवतात्मनोरभेदबुद्धिः सन् उत्तमाङ्गादिषु पञ्चसु पञ्च पुष्पाञ्जलीन् यथाक्रमं दद्यात् ।

गुरूपदिष्टेति । योऽननिश्चितोऽन्यानन्यकारणत्व: सम्यकावयोवो निमीलितलोचन: सर्व्वैश्वर्य्यमयं देवं विभाव्य सोऽहमिति मन्त्रं जपन् अनन्यमतिर्देवाकारतया आत्मानं विभावयन् आनन्दाद्भुतमग्नो निश्चलाङ्ग: सन् तिष्ठेदिति गुरूपदेश: ।

क्रमदीपिकायान्तु,— बाह्यार्च्चननिरपेक्ष: सर्व्वोपचारसहित: स्वदेह एव देवार्च्चनविशेषो जपसहितोऽभिहित:, स च सर्व्वदानर्थाङ्गशोधकश्चैव ।

गौतमीतन्त्रे,—

शालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु च ।
नित्यं पूजा हरे: कार्य्या न तु केवलभूतले ॥

हरेरित्युपलक्षणं, शालग्रामे सर्व्वदेवार्च्चनमेव कार्य्यं सर्व्वदेवमयस्य हरेर्नित्यं तत्र सन्निधानात् ।

स्कन्दपुराणे,—

[1][कामासक्तोऽपि वै नित्यं भक्तिभावविवर्ज्जित: ।
शालग्रामशिलां पुत्र योऽर्च्चयेत् सोऽच्युतो भवेत् ॥
कोटिलिङ्गसहस्रैस्तु पूजितैर्यत्फलं भवेत् ।
तत्फलं कोटिगुणितं शालग्रामशिलार्च्चने ॥
द्वादशशिला यो वै शालग्राममसमुद्भवा: ।
अर्च्चयेद्वैष्णवो नित्यं तस्य पुण्यं निबोध मे ॥]
कोटिलिङ्गसहस्रैस्तु पूजितैर्जाह्नवीतटे ।

---

१ ख पुस्तके, [ ] चिह्नितांशो नास्ति ।

कामीचले पुनाष्टौ छिन्नेनैव तद्भवेत् ।

मणौ सूर्य्यकान्तादौ च सर्व्वदेवार्च्चनं यन्त्रे मन्त्राक्षररचिते तत्तत्कल्पेषु विभिन्नोर्म्मिः ।

यथागस्त्यसंहितायाम्,—

यन्त्रं मन्त्रमयं प्राहुर्देवता मन्त्ररूपिणी ।
यन्त्रे मन्त्रं समाराध्य प्रसाधयति राघवम् ॥
सर्व्वेषामपि मन्त्राणां पूजा यन्त्रे प्रशस्यते ।
यन्त्रे मन्त्रं समाराध्य यदभीष्टं तदाप्नुयात् ॥

मण्डले सर्व्वतोभद्रादौ सर्व्वदेवार्च्चनं प्रतिमासु तत्तद्देवता-प्रतिकृतिषु तथा वारिपूर्णकुम्भेऽपि ।

यथागमे,—

निधाय कलसं तत्र तीर्थतोयप्रपूरितमित्यादि ।

नरसिंहपुराणे,—

अप्स्वग्नौ हृदये सूर्य्ये मण्डले प्रतिमासु च ।
यन्त्रे तेषु हरेः सम्यगर्च्चनं मुनिभिः स्मृतम् ॥

आवश्यकपूजा तु सर्व्वाभावे मनसैव कार्य्या ।

यथा कालिकापुराणे,—

प्रवासे पथि वा मार्गे स्नानाप्राप्तौ जलेऽपि वा ।
कारागारनिबद्धो वा प्रायोवेशगतोऽपि वा ॥
बहिर्व्वा महामायापूजां कुर्य्याच्च मानसीम् ।

तत्र यन्त्रादौ प्रथममुत्तरे गुरुपूजां दक्षिणे गणेशपूजामाच

क्रमदीपिकायाम्,—

वायव्याद्यादीशपर्य्यन्तमर्च्या पीठस्योदक् गौरवी पंक्तिरादौ।
पूज्योऽन्यत्राप्याम्बिकेयः कराग्रैः पाशं दन्तं साङ्कुशभीतिं दधानः।

गुरुपंक्तिरुक्ता ज्ञानार्णवे,—

श्रीगुरुश्च महेशानि गुरुः परमसंज्ञकः।
परमेष्ठी गुरुः पश्चात् पूजयेत् स्वगुरुत्रयम्॥

अन्यत्र दक्षिणे भागे गणेशं ध्यात्वावाह्य पञ्चोपचारैः पूजयेत्।

तथा,—

गणेशं विघ्ननाशाय संपूज्य पूजयेद्धरिम्।

गणेशध्यानं प्रयोगे लिख्यते।

गणेशादिपूजा सामान्यार्घोदकेनैव कार्य्या न तु प्रधानोदकेन।

यथा नारदतन्त्रे,—

सामान्येनार्घ्यपात्रेण वह्निः कुर्य्यात् प्रपूजनम्।
विशेषार्घ्यं न दातव्यं प्रायश्चित्तं प्रपद्यते॥
अस्त्रेण पात्रं संशोध्य ह्मन्त्रेण प्रपूरयेत्।
निक्षिपेत्तीर्थमावाह्य गन्धादीन् प्रणवेन तु॥
दर्शयेद्धेनुमुद्राञ्च सामान्यार्घ्यमिदं स्मृतम्।

पीठपूजामाह तत्रैव,—

आराध्याधारशक्त्याद्यमरचरणपावध्यथो मध्यभागे
धर्म्मादीन् वह्निरक्षःपवनशिवगतान् दिक्ष्वधर्म्मादिकांश्च।
मध्ये शेषाब्जबिम्बत्रितयगुणगणात्मभ्रजं केशराणां
मध्ये मध्ये च शक्तीर्नव समभियजेत् पीठमन्त्रेण भूयः॥

अमरवरच्छपो देववृक्षः कल्पवृक्ष इति यावत्। त्रिमण्डितयं सूर्य्यसोमाग्निमण्डलानाम् गुणत्रयं सत्त्वादित्रयं, आत्मचतुष्टयं आत्मादि-चतुष्टयम्।

तथाच शारदातिलकम्,—

आधारशक्तिमारभ्य पीठमन्त्रान्तमर्चयेत्।

योगिनीतन्त्रे,—

आधारशक्तिं मध्येऽथ ततः कूर्म्मं समर्च्चयेत्।
तथानन्तं तत्र पृथ्वीं सागरं तत्र पूजयेत्॥
तत्र रत्नमयं द्वीपं तस्मिंश्च मणिमण्डपम्।
यजेत् कल्पतरुं तत्र साधकाभीष्टसिद्धिदम्॥
अधस्तात् पूजयेत्तस्य वेदिकां रत्ननिर्म्मिताम्।
पश्चादभ्यर्च्चयेत्तस्यां पीठं धर्म्मादिभिः क्रमात्॥
आग्नेयादिषु कोणेषु धर्म्मादीन् पादरूपिणः।
गात्ररूपानधर्म्मादीन् दिक्षु मध्येऽथ संयजेत्॥
शेषं पद्मं तत्र सूर्य्यचन्द्रपावकमण्डलान्।
प्रणवस्य त्रिभिर्वर्णैरादिवर्णैर्गुणत्रयम्॥
आत्मानमन्तरात्मानं परमात्मानमादिना।
ज्ञानात्मानञ्च विन्यस्य पीठशक्तीर्नव क्रमात्॥
केशरेषु च पूर्व्वादि मध्ये च पूजयेत् सुधीः।
आसनं पीठमन्त्रेण मध्ये पुष्पैः प्रकल्पयेत्॥
मूलेन मूर्त्तिं संकल्प्य छायायां कल्पशाखिनाम्।
आवाह्य पूजयेत्तस्यां मन्त्री मन्त्रस्य देवताम्॥

आधारशक्त्यनन्तरं प्रकृत्यै नम इति केचिद्वदन्ति तदयुक्तम्, शारदातिलकादिषु सर्व्वतन्त्रेष्वनुक्तत्वात् ।

यत्तु,—आधारशक्तिं प्रकृतिं कमठं शेषचमाक्षीरसिन्धूनिति क्रमदीपिकावचनं, तस्यायमर्थः,—

आधारशक्तिस्वरूपा प्रकृतिः प्रधानमित्येकैव न तु पृथगिति ।

नारदपञ्चरात्रे नारायणपूजायाम् ।

तत आधारशक्तिञ्च कूर्म्मञ्चानन्तमेव च ।

तैयायागरसंहितायाम्,—

आधारशक्तिकूर्म्माभ्यां नागाधिपतये तथा ।

पृथिव्यै च तथा क्षीरसागराय नमस्तथा ॥

श्वेतद्वीपाय च तथेत्यादि ।

अत्र विष्णुविषये, क्षीरसागरः श्वेतद्वीपश्च विशेषः, अन्यत्र सागरमात्रं रत्नद्वीपश्चेति ।

तस्यां रत्नवेदिकायां पीठं धर्म्मादिभिरित्यनेन धर्म्माद्यारभ्यैव पीठपूजा आधारशक्त्यादिपूजात्वाधारपूजामात्रमिति दर्शितम् ।

अतएव प्रपञ्चसारे आधारशक्त्यादिपूजा नोक्ता, शारदातिलकेऽपि तन्न्यासो नोक्तः ।

आदिना आद्यवर्णेन, बिन्दुना भुवनेश्वरीबीजेन, मध्ये पीठमध्ये, मूलेन मूलमन्त्रेण, मूर्त्तिं देवताकारं, संकल्प्य विभाव्य, तस्यां मूर्त्तौ देवतामावाह्य उपचारैः पूजयेत् ।

तथा शारदातिलके,—

मूलेन मूर्त्तिं कृप्त्वाथ तस्यां तां कल्पयेत्पुनः (?) ।

आवाह्य पूजयेत्तत्र मन्त्री मन्त्रस्य देवताम् ।
मूलमन्त्रं समुच्चार्य्य सुषुम्णावर्त्मना सुधीः ।
आनीय तेजः स्वस्थानात् नासिकारन्ध्रनिर्गतम् ॥
संयोज्य ब्रह्मरन्ध्रेण मूर्त्तावावाहयेत् पुनः ।
संस्थापनं सन्निधानं सन्निरोधमनन्तरम् ॥
सकलीकरणं पश्चाद्विदध्यादवगुण्ठनम् ।
अमृतीकरणं कृत्वा कुर्व्वीत परमीकृतिम् ॥

आवाहनप्रकारमाह मूलमन्त्रमिति ।

एवं सञ्चिन्त्य मूलमन्त्रं पठन् तेजोरूपतामापाद्य तत्तेजः स्वस्थानादात्मस्थानात् सत्पथात् पुष्पाञ्जलौ मूलमन्त्रेण नासारन्ध्रेण निर्गमय्य पूर्व्वसंकल्पितमूर्त्तौ तदीयब्रह्मरन्ध्रद्वारा संयोज्य प्रवेश्य इहागच्छागच्छेति स्वमुद्रया आवाहयेत् तिष्ठ तिष्ठेति स्थापनं सन्निहितो भवेति सन्निधापनं सन्निरुद्धो भवेति सन्निरोधनं स्वस्वमुद्राभिः कृत्वा सकलीकरणं देवताङ्गे षडङ्गन्यासं अवगुण्ठनादीनि च तूष्णीं स्वस्वमुद्रया कुर्य्यात् । अथ सकलीकरणात् पूर्व्वमभिमुखो भवेति तन्मुद्रया सम्मुखीकरणं बोद्धव्यम् । मुद्राश्च वक्ष्यन्ते । ततः प्राणप्रतिष्ठां कुर्य्यात् ।

यथागमे,—

राममावाह्य संस्थाप्य सन्निधाप्य च मुद्रया ।
प्रसाद्य सम्मुखीकृत्य सन्निरुध्य च पूजयेत् ॥
सकलीकृत्य तत्प्राणान् तदीयानीन्द्रियाण्यपि ।
प्रतिष्ठाप्यार्च्चयेद्विष्णुमन्यथा निष्फलं भवेत् ॥

प्राणप्रतिष्ठामन्त्रमाह शारदातिलके,—

पाशादित्र्यक्षराद्यन्ते स्यादमुष्यपदं पुनः।
ततः प्राणा इह प्राणाऽमुष्य जीव इह स्थितः॥
अमुष्य सर्व्वेन्द्रियाणि भूयोऽमुष्यपदं भवेत्।
वाङ्मनश्चक्षुश्रोत्रघ्राणप्राणा अनन्तरम्॥
क्रमादिहागत्य सुखं चिरं तिष्ठन्तु ठद्वयम्।
प्रत्यमुष्यपदात् पूर्व्वं पाशादीन् विनियोजयेत्॥
अयं प्राणमनुः प्रोक्तः सर्व्वजीवप्रदायकः।

पाशादित्र्यक्षरं, आँ ह्रीँ क्रोँ इति वीजत्रयं आत्मा हंस इति। अमुष्येति देवतानामकीर्त्तनं प्रत्यमुष्यपदात् पूर्व्वं पाशादित्र्यक्षरं हंस इति वदेत्। स्वाहापदस्य ठद्वयमिति संज्ञा। शारदातिलक एवायं मन्त्रो यादिवर्णसंयोगेन प्रकारान्तरेण वक्ष्यते। स च मन्त्रो वश्यादिषट्कर्म्मस्थिरप्रतिमायाञ्च नियोज्यः, अयञ्च मन्त्रो यत्र मयोविसर्ज्जनं तत्रैवेति तत्त्वम्।

एतच्चावाहनादिकं विसर्ज्जनञ्च शालग्रामे प्रतिष्ठितप्रतिमायाञ्च न कार्य्यं तत्र देवतायाः सदैव सान्निध्यात्। किन्तु हृदयस्थ-तेजः पुष्पाञ्जलिना तत्रस्थदेवतायां संक्रमय्य सम्मुखीकरणावगुण्ठ-नामृतीकरणपरमीकरणानि कुर्य्यात् विरोधाभावात्।

अतएव पुरश्चरणचन्द्रिकायाम्,—

शालग्रामे स्थावरे च नावाहनविसर्ज्जने।
शालग्रामशिलादौ तु देवः सन्निहितः सदा॥

स्थावरे प्रतिष्ठितदेवे।

तथा श्रीभागवते,—

उद्वासावाहने न स्तः स्थिरायामुद्धवार्च्चने ।
अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद्द्वयम् ॥

उद्वासो विसर्ज्जनं, स्थण्डिले मण्डलादौ ।

मुद्राश्चोक्ताः शारदातिलके,—

आवाहनादिका मुद्राः प्रवक्ष्यामि यथाक्रमम् ।
याभिर्विरचिताभिस्तु मोदन्ते सर्व्वदेवताः ॥
सम्यक् सुपूजितः पुष्पैः कराभ्यां कल्पितोऽञ्जलिः ।
आवाहनी समाख्याता मुद्रा देशिकसत्तमैः ॥
अधोमुखीकृता चैव प्रोक्ता स्थापनकर्म्मणि ।
आश्लिष्टमुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका ॥
सन्निधाने समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः ।
अङ्गुष्ठगर्भिणी चैव सन्निरोधे समीरिता ॥
देवताङ्गे षडङ्गानां न्यासः स्यात् सकलीकृतिः ।
सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्ज्जनी ।
अवगुण्ठनमुद्रेयमभितो भ्रामिता सती ॥
अन्योन्याभिमुखाश्लिष्टकनिष्ठानामिका पुनः ।
तथैव तर्ज्जनीमध्या धेनुमुद्रा समीरिता ॥
अमृतीकरणं कुर्य्यात्तया देशिकसत्तमः ।
अन्योन्यग्रथिताङ्गुष्ठा प्रसारितकराङ्गुली ॥
महामुद्रेयमुदिता परमीकरणे बुधैः ।
प्रयोजयेदिमा मुद्रा देवतायागकर्म्मणि ॥

आगमे,—

उत्तानमुष्टियुगला सम्मुखीकरणी स्मृता।

विष्णोर्मुद्राश्चोक्ता नारदतन्त्रे,—

वाममुष्टिस्थताङ्गुष्ठो गोपयित्वा तद्द्वयकम्।
वामाङ्गुष्ठस्य मूलेन तद्द्वयं विन्यसेत्ततः॥
मुष्टिवाद्यविनिक्षिप्तद्व्यहस्तायदेग्रतः।
शङ्खमुद्रेयमाख्याता प्रशस्ता देवतार्च्चने॥
विपर्य्यस्तौ ततौ कृत्वा वामदक्षिणहस्तयोः।
अङ्गुष्ठतर्ज्जनीमध्ये द्वे कनिष्ठे प्रसारिते॥
तर्ज्जनीमध्यमानामा विरलाः षट् प्रसारिताः।
सुगुप्ता चक्रमुद्रेयमाख्याताऽष्टारचक्रवत्॥
अन्योन्याभिमुखाश्लिष्टाङ्गुली प्रोन्नतमध्यमौ।
संश्लिष्टावुन्नतौ हस्तौ गदामुद्रेयमीरिता॥
दत्त्वाङ्गुष्ठद्वयं मध्ये परितोऽष्टाङ्गुलीनथ।
कुटिलान् साङ्गुलीन् कुर्य्यात् पद्ममुद्रा सुशोभना॥

प्रकारान्तरेण पद्ममुद्रोक्ता कालिकापुराणे,—

मणिबन्धादाकरभं संयोज्य करयोर्द्वयोः।
अङ्गुष्ठे चापि संयोज्य तथैव च कनिष्ठिके[१]॥
तिर्य्यक्स्थितौ द्वयोः पाण्योरङ्गुल्यो विरलास्ततः।
पद्ममुद्रा समाख्याता चतुर्वर्गप्रदा नृणाम्॥

---

१ क, ख, पुस्तके, कनिष्ठके।

नारदतन्त्रे,—

अन्योऽन्याभिमुखं बद्ध्वे कनिष्ठे द्वे अनामिकाम् ।
वामां दक्षिणतर्ज्जन्या[1] धृत्वाऽन्यास्तु षडङ्गुलीः ॥
एकत्र प्रोन्नताः कृत्वा योजयेत् कौस्तुभाभिधा ।
तिर्य्यक् कृत्वा कनिष्ठे द्वे विपरीतं नियोजयेत् ॥
तदधोऽङ्गुष्ठयुगलं बहिः किञ्चिद्विनिर्गतम् ।
तर्ज्जनीमध्यमानामाः संश्लिष्टास्तु परस्परम् ॥
प्रकुर्य्यात् प्रोन्नताः सर्व्वा मुद्रा गारुडसंज्ञिता ।
कनिष्ठाद्वयमूले तु तर्ज्जन्यग्रद्वयं भवेत् ॥
मध्यमानामिके द्वे द्वे अङ्गुष्ठद्वयमध्यतः ।
कनिष्ठाङ्गुष्ठयोरग्रं लग्नं श्रीवत्ससञ्ज्ञिता ॥
वनमाला भवेन्मुष्टिद्वयी प्रोन्नततर्ज्जनी ।
मालाकारं तर्ज्जनीभ्यां ताभ्यामारभ्य कण्ठतः ॥
भ्रामयेत् पादपर्य्यन्तं देवदेवस्य चक्रिणः ।
तर्ज्जनीभ्यामनामे द्वे बद्ध्वा तदुपरिस्थिते ॥
प्रसारिते मध्यमे द्वे सरले तु कनिष्ठके ।
व्यत्ययान्मध्यमामध्यभागे च विनियोजयेत् ॥
मध्यमाधःस्थिताङ्गुष्ठा योनिमुद्रा समीरिता ।
ओष्ठे वामकराङ्गुष्ठीयाग्रस्तस्य कनिष्ठिका ॥
दक्षिणाङ्गुष्ठसंलग्ना तत्कनिष्ठा प्रसारिता ।
तर्ज्जनीमध्यमानामाः किञ्चित् सङ्कुच्य चालिताः ॥

---

१ ग पुस्तके, ०तर्ज्जन्या ।

वेणुमुद्रेयमुदिता सुगुप्ता प्रेयसी हरेः।
दक्षिणाङ्गुष्ठे वक्रान्यमङ्गुष्ठं तु तद्द्वयम्॥
इतराङ्गुलीभिः संपीड्य वामाभिस्ताश्च पीडयेत्।
हृदये स्थापिता विल्वमुद्रा विल्वफलाकृतिः॥

कालिकापुराणे,—

मुद्रां विना तु यज्जप्यं प्राणायामः सुरार्चनम्।
योगो ध्यानासने चापि निष्फलानि तु भैरव॥

पूजा तु षोड़शोपचारैः कार्य्या अशक्तौ दशभिस्तदशक्तौ पञ्चभिरुपचारैरिति।

प्रपञ्चसारे,—

आसनं स्वागतं चार्घ्यं पाद्यमाचमनीयकम्।
मधुपर्काचमस्नानवसनाभरणानि च॥
सुगन्धसुमनोधूपदीपनैवेद्यवन्दनाः।
प्रयोजयेदर्चनायामुपचारांस्तु षोड़श॥
अर्घ्यपाद्याचमनमधुपर्काचमा अपि।
गन्धादयो निवेद्यान्ता उपचारा दश क्रमात्॥
गन्धादयो निवेद्यान्ता पूजा पञ्चोपचारिकी।

अत्रार्घ्यानन्तरं पाद्यमाचमनीयञ्चोक्तम्। शारदातिलकादिषु पाद्याचमनीयानन्तरमर्घ्यमुक्तम्। कालिकापुराणे पाद्यार्घ्याचमनीयक्रम उक्तो, दुर्गापूजायां वक्ष्यते।

तथा श्रीभागवते,—

पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः।

अतस्त्रैविध्यको वैकल्पिकः त्रिविधः क्रमः। अथवा मद्विधीकृत्य नमस्कारं, मद्विधिनमस्कृतिरिति कालिकापुराणात्। देयाः षोडशोपचारास्तु स्वागतवर्ज्जिता आचमनवर्ज्जिता एवेति वक्ष्यन्ते।

अत्यन्ताशक्तावुपचारद्वयेनापि पूजामाह कालिकापुराणे,—

सम्यक् सम्पादिता पूजा यदि कर्त्तुं न शक्यते।
उपचारांस्ततः सम्यक् पञ्चैतान् वितरेत् पुनः॥
गन्धं पुष्पञ्च धूपञ्च दीपं नैवेद्यमेव च।
अभावे गन्धपुष्पाभ्यां तदभावे च भक्तितः॥

अत्र यद्यपि, देवानां नमसा कार्य्यं पितॄणाञ्च स्वधेति च। इति देवलवचनान्नमःपदेनैव देवदानमिति परिभाषा, तथापि स्वाहापदेनार्घ्यं स्वधापदेनाचमनीयमधुपर्कौ सर्वमन्यत् नमःपदेन देयं विशेषवचनात्।

यथा शारदातिलके,—

पाद्यं पादाम्बुजे दद्याद्देवस्य हृदयाणुना।

अणुर्मन्त्रः हृदयाणुना हृन्मन्त्रेण नम इत्यनेन।

रुद्रयामले शम्भुनाप्युक्तम्,—

पाद्यं पादाम्बुजे दद्यादग्रे चाचमनीयकम्।
अर्घ्यं शिरसि देवस्य पुष्पदूर्व्वाक्षतानि च॥
नमः स्वधा च स्वाहा च वौषट् चेति यथाक्रमम्।

योगिनीतन्त्रेऽपि,—

अर्घ्यं स्वाहेति शिरसि दद्याद्दूर्व्वाक्षतादिकम्।
पाद्यं नमः इति प्रोच्य दद्यात् पाद्यन्तु पादयोः॥

स्वधेत्याचमनीयन्तु देवस्य मुखपङ्कजे।
स्वधेति मधुपर्कञ्च पुनराचमनीयकम्॥
स्नानीयं वसनं पुष्पं धूपं दीपं स्रजं तथा।
चन्दनञ्च नमोऽन्तेन तत्तच्छब्देन कल्पयेत्॥

पूर्ववचने वौषड़िति पुष्पदानमुक्तम्। अस्मिंश्च वचने नमःपदेनेति तद्द्वयं कल्पः।

पुरश्चरणचन्द्रिकायामपि,—

नमःस्थाने स्वधा ब्रूयादेतेनाचमनं मुखे।
मधुपर्कं प्रयुञ्जीत तेनैव वदने बुधः॥

एतेन शारदातिलके स्वधामन्त्रेणेत्यत्र लिपिचाकृत्यमोहात् प्रकरणापरिचयाच्च सुधामन्त्रेणामृतवीजेन वमित्यनेनेति केषाञ्चिद्‌व्याख्यानमपास्तम्।

उत्सर्गप्रकारश्च उक्तो यथा।

मूलमन्त्रं समुच्चार्य्य तदन्ते देवताभिधाम्।
चतुर्थ्यन्तामथाभाष्य इदं द्रव्यं नमो वदेत्॥

कालिकापुराणे,—

गन्धः पुष्पं तथा धूपो दीपो नैवेद्यमेव च।
यच्च यद्दीयते द्रव्यमलङ्कारादिकासनम्॥
तेषां दैवतमुच्चार्य्य त्वत्वा प्रोक्षणपूजने।
उत्सृज्य मूलमन्त्रेण प्रतिनाम्ना निवेदयेत्॥
वरुणस्य तु वीजेन तेषां प्रोक्षणमाचरेत्।
अर्घ्यपात्रस्थितैस्तोयैर्विना यन्निवेदितम्॥

हीयते चेष्टदेवेभ्यः सर्व्वं तन्निष्फलं भवेत् ।
रोगाल्लोभात् प्रमादाद्वा सर्व्वपापपरिष्कृतम् ॥
तोयं स्रुतं चेत् पात्रात्तत् पुनः कुर्य्यात्तदाहृतम् ।
अत्यावश्यके तोये तु पात्रे मन्त्राहृतोदके ॥
तथान्यदुदकं दद्यात्तेनैवाहृतं भवेत् ।
नार्घ्यं प्रदद्यादन्येभ्यो मूलदेवाय कल्पितम् ॥
परिवारगणांस्तत्र सामान्यार्घ्येण पूजयेत् ।

प्रोक्षणपूजने कृत्वा द्रव्यदेवतामुच्चार्य्य मूलमन्त्रेणोत्सृज्य द्रव्यनाम गृहीत्वा देवतायै निवेदयेदित्यर्थः ।

तेनायं प्रयोगः ।

वमिति वरुणबीजेन द्रव्यं प्रोक्ष्य अमुकद्रव्याय नम इति पुष्पं दत्त्वा मूलमन्त्रं पठित्वा अमुकदेवाय अमुकद्रव्यं अमुकदैवतं नम इति सर्व्वोदकेनोत्सृज्य इदममुकद्रव्यमिति निवेदयेदिति ।

प्रत्युपचारान्ते तूष्णीं जलदानमुक्तम् सारदातिलके,—

देवस्य मस्तकं कुर्य्यात् कुसुमोपचितं सदा ।
पूजाकाले देवताया नोपरि भ्रामयेत् करम् ॥
तत्र तत्र जलं दद्यादुपचारान्तरान्तरे ।

उपचारमाह सारदातिलके,—

अथोपचारान् कुर्व्वीत तन्त्रवित् स्वागतादिकान् ।
स्वागतं कुशलप्रश्नं निगदेदग्रतो गुरुः ॥
पाद्यं पादाम्बुजे दद्यात् देवस्य हृदयाणुना ।
एतत् श्यामाकदूर्व्वाब्जविष्णुक्रान्ताभिरीरितम् ॥

स्वधामन्त्रेण वदने दद्यादाचमनीयकम्।
आतीजवज्रमक्षोभेरुक्तं तन्त्रवेदिभिः।
अर्घ्यं दिग्मेततो मूर्ध्नि स्वाहामन्त्रेण देशिकः॥
गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः।
सदूर्व्वैः सर्व्वदेवानामेतदर्घ्यमुदीरितम्॥
स्वधामन्त्रेण वै कुर्य्यान्मधुपर्कं मुखाम्बुजे।
आज्यं दधिमधून्मिश्रमेतदुक्तं मनीषिभिः॥
तेनैव मनुना दद्यादद्भिराचमनीयकम्।
गन्धाद्भिः कारयेत् स्नानं वाससी परिधापयेत्॥
दद्यात् यज्ञोपवीतञ्च हाराद्याभरणैः सह।

स्वागतादिकानिति।

प्रथमं पीठमन्त्रेणैव पुष्पाञ्जलिना आसनं कल्पितमतः स्वागता दिकानित्युक्तं अतएव तत्र पश्चात् सर्व्वत्र पीठमन्त्रेण पुष्पाञ्जलिन आसनदानमुक्तम्। यथा भुवनेश्वरीतन्त्रे,—

बीजाद्यमासनं दत्वा मूर्त्तिं तेनैव कल्पयेत्।

नारायणमन्त्रेऽपि,—

दत्वा तेनासनं मन्त्री मूर्त्तिं मूलेन कल्पयेत्।

शिवमन्त्रेऽपि,—

अमुना मनुना दद्यादासनं गिरिजापतेः। इति

सनत्कुमारसंहितायामपि पीठमन्त्रमुक्त्वा।

[१]इति मन्त्रेण तन्मध्ये कुर्य्यात् पुष्पाञ्जलिं पुनः।

---

१ मूलमन्त्रे, एवं संपूजिते पीठे।

एवं क्रमासने पुष्पैर्देवमावाह्य पूजयेत्।

तथा,— आसनं पीठमन्त्रेण मध्ये पुष्पैः प्रकल्पयेत्।

ग्रन्थौ तु काष्ठाद्यासनमपि पृथक् दद्यात्।

अतएव कालिकापुराणे,—

आसनं प्रथमं दद्यात् पौष्पं दारवमेव वा।

वास्त्रं वा चार्म्मणं कौशं मण्डपस्योत्तरे न्यसेत्॥

अग्रत इति आवाहनानन्तरं कर्त्तव्यानामुपचाराणामग्रत इत्यर्थः। श्यामाकलक्षणभेदः।

आगमे श्यामाकं पूर्व्वमेव चेति दूर्व्वादिवत् श्यामाकाद्यमपीति। अन्ये तु श्यामाकतण्डुलानाहुः। अब्जं पद्मपुष्पं विष्णुक्रान्ता अपराजिता तद्द्वयमित्यर्थः। अक्षता आर्द्रतण्डुलाः। सर्व्वदेवानामिति प्राक् पश्चादपि सर्व्वोपचारेषु सम्बध्यते, तेनैव मनुना स्वधेत्यनेन।

पाद्यादिपात्रप्रमाणमुक्तं कालिकापुराणे,—

षडङ्गुलविहीनन्तु न पात्रं कारयेत् क्वचित्।

सर्व्वत्र स्वर्णवस्त्रादमर्घ्यपात्रे ततोऽधिकम्॥

तथा तत्रैव,—

न दद्यात्ताम्रकरपात्रार्घ्यं मृण्मयतोयैर्विचक्षणः।

तथा न शुक्तिपात्रेण विष्णवेऽर्घ्यं निवेदयेत्॥

मधुपर्कपात्रमुक्तं तत्रैव,—

दद्यात्तु कांस्यपात्रेण रौप्यस्वर्णभवेन वा।

गन्धाद्भिरिति, आगमे,—

अन्यानिवेदितं तोयं प्रकृतिस्थं सुशीतलम्।
हेमादिकलशान्तःस्थं पूजासाधनमिष्यते॥

निषिद्धजलान्याह कालिकापुराणे,—

निर्दुग्धं मलिनं शीर्णं तथा नाभावलम्बितम्।
परकीयं ह्यग्निदग्धं गृध्रैर्विद्धं तथाऽसितम्॥
अपक्वेशमधौतञ्च श्लेष्मरक्तादिदूषितम्।
गोक्षीरजं कीटजग्धं दैवे पैत्रे च वर्ज्जयेत्॥

सर्व्वदेवानां गन्धमाह शारदातिलके,—

गन्धचन्दनकर्पूरकालागुरुभिरीरितः।

आगमे,—

चन्दनं मलयोत्पन्नमनाघ्रातं सुशीतलम्।
कर्पूरागुरुकस्तूरीहिमान्यादिसुशीतलम्॥
अनन्यार्पितगन्धोऽयं प्रशस्तेऽर्च्चनकर्म्मणि।

तथा तत्रैव,—

संघृष्य[१] तुलसीकाष्ठं यो दद्याद्रामभूर्द्धनि।
कर्पूरागुरुकस्तूरीचन्दनञ्च न तत्समम्॥

कालिकापुराणे,—

सर्व्वेषु गन्धजातेषु प्रशस्तो मलयोद्भवः।
तस्मात् सर्व्वप्रयत्नेन दद्यात् मलयजं सदा॥

पुष्पाण्याह शारदातिलके,—

न पर्य्युषितानि सुगन्धीनि पुष्पपत्राणि साधकः।

---

१ ख पुस्तके, संघृष्टतुलसीकाष्ठम्।

मनोज्ञानि च पूजायामाहरेत विचक्षणः ॥
मलिनं भूमिसंस्पृष्टं कृमिकेशादिदूषितम् ।
अग्रसंस्पृष्टमाघ्रातं त्यजेत् पर्य्युषितं बुधः ॥

पुष्पाणि पत्राणि तुलस्यादीनि ।

आगमसारायाम्,—

पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखम् ।
पुष्पाञ्जलिविधिं हित्वा यथोत्पन्नं तथार्पणम् ॥

आगमे,—

अनन्यार्पितपूतानि गन्धवन्ति सितानि च ।
पीतान्यपि मनोज्ञानि कीटादिरहितानि च ॥
पुष्पाण्येवाच प्रशस्तानि नैतत्सर्व्वं निरर्थकम् ।

सितानि पीतानीत्यनेन विहितेतरनीलरक्तपुष्पनिषेधः ।

तथा तत्रैव,—

नीलोत्पलैर्मल्लिकैश्च करवीरैश्च चम्पकैः ।
जातिप्रसूनैर्बिल्वैश्च पुन्नागैर्बकुलैरपि ॥
कदम्बैः केतकैः पुष्पैः करुणाशोककिंशुकैः ।
प्रत्यग्रैः कोमलैश्चैव पूजयेच्च प्रयत्नतः ॥
पल्लवैश्चैव पत्रैश्च जलस्थलसमुद्भवैः ।
केतकैः शुक्लवर्णैश्च, किंशुकैः पलाशैस्तथा ॥

तथा तत्रैव,—

मुकुलैः पतितैश्चैव वर्ज्जितैः शोषितैरपि ।
चामरैरपि पुष्पैश्च दुष्टैः पत्रैश्च वर्जयेत् ॥

येन केनापि पुष्पेण पत्रेणापि दलेन वा ।
यतः कुतश्चिदानीय यत्र तत्रोद्भवेन च ॥
भवार्थी जीवितार्थी च नार्चयेद्वर्जितस्थले ।

चम्पकपद्मयोर्मुकुलस्यापि दानमुक्तं ज्ञानमालायाम्,—

कलिकाभिस्तथाऽन्याभ्यं विना चम्पकपङ्कजैः ।

पतितैर्भूमौ पतितैः खण्डितैः खण्डशः कृतैः दलैः दलप्रधानैः दमनकमरुवकादीनां नवपल्लवैः पत्रैर्विल्वादीनां अनर्हैरिति पुष्पादिषु चिषु सम्बध्यते । अनर्हतां विवृणोति येन केनापीति ।

येन केनाप्यानीतेन गन्धरूपहीनेन च यतः कुतश्चिदन्यजादिस्थलात् परोद्यानादितस्थानीतेन यत्र तत्रोद्भवेनाशुचिस्थले जातेन पुष्पादिचयेन नार्चयेत् । भवार्थी सम्पत्कामः ।

भविष्ये,—

स्वयं विशीर्णकुसुमं जलेऽन्तःवासितं तथा ।
आसनस्थं भूमिलग्नमधोवासस्थितञ्च यत् ॥
निर्गन्धं मलिनं कीटजग्धं पर्युषितं तथा ।
आघ्रातमुपभुक्तञ्च प्रयत्नेन विवर्जयेत् ॥
गन्धहीनमपि ग्राह्यं पवित्रं यत् कुशादिकम् ।
पद्मानि सितरक्तानि कुमुदान्युत्पलानि च ॥
एषां पर्युषिताशङ्का कार्य्या पञ्चदिनोर्द्धतः ।
अन्येषां कुसुमानान्तु यावद्गन्धविपर्य्ययः ॥
प्रहरं तिष्ठते जाती करवीरमहर्निशम् ।
तुलसीगस्त्यविल्वानां नास्ति पर्युषितात्मता ॥

ब्राह्मे,—

सर्व्वं पर्य्युषितं वर्ज्ज्यं पत्रं पुष्पं जलं तथा।

पवित्रं जाह्नवीतोयं पवित्रं तुलसीदलम्॥

भविष्ये,—

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः।

आत्मारामोद्भवैर्वापि न क्लिष्टैर्नाशुचीरितैः॥

आत्मारामोद्भवैरित्यनेन परारामोद्भवनिषेधः।

तथा नारदीयपुराणे[1] राजधीप्रपथे,—

पारक्यारामजातैस्तु कुसुमैरर्च्चयेत् पुमान्।

तेन पापेन लिप्येऽहं यद्येतदनृतं भवेत्॥

मनुः,—

द्रुमेधःकुसुमस्तेयमधर्म्यञ्च मलावहम्।

आगमे,—

परारोपितवृक्षेभ्यः पुष्पाण्यानीय योऽर्च्चयेत्।

अविज्ञाप्य च तस्यैव निष्फलं तस्य पूजितम्॥

यत्तु,—

द्रुमेधःकुसुमस्तेयमस्तेयं मनुरब्रवीत्।

इति पठन्ति, तद्यदि साकरं तदा,—

अदेवचरितं पुष्पं देवतार्थे तथैव च।

आददानः परक्षेत्रान्न दण्डं दातुमर्हति॥

---

१ क, पुराणं।

इति मत्स्यपुराणवचनैकवाक्यतया राजदण्डाभावपरम् । किं-
मंकिर्निरग्र्योरितिरग्र्याहृतैः ।

हारीतः,—

स्नानं कृत्वा तु ये केचित् पुष्पं गृह्णन्ति मानवाः ।
देवतास्तन्न गृह्णन्ति भस्मीभवति दारुवत् ॥

वचनमिदं स्नानमात्रविषयं कृत्वेति क्त्वाणिर्द्देशात् ।

मनुः,—

उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च ।
वर्ज्जनीयानि पुष्पाणि रक्तपुष्पाणि यानि च ॥

विष्णुः,—

नोग्रगन्धि नागन्धि न कण्टकिजं न रक्तम् । कण्टकिजं सितं सुगन्धि यत्तद्द्यात् । रक्तमपि जलजं किंशुकञ्च ।

वामनपुराणे,—

सुरभीणि तथान्यानि वर्ज्जयित्वा तु केतकीम् ।
अर्कधूस्तूरमन्दारशिरीषैर्णार्च्चयेद्धरिम् ॥

केतकी वक्ष्यकेतकी चिता ।

भविष्ये,—

द्रोणञ्च खादिरं वेणुं कुसुमं बकुलञ्च च ।
नगरं करवीरञ्च चितरक्तं पद्मजम् ॥
कुम्भपुष्पं चम्पकञ्च चाशोकं कुब्जकं तथा ।
चित्रगन्धा यूथिका कुन्दं शतपत्रञ्च मल्लिका ॥
जाती च तुलसी विष्णोः प्रशस्तानि यथोत्तरम् ।

वामने,—

विष्णोः शिरसि विन्यस्तमेकं श्रीतुलसीदलम् ।
अनन्तफलदं विप्र मन्त्रोच्चारणपूर्व्वकम् ॥
पुष्पान्तरैरन्तरितं निर्म्मितं तुलसीदलैः ।
माल्यं मलयजाक्तिप्तं दद्यात् श्रीराममूर्द्धनि ॥
किन्तस्य बहुभिर्यज्ञैः सम्पूर्णवरदक्षिणैः ।
किन्तीर्थसेवया दानैरुग्रेण तपसापि वा ॥
पत्रं पुष्पं दलञ्चैव श्रीतुलस्याः समर्पितम् ।
रामाय मुक्तिमार्गस्य द्योतकं सर्व्वसिद्धिदम् ॥
सम्पूज्य विधिवद्रामं भक्त्या श्रीतुलसीदलैः ।
भवार्णवसहस्रेषु दुःखपाशाद्विमुच्यते ॥
पूजायोग्यैर्दलैः पत्रैः पुष्पैर्वा यो यजेद्धरिम् ।
यानि न्यूनातिरिक्तानि पूर्णानि तस्य तान्यपि ॥

इति कौमलायेः । तथा,—

न तस्य नरके क्लेशो योऽर्च्चयेत्तुलसीदलैः ।
निर्म्माल्यतुलसीमालायुक्तो यश्चार्च्चयेद्धरिम् ॥
यद्यत्करोति तत्सर्व्वमनन्तफलदं भवेत् ।
यदि न्यूनं भवत्येव रामाराधनसाधनम् ॥
तुलसीपत्रमात्रेण युक्तं तत् परिपूर्य्यते ।
शालग्रामशिलातोयं तुलसीदलवासितम् ॥
ये पिबन्ति पुनस्तेषां स्तन्यपानं न विद्यते ।

नृसिंहपुराणे,—

जातीपुष्पसहस्रेण योऽर्च्चयेत् सुशोभनम् ।
विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
वसेद्विष्णुपुरे श्रीमान् विष्णुतुल्यपराक्रमः ॥
पत्राण्यपि च पुण्यानि हरेः प्रीतिकराणि च ।
अपामार्गदलं पुण्यं ततो भृङ्गरजं स्मृतम् ॥
तस्माच्च खादिरं पत्रं शमीपत्रं ततोऽपि च ।
दूर्व्वापत्रं ततः श्रेष्ठं ततोऽपि कुशपत्रकम् ॥
विल्वपत्रादपि हरेस्तुलसीपत्रमुत्तमम् ।

शिवस्य पुष्पाणि भविष्ये,—

करवीरो वकश्चैव अर्क उन्मत्तकस्तथा ।
पाटला वृहती चैव तथा च गिरिकर्णिका ॥
तथा काशस्य पुष्पाणि मन्दारश्चापराजिता ।
शमीपुष्पाणि पुन्नागं कुब्जकं शङ्खिनी तथा ॥
पुष्पाणि ब्रह्मवृक्षस्य तथा विल्वः शिवप्रियः ।
कुसुम्भस्य च पुष्पाणि तथा वै कुमुदस्य च ॥
सुरभीणि तथान्यानि स्थलजान्यम्बुजानि च ।

उन्मत्तो धूस्तूरः शङ्खिनी यवा इति ख्याता। ब्रह्मवृक्षः पलाशः।

अथ निषिद्धानि। भविष्ये,—

केतकी चातिमुक्तश्च कुन्दो यूथी मदन्तिका ।
शिरीषसर्जबन्धूककेतकानि विवर्ज्जयेत् ॥

अतिमुक्तो माधवीलता।

शिवपुराणे,—

कनकानि कदम्बानि रात्रौ देयानि शङ्करे।

दिवा शेषाणि पुष्पाणि दिवारात्रौ च मल्लिका॥

सूर्य्यपुष्पाण्याह भविष्ये,—

मालतीमल्लिकादूर्व्वाजवाकाशोऽतिमुक्तकः।

पाटला करवीरञ्च वकस्तिलक एव च॥

शतपत्राणि चान्यानि रक्तानि सुरभीणि च।

कुब्जकस्तरगोऽशोकः कर्णिकारः कुरण्टकः॥

चम्पको धातकश्चार्को जातीवकुलपाटलाः।

विल्वपत्रं शमीपत्रं पत्रं भृङ्गरजस्य च॥

तमालपत्रं धात्र्याश्च सदैव तपनप्रियं।

तुलसी कालतुलसी तथा रक्तञ्च चन्दनम्॥

केतकीपत्रपुष्पञ्च सद्यस्तुष्टिकरं रवेः।

धात्री आमलकी केतक्याः पत्रं पुष्पञ्च समुदीरितं अन्यपुष्पाणां पत्रनिषेधात् केतक्यास्तद्विधिः।

तथा,—

शमीपत्रं[१] दृहत्याश्च कुसुमं तुल्यमुच्यते।

करवीरसमा ज्ञेया जातीवकुलपाटलाः॥

तथा,—

मुकुलैर्नार्चयेद्भानुं मलिनं न निवेदयेत्।

१ ख, ग, पुस्तके, शमीपुष्पम्।

कृष्णकोमलतिलकं कान्चीदेवापराजितम् ।
न कष्टकारिकापुष्पं तथान्यद्गन्धवर्ज्जितम् ॥
कृष्णको गुञ्जा कान्ची वराहक्रान्ता ।

देवीपुष्पाण्याह देवीपुराणे,—

ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातियूथकैः ।
सितरक्तैस्तथा पद्मैः कुन्दमन्दारचम्पकैः ॥
करवीरार्कपुष्पैश्च सार्षपैश्चापराजितैः ।
सितरक्तैस्तथा पीतैः कृष्णैश्चापि चतुर्विधैः ॥
बकुलैरतिमुक्तैश्च मञ्जुकागस्त्यसम्भवैः ।
लताभिर्ग्रन्थयुक्ताभिश्च दूर्व्वाङ्कुरैश्च कोमलैः ॥
मञ्जरीभिः कुशानाञ्च केतकीविल्वपत्रकैः ।
पुष्पैः पत्रैर्यथालाभं जलजैः स्थलजैरपि ॥
धान्यानां कुसुमैर्देवीं पत्रैश्चापि प्रपूजयेत् ।

लताभिः कोमलशाखाभिः ।

यत्तु पठन्ति,—

न दूर्व्वयार्च्चयेद्देवीं न तुलस्या गणेश्वरम् ।
नाक्षतैश्च हरीकेशं न केतक्या महेश्वरम् ॥

तद्यदि साकरं स्यात् तदा दुर्गातिरिक्तदेवीविषयो दूर्व्वानिषेधः। देवीपुराणादौ दुर्गाया विहितत्वात् । एवं नाक्षतैश्च हृषीकेशमिति केवलाक्षतपूजाविषयम् । अर्घ्यादौ तु विहिता एवाक्षताः ।

सर्व्वदेवानां धूपमाह शारदातिलके,—

अगुरुश्चीरगुग्गुलुशर्करामधुचन्दनैः ।

धूपमेवाश्वकर्णेभ्यो निर्यासैरेव देशिकः ।

उशीरं वीरणमूलम् । निर्यासैर्वृक्षाणां रसात् यथा सुराय देवदारादेर्वा संगच्छते ।

कालिकापुराणे,—

न यक्षधूपं कुत्रापि माधवाय निवेदयेत् ।

विष्णुः । न जीवजातं धूपार्थे ।

नारसिंहे,—

महिषाख्यं गुग्गुलुञ्च आज्ययुक्तं सशर्करम् ।

धूपं ददाति राजेन्द्र नरसिंहाय भक्तिमान् ॥

कालिकापुराणे,—

न भूमौ वितरेद्धूपं नासने न घटे तथा ।

यथा तथाधारगतं कृत्वा तं विनिवेदयेत् ॥

दीपमाह नारदातिलके,—

वर्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ।

आरोप्य दर्शयेद्दीपानुच्चैः सौरभशालिनः ॥

तिलजेत्यनेन सार्षपादितैलनिषेधः ।

आरोप्य दीपवृक्षे संस्थाप्य उच्चैर्देवतासम्मुखं दर्शयेत् ।

कालिकापुराणे,—

घृतप्रदीपः प्रथमस्तिलतैलोद्भवस्ततः ।

नेत्राह्लादकरः स्वर्चिर्दूरतापविवर्जितः ॥

सुशिखः शब्दरहितो निर्धूमो नातिह्रस्वकः ।

दक्षिणे दीपवृक्षस्थः प्रदीपः श्रीविवृद्धये ॥

वृक्षेषु दीपो दातव्यो न तु भूमौ कदाचन ।
दीपवृक्षाश्च कर्त्तव्यास्तैजसाद्यैः प्रयत्नतः ॥
न मिश्रीकृत्य दद्यात्तु दीपस्नेहान् घृतादिकान् ।
दत्वा मिश्रीकृतं स्नेहं तामिस्रं नरकं व्रजेत् ॥

प्रथमो मुख्यः । दूरतापं विवृणोति तत्रैव ।

लभ्यते यस्य तापस्तु दीपस्य चतुरङ्गुलः ।
न स दीप इति ख्यातो मोघवह्निरिति स्मृतः ॥

तथा तत्रैव,—

तैजसं दारवं लौहं मार्त्तिकं नारिकेलजम् ।
तृणराजोद्भवं वापि दीपपात्रं प्रशस्यते ॥
तृणराजोद्भवं तालफलास्थिमयम् ।

निषिद्धवर्त्तिकामाह तत्रैव ।

श्राणं वादरजं वस्त्रं जीर्णं मलिनमेव वा ।
उपयुक्तन्तु न दद्यात् वर्त्तिकार्थं कदाचन ॥

श्राणं शणसूत्रं, कार्पासं वादरञ्च तदित्यमरकोषदर्शनात् कार्पासादिकवस्त्रं वादरं तत्र जातं तद्भवां दशामित्यर्थः ।

तथाच मनुः,—

दशां विवर्ज्जयेत् प्राज्ञो यद्यप्याहतवस्त्रजाम् ।
उपयुक्तं पूर्व्वं कृतोपयोगम् ।

महाभारते,—

नैव निर्व्वापयेद्दीपं देवार्थमुपकल्पितम् ।
दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत् ॥

नैवेद्यमाह आगमे,—

पायसापूपमिष्टान्नफलोपेतं हरेर्मुने।
एकेन पञ्चकोपेतमनन्यार्पितमिष्यते।
नैवेद्यमर्च्चनायान्तु सताम्बूलं प्रकल्पयेत्॥

शारदातिलके,—

सापूपदंशं विमलं पायसं सशर्करम्।
कदलीफलसंयुक्तं साज्यं मन्त्री निवेदयेत्॥

उपदंशं व्यञ्जनम्।

वामनपुराणे,—

हविषा संस्कृता ये तु यवगोधूमशालयः।
तिलमुद्गादयो माषा व्रीहयश्च प्रिया हरेः॥

शारदातिलके,—

उपचारैः समभ्यर्च्य दद्यादेवं शचामरम्।
कर्पूरशकलोन्मिश्रं ताम्बूलञ्च निवेदयेत्॥

आगमे,—

कर्पूरशकलोन्मिश्रं नागवल्लीदलाश्रितम्।
सुधाबिन्दुसमायुक्तं पूगीफलमनोहरम्॥
ताम्बूलं रघुनाथस्य दत्वा कामानवाप्नुयात्।

सुधाविन्दुश्चूर्णविन्दुः। एतेन पर्णचूर्णपूगफलानां ताम्बूलसंज्ञेति दर्शितम्। कर्पूरयोगे तु फलातिशय एव शारदातिलकवचनात्।

कालिकापुराणे,—

नैवेद्यं दक्षिणे वामे पुरतो न तु पृष्ठतः।
दीपं दक्षिणतो दद्यात् पुरतो वा न वामतः॥

शालनस्तु तथा धूपमये वा न तु दक्षिणे।
निवेदयेत् पुरोभागे गन्धं पुष्पञ्च भूषणम् ॥

नृसिंहपुराणे,—

स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम्।
शेषोपचारः प्रणामस्तु पश्चादप्युते ॥

नैवेद्यात् परमावरणपूजामाह शारदातिलके,—

अङ्गादिलोकपालान्तं यजेदावरणान्यपि।
केसरेष्वग्निकोणादि हृदयादीनि पूजयेत् ॥
नेत्रमग्रे दिशास्त्रमित्यर्च्चेदङ्गदेवताः।
पश्चादभ्यर्च्चनीयाः स्युः कथोक्ता मूर्त्तयः क्रमात् ॥
अन्ते यजेल्लोकपालान्मूलपारिषदान्वितान्।
हेतिजात्यधिपोपेतान्दिक्षु पूर्व्वादितः क्रमात् ॥
इन्द्रमग्निं यमं रक्षो वरुणं पवनं विधुम्।
ईशानं पन्नगाधीशमथ ऊर्द्ध्वं पितामहम् ॥
अङ्गादिलोकपालान्तमिति परिभाषा।

आवरणपूजाविधिरुक्तोऽगस्त्यसंहितायाम्,—

गणपत्यादयः सर्व्वे द्वारङ्गावृतिरूपिणः।
प्रणवादिचतुर्थ्यन्तनमोऽन्ताः स्वस्वनामभिः ॥
पूजनीयाः प्रयत्नेन गन्धपुष्पाक्षतादिभिः।

द्वारदेवता अङ्गदेवता आवरणदेवताश्चेत्यर्थः स्वस्वनामभिः करणैः प्रणवादिचतुर्थ्यन्तनमोऽन्ताः कृत्वा पूजनीयाः, तेन ॐ गणपतये नम इति प्रयोगः सम्पन्नः।

अङ्गपूजायान्तु हृदयाय नम इत्यादि यथाङ्गकल्पनं पठित्वा हृदयाय नम इत्यादि प्रयोगः ।

अङ्गपूजास्थानमाह केशरेष्विति ।

कोणकेशरचतुष्टये हृदयशिरःशिखाकवचानि चत्वारि । मूले वाहनं पारिषदाः परिवाराः हेतिरस्त्रम् ।

आत्यधिपाश्चोक्ता योगिनीतन्त्रे,—

इन्द्रः सुरपतिश्चाग्निस्तेजसां प्रेतपो यमः ।
रक्षोऽधिपो नैर्ऋतस्तु वरुणस्तु जलाधिपः ॥
प्राणानामधिपो वायुर्नक्षत्राधिपतिः शशी ।
ईशानः सर्व्वविद्येशोऽनन्तो नागाधिपः स्मृतः ॥
ब्रह्मा तु सर्व्वलोकानामधिपः परिकीर्त्तितः ।

गरुड़पुराणे व्यक्तमुक्तम्,—

इन्द्राय सुराधिपतये सवाहनपरिवारायुधाय नम इत्यादि ।

रक्षो नैर्ऋतं पवनं वायुं विधुं सोमं, बहुषु तन्त्रेषु दिक्पाल-मध्ये सोमस्यैव पूजोक्ता, क्वचित्तु कुबेरस्यापि विकल्पः । पन्नगाधी-शमनन्तं पितामहं ब्रह्माणम् ।

दिग्व्यवस्थोक्ता योगिनीतन्त्रे,—

यत्रैव भानुः स वियत्युदेति
प्राचीं तु तां वेदविदो वदन्ति ।
मध्यं तथा पूजकपूज्ययोस्तु
यद्वागमज्ञाः प्रवदन्ति सन्तः ॥

तथा नारदतन्त्रे,—

देवताभिमुखं प्राची विज्ञेया देवतार्च्चने ।
दक्षभागो दक्षिणा दिक् पश्चाद्भागस्तु पश्चिमा ।
उदीची वामभागस्तु तन्मध्ये कोणकल्पना ॥

ततो जपं कुर्य्यात् । पुरश्चरणचन्द्रिकायाम्,—

प्राणायामत्रयं कृत्वा ऋष्यादिन्यासपूर्व्वकम् ।
ध्यात्वेष्टदेवतारूपमात्मानं प्रजपेन्मनुम् ॥
सङ्ख्यापूर्त्तौ पुनः कुर्य्याद्ध्यादिप्राणसंयमान् ।

आरम्भे समापने च प्रणवमुच्चारयेत् ।

यथा मनुः,—

स्रवत्यनोङ्कृतं पूर्व्वं परस्ताच्च विशीर्य्यति ।
ततोऽर्घ्योदकेन जपं समर्पयेत् ।
गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर ॥

शारदातिलके,—

यथाशक्ति च संजप्य मूलमन्त्रमनन्यधीः ।
तं जपं सर्व्वसम्पत्त्यै देवतायै समर्पयेत् ॥

जपमालादिप्रकारस्तु मदीयपुरश्चरणपद्धतौ द्रष्टव्यः ।

मात्स्ये,—

गीतवादित्रनिर्घोषं देवतायै तु कारयेत् ।
घण्टा भवेदशक्तस्य सर्व्ववाद्यमयी यतः ॥

ततश्च प्रदक्षिणीकृत्य प्रणमेत् ।

यथा श्रीभागवते,—

स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ।
स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥
प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ।
इति शेषं मया दत्तं शिरस्याधाय सादरम् ।
उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत् पुनः ॥

उच्चावचैर्वचोभिः प्राकृतैराधुनिकैः स्वकल्पितैरन्यकल्पितैर्वा ।
स्वकल्पितानान्तु सर्वथा प्राधान्यं यथा कालिकापुराणे,—

यः स्वयं गद्यपद्याभ्यां घटिताभ्यां नमोविधिः ।
क्रियते भक्तियुक्तेन वाचिकस्तूत्तमस्तु सः ॥
पौराणिकैर्वैदिकैर्वा मन्त्रैर्वा क्रियते नतिः ।
स मध्यमो नमस्कारो भवेद्वाचनिकः सदा ॥
यत्तु मानुषवाक्येन नमनं क्रियते सदा ।
स वाचिकोऽधमो ज्ञेयो नमस्कारश्च पुत्रकौ ॥

असदाधुनिकैस्तु न स्तोतव्यं, यथा,—

मोहादज्ञानतः स्तौति योऽपशब्दैर्जनार्दनम् ।
स याति नरकं घोरं कालसूत्रमवाङ्मुखः ॥

दण्डवदष्टाङ्गैरित्यर्थः ।

वामनपुराणे,—

त्रिः प्रदक्षिणमावृत्य कृत्वाष्टाङ्गप्रणामकम् ।
दशाश्वमेधस्य फलं प्राप्नुयान्नात्र संशयः ॥

नृसिंहपुराणे,—

नमस्कारः स्मृतो यज्ञः सर्वयज्ञेषु चोत्तमः।
नमस्कारेण चैकेन नराऽप्नोति हरिं व्रजेत्॥
उरसा शिरसा दृष्ट्या वचसा मनसा तथा।
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग उच्यते॥

विष्णुधर्मे,—

जानुभ्यां चैव पाणिभ्यां[1] शिरसा च विचक्षणः।
कृत्वा प्रणामं देवस्य सर्वान् कामानवाप्नुयात्॥
परमाणूनि यावन्ति कवाटे भुवयस्य तु।
पार्थिवानि भवन्तीह नमतो मधुसूदनम्।
तावद्वर्षसहस्राणि विप्रेन्द्राः स्वर्गलोके महीयते॥

एवं प्रणम्य धर्मं समर्प्य महामुद्रां प्रदर्शयेत्।

यथा वामनपुराणे,—

मनोवाक्कायजनितं कर्म यत्ते शुभाशुभम्।
तत्सर्वं प्रीतये भूयान्नमो देवाय शार्ङ्गिणे॥

तथा,—

अन्योऽन्यग्रथिताङ्गुष्ठा प्रसारितकरद्वयी।
महामुद्रेयमाख्याता न्यूनाधिकसमापनी॥

ततश्च,—

प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात्।

इति पठन् प्रोक्तं निर्माल्यं भगवते तथा दत्तमिति विभाव

---

१ क पुस्तके, कराभ्यां।

देवदत्तद्रव्यभोक्तारो प्रतिपत्तिमाह, विष्णुः,—

सूर्य्याय दत्तं मगेभ्यः, शिवाय दत्तं भस्माङ्गिभ्यो, ब्रह्मणे दत्तं विप्रेभ्यो, दुर्गायै दत्तं स्त्रीभ्यो, विष्णवे दत्तं सात्वतेभ्यो ब्राह्मणेभ्यो वा दद्यात्। मगा अनिकेता नटनर्त्तकादयः भस्माङ्गाः पाशुपताः सात्वता वैष्णवा ब्राह्मणाश्च तदितरा अपि। दद्यादेषां धनं जनयेदित्यर्थः। अत्र केचित्,—

तवोपयुक्तस्रग्गन्धवासोऽलङ्कारभूषिताः।
उच्छिष्टभोगिनो दासास्तव मायां जयेमहि॥

इति श्रीभागवतदर्शनात् विष्णुदत्तद्रव्यस्य स्वयमुत्तरप्रतिपत्ति-स्थानमित्याहुः।

तन्न, स्वदत्तद्रव्ये स्वत्वाभावेन स्वोपयोगविरोधात्, अपि दीपावलोकं मे नोपयुञ्ज्यात् कदाचनेति तदीयवचनान्तरविरोधाच्च। तवोपयुक्तेति वचनन्तु अन्यतो लब्धस्रग्गन्धादिविषयम्। एवञ्च,— विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम्।
पितृभ्यश्चापि दातव्यं तदानन्त्याय कल्पते॥

इति वचनं यदि साकरं स्यात् तदा तदप्यन्यतो लब्धनैवेद्य-विषयं मन्तव्यम्। अन्यथा उत्सृष्टस्यापि पुनरुत्सर्गप्रसङ्गः। न च तथा, उत्सृष्टस्वत्वाभावेन पुनरुत्सर्गविरोधात्।

वस्तुतस्तु विष्णुदत्तद्रव्यात् स्वत्वाभावेऽपि वचनात्तथा ब्राह्मणे-ऽर्पणम्। तथा विष्णवे स्वदत्तगन्धपुष्पनैवेद्यानि वचनात् स्व-मुपभोक्तव्यानि मान्यानि वस्त्रालङ्कारादीनि अतएव अपि दीपा-वलोकमित्यादि श्रीभागवतम्।

यथा सम्वत्सरप्रदीपे श्रीविष्णुधर्म्मोत्तरवचनम्,—

पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम् ।

अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम् ॥

अनिवेद्य हरेर्भुञ्जन् सप्तजन्मानि नारकी ॥

तथापि श्रीभागवते षष्ठस्कन्धे पयोव्रते ।

उद्वास्य देवं स्वधाम्नि तन्निवेदितमग्रतः ।

अद्यादात्मविशुद्ध्यर्थं सर्व्वकामसमृद्धये ॥

अथ चित्तशुद्ध्यादिफलकथनादन्यथापि भोजनापत्तः स्वदत्त-विष्णुनैवेद्यभोजनं प्रतीयते । अन्यथा प्रत्यूहे वैफल्यं फल-कथनञ्चेति । तथाचागस्त्यसंहितायाम्,—

निर्म्माल्यतुलसीमालां शिरस्यपि निधाय वै ।

निर्म्माल्यचन्दनेनाङ्गमनुलिम्पेत्तस्य नामभिः ॥

पापिष्ठो वाप्यपापिष्ठो विप्रो वाप्यन्य एव वा ।

भवेद्देवाधिकार्य्येव रामाराधनकर्म्मणि ॥

अथ प्रात्यहिकदेवार्च्चायां प्रकृतत्वात् प्रत्यहं स्वाभ्यर्च्चिताय स्वदत्तनिर्म्माल्यचन्दनमेव प्रतीयते ।

अतो विष्णवे स्वदत्तगन्धपुष्पनैवेद्यानां स्वोपयोगः सिद्धो नान्येषां वचनाभावात् ।

यत्तु,— निर्म्माल्यं नोपभोक्तव्यं शूद्रस्य तपनस्य च ।

उपभुङ्क्ते तन्मोहात् पच्यते नरके ध्रुवम् ॥

इति भविष्यपुराणवचनं, तद्ग्राह्यातिरिक्त-

विषयं तेषां विहितत्वात् ॥

---

देवदत्तद्रव्यस्योत्तरां प्रतिपत्तिमाह, विष्णुः,—

सूर्याय दत्तं मगेभ्यः, शिवाय दत्तं भस्माङ्गिभ्यो, ब्रह्मणे दत्तं विप्रेभ्यो, दुर्गायै दत्तं स्त्रीभ्यो, विष्णवे दत्तं सात्वतेभ्यो ब्राह्मणेभ्यो वा दद्यात्। मगा अनिकेता नटनर्त्तकादयः भस्माङ्गाः पाशुपताः सात्वता वैष्णवा ब्राह्मणाश्च तदितरा अपि। दद्यादिदं धनं जनयेदित्यर्थः। अथ केचित्,—

त्वयोपयुक्तस्रग्गन्धवासोऽलङ्कारभूषिताः।

उच्छिष्टभोजिनो दासास्तव मायां जयेमहि॥

इति श्रीभागवतदर्शनात् विष्णुदत्तद्रव्यस्य स्वयमुत्तरप्रतिपत्ति-स्थानमित्याहुः।

तन्न, स्वदत्तद्रव्ये स्वत्वाभावेन स्वोपयोगविरोधात्, अपि दीपावलोकं मे नोपयुञ्ज्यात् कदाचनेति तदीयवचनान्तरविरोधाच्च। त्वयोपयुक्तेति वचनन्तु अन्यतो लब्धस्रग्गन्धादिविषयम्। एवञ्च,— विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम्।

पितृभ्यश्चापि दातव्यं तदानन्त्याय कल्पते॥

इति वचनं यदि साकरं स्यात् तदा तदप्यन्यतो लब्धनैवेद्य-विषयं मन्तव्यम्। अन्यथा उत्सृष्टस्यापि पुनरुत्सर्गप्रसङ्गः। न च तथा, उत्सृष्टस्वत्वाभावेन पुनरुत्सर्गविरोधात्।

वस्तुतस्तु विष्णुदत्तद्रव्यात् स्वत्वाभावेऽपि वचनाद्यथा ब्राह्मणे-ऽर्पणम्। तथा विष्णवे स्वदत्तगन्धपुष्पनैवेद्यानि वचनात् स्वक-मुपभोक्तव्यानि माल्यानि वस्त्रालङ्कारादीनि अतएव अपि दीपा-वलोकमित्यादि श्रीभागवतम्।

यथा सम्वत्सरप्रदीपे श्रीविष्णुधर्म्मोत्तरवचनम्,—

पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम्।

अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम्॥

अनिवेद्य हरेर्भुञ्जन् सप्तजन्मानि नारकी॥

तथापि श्रीभागवते षष्ठस्कन्धे पयोव्रते।

उद्वास्य देवं स्वधाम्नि तन्निवेदितमग्रतः।

अद्यादात्मविशुद्ध्यर्थं सर्व्वकामसमृद्धये॥

अत्र चित्तशुद्ध्यादिफलकथनादन्यथापि भोजनाप्रतः स्वदत्त-विष्णुनैवेद्यभोजनं प्रतीयते। अन्यथा [illegible] वैफल्यं फल-कथनस्येति। तथाचागस्त्यसंहितायाम्,—

निर्माल्यतुलसीमालां शिरस्यपि निधाय वै।

निर्माल्यचन्दनेनाङ्गमङ्कयेत्तस्य नामभिः॥

पापिष्ठो वाप्यपापिष्ठो विप्रो वाप्यन्य एव वा।

भवेदेवाधिकार्य्येव रामाराधनकर्म्मणि॥

अत्र प्रात्यहिकदेवार्च्चायां प्रकृतत्वात् प्रत्यहं आगमभावाच्च स्वदत्तनिर्माल्यचन्दनमेव प्रतीयते।

अतो वैष्णवे स्वदत्तगन्धपुष्पनैवेद्यानां स्वोपयोगः सिद्धो नान्येषां वचनाभावात्।

यत्तु,— निर्माल्यं नोपयोक्तव्यं रुद्रस्य तपनस्य च।

उपयुञ्जंस्तु तन्मोहात् पच्यते नरके ध्रुवम्॥

इति भविष्यपुराणवचनं, तद्वैष्णवाङ्गव्यतिरिक्त-विषयं तेषां विहितत्वात्॥

---

# अथ द्वादशाक्षरवासुदेवमन्त्रस्य पूजाप्रयोगो लिख्यते।

स्नातः शुचिः प्राङ्मुख उदङ्मुखो वा पादौ प्रक्षाल्य समाचान्तः कृतपुरश्चारः शुचिस्थाने आसनमुपकल्प्य दिव्यदृष्ट्यावलोकनेन दिव्यान् अस्त्रायफडिति जपितजलैश्चान्तरीक्षगान् वामपार्ष्णि-घातैस्त्रिभिर्भौमान् विघ्नानुत्सार्य्य आधारशक्तिपद्मासनाय नम इत्यासनं सम्पूज्य प्राङ्मुख उदङ्मुखो वा स्थिरप्रतिमायान्तु [1]तदग्र-मुखस्तत्रोपविश्य,

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु नृसिंहाज्ञया॥

इत्यस्त्रायफडिति सिद्धार्थाक्षतादीन् सर्व्वतो विकीर्य्य कृता-ञ्जलिर्भूत्वा वामपार्श्वे गुरुभ्यो नमः, दक्षिणपार्श्वे गणेशाय नमः सम्मुखे श्रीवासुदेवाय नमः। अस्त्रायफडिति हस्तौ विशोध्य तेनैवास्त्रमन्त्रेण तालत्रयमूर्द्ध्वोर्द्ध्वं कृत्वा छोटिकाभिर्दिग्बन्धनं विधाय परितोऽग्निप्राकारं विचिन्त्य भूतशुद्धिं कुर्य्यात्।

तत्प्रकारस्त्वात्मानं दीपशिखाकारं शिरसि सहस्रदलकमलस्थे परमात्मनि सुषुम्नावर्त्मना हंस इति मन्त्रेण संयोज्य पादस्थ-पृथिवीं लिङ्गमूलस्थजले तज्जलं हृदयस्थतेजसि, तत्तेजो मुखस्थे वायौ, तद्वायुं भ्रूमध्यस्थाकाशे, तदाकाशं सहस्रदलस्थे परमात्मनि संयोज्य पुष्करकारादींश्च तत्रैव लीनानि विचिन्त्य वामनासापूरकेण

---

१ ख पुस्तके, तदभिमुखः।

यमिति धूम्रवर्णं वायुबीजं विचिन्त्य षट्त्रिंशद्वारं जपन् वायुमुत्तोल्य देहं शुष्कं विभाव्य दक्षिणनासया रेचयेत्। तेनैव दक्षिणनासापुटेन वायुमुत्तोल्य रमित्यग्निबीजमरुणवर्णं षट्त्रिंशद्वारं जपन् देहं दग्धं परिभाव्य वामनासापुटेन भस्मरूपेण पापेन सह रेचयेत्। ततस्तेनैव वामनासापुटेन वायुमुत्तोल्य ललाटस्थशुक्लवर्णं परमात्मानं चन्द्ररूपं ध्यात्वा वमिति वरुणबीजं षट्त्रिंशद्वारं जपन् तस्मान्नाडीस्रावितसुधया प्लाव्य लमित्यनेन इन्द्रबीजेन दृढं देहं जनयित्वा आत्मबीजानि पञ्चभूतानि सृष्टिक्रमेण यथास्थानं स्थापयित्वा सोऽहमिति मन्त्रेण परमात्मनः सकाशात् सहस्रारादिक्रमेण सह जीवात्मानं हृत्पद्मे स्थापयेत् इति भूतशुद्धिः॥

अनन्तरं ऋष्यादिन्यासः।

प्रजापतिर्ऋषिर्मस्तके गायत्रीच्छन्दो मुखे श्रीवासुदेवो देवता हृदि इति विन्यस्य प्रणवं जपन् प्राणायामत्रयं[1] कुर्य्यात्।

यथा,— इड़या कर्षयेद्वायुं बाह्यं षोड़शमात्रया।
धारयेत् पूरितं योगी चतुःषष्ट्या तु मात्रया॥
सुषुम्नामध्यगं सम्यक् द्वात्रिंशन्मात्रया शनैः।
नाड्या पिङ्गलया चैवं रेचयेद्योगवित्तमः॥
प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः।
भूयोभूयः क्रमात्तस्य व्यत्यासेन समाचरेत्॥

इहमन्त्रेण प्राणायामे तु यथाशक्तिवारं जपन् क्रमेः पूरककुम्भकरेचकानि कुर्य्यात्।

---

१ ख पुस्तके, प्राणायामम्।

ततो मातृकान्यासः।

ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः।
ओष्ठदन्तोत्तमाङ्गास्ये दोःपत्सन्ध्यग्रकेषु च॥
पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेंऽसके।
ककुद्यंसे च हृत्पूर्वं पाणिपादयुगे ततः॥
जठराननयोर्न्यस्येन्मातृकार्णान् यथाक्रमम्।
एषु स्थानेषु अकारादीन् क्षकारान्तान् वर्णान् न्यसेत्॥

अं नमः आं नमः इं नमः ईं नम इत्यादिक्रमेण तु फलाधिक्यम्। केशवादिन्यासे तु ततोऽपि फलाधिक्यम्।

केशवादिन्यासो यथा,—

प्रथमं लक्ष्मीनारायणं ध्यात्वा तद्रूपमात्मानं विभाव्य पूर्व्वोक्तस्थानेषु न्यसेत्। ध्यानं यथा,—

हस्तैर्बिभ्रत् दरविजगदाम्बुजांकाणि विद्या
पद्मादर्शौ कनककलसं मेघविद्युद्विलासम्।
वामोत्तुङ्गस्तनमधिरथाकल्पमाश्लेषशोभा-
देकीभूतं वपुरवतु नः पुण्डरीकाक्षलक्ष्म्योः॥

ललाटे ओँ अं केशवाय कीर्त्यै नमः।
मुखवृत्ते ओँ आं नारायणाय कान्त्यै नमः।
चक्षुषोः ओँ इं माधवाय तुष्ट्यै नमः।
ओँ ईं गोविन्दाय पुष्ट्यै नमः॥
कर्णयोः ओँ उं विष्णवे धृत्यै नमः।
ओँ ऊं मधुसूदनाय शान्त्यै नमः।

नासयोः ओ॰ ऋ॰ त्रिविक्रमाय क्रियायै नमः।

ओ॰ ॠ॰ वामनाय दयायै नमः॥

गण्डयोः ओ॰ ऌ॰ श्रीधराय मेधायै नमः।

ओ॰ ॡ॰ हृषीकेशाय हर्षायै नमः॥

ओष्ठद्वये ओ॰ ए॰ पद्मनाभाय श्रद्धायै नमः।

ओ॰ ऐ॰ दामोदराय लज्जायै नमः॥

दन्तपङ्क्तिद्वये

ओ॰ ओ॰ वासुदेवाय लक्ष्म्यै नमः।

ओ॰ औ॰ सङ्कर्षणाय सरस्वत्यै नमः॥

शिरसि ओ॰ अ॰ प्रद्युम्नाय प्रीत्यै नमः।

मुखे ओ॰ अः अनिरुद्धाय रत्यै नमः॥

दक्षिणहस्तसन्धिचतुष्टयाग्रेषु

ओ॰ क॰ चक्रिणे जयायै नमः।

ओ॰ ख॰ गदिने दुर्गायै नमः॥

ओ॰ ग॰ शार्ङ्गिणे प्रभवायै नमः।

ओ॰ घ॰ खड्गिने सत्यायै नमः॥

ओ॰ ङ॰ शङ्खिने चण्डायै नमः।

वामहस्तचतुष्टयसन्ध्यग्रेषु—

ओ॰ च॰ हलिने वाण्यै नमः।

ओ॰ छ॰ मुषलिने विलासिन्यै नमः॥

ओ॰ ज॰ शूलिने विजयायै नमः।

ओ॰ झ॰ पाशिने विरजायै नमः॥

ओं० अ० अक्रुरिणे विभाये नमः।

दक्षिणपादचतुष्टयसन्धिषु—

ओं० ट० मुकुन्दाय विनदायै नमः।

ओं० ठ० नन्दजाय सुनन्दायै नमः॥

ओं० ड० नन्दिने स्मृत्यै नमः।

ओं० ढ० नराय ऋद्ध्यै नमः॥

[ओं० ण० नरकजिते समृद्ध्यै नमः][1]।

वामपादचतुःसन्धिषु—

ओं० त० हरये शुद्ध्यै नमः।

ओं० थ० कृष्णाय बुद्ध्यै नमः॥

ओं० द० सत्याय भुक्त्यै नमः।

ओं० ध० सात्वताय मत्यै नमः॥

ओं० न० शौराय क्षमायै नमः।

पार्श्वद्वये।

ओं० प० शूराय रमायै नमः।

ओं० फ० जनार्दनाय उमायै नमः।

पृष्ठे ओं० ब० भूधराय क्लेदिन्यै नमः॥

नाभौ ओं० भ० विश्वमूर्त्तये क्लिन्नायै नमः।

जठरे ओं० म० वैकुण्ठाय वसुदायै नमः॥

हृदये ओं० य० त्वगात्मने पुरुषोत्तमाय वसुधायै नमः।

दक्षिणांसे ओं० र० असृगात्मने बलिने परायै नमः॥

---

१ ग पुस्तके, [ ] चिह्नितांशो नास्ति।

ग्रीवायां ओं॰ व॰ मांसात्मने वक्रतुण्डाय पराजितायै नमः ।

वामांसे, ओं॰ र॰ मेद आत्मने वामनाय सूक्ष्मायै नमः ॥

हृदयादिकरद्वये ।

ओं॰ य॰ अस्थ्यात्मने वृषभाय वन्ध्यायै नमः ।

ओं॰ ष॰ मज्जात्मने वृषाय प्रज्ञायै नमः ॥

हृदयादिपादद्वये ।

ओं॰ स॰ शुक्रात्मने[1] हंसाय प्रभायै नमः ।

ओं॰ ह॰ प्राणात्मने वराहाय निद्रायै नमः ॥

उदरे ओं॰ ळ॰ प्रत्यात्मने विमलायामोघायै नमः ।

[मुखे ओं॰ क्ष॰ क्रोधात्मने नृसिंहाय विद्युतायै नमः][2] ।

ततस्तत्वन्यासः कार्य्यो यथा । सकलशरीरे

ओं॰ म॰ नमः पराय जीवात्मने नमः[3] ।

भ॰ नमः पराय प्राणात्मने नमः ।

हृदये— ब॰ नमः पराय बुद्ध्यात्मने नमः ॥

फ॰ नमः परायाहङ्कारात्मने नमः ।

प॰ नमः पराय मन आत्मने नमः[4] ॥

शिरसि, न॰ नमः पराय शब्दात्मने नमः ।

मुखे, ध॰ नमः पराय स्पर्शात्मने नमः ॥

---

१ ख ग, पुस्तकद्वये, शुक्रात्मने ।

२ ग पुस्तके, [ ] चिह्नितांशो नास्ति ।

३ ख पुस्तके, पराय जीवात्मने नमः इत्यंशो नास्ति ।

४ क ख पुस्तकद्वये, मन आत्मात्मने नमः ।

हृदि, द० नमः पराय रूपात्मने नमः।
गुह्ये, थ० नमः पराय रसात्मने नमः॥
पादे, त० नमः पराय गन्धात्मने नमः।
कर्णयोः, ण० नमः पराय श्रोत्रात्मने नमः॥
त्वचि, ढ० नमः पराय त्वगात्मने नमः।
चक्षुषोः, ड० नमः पराय चक्षुरात्मने नमः॥
जिह्वायां, ठ० नमः पराय जिह्वात्मने नमः।
नासायां, ट० नमः पराय नासात्मने नमः॥
मुखे, ञ० नमः पराय वागात्मने नमः।
हस्ते, झ० नमः पराय पाण्यात्मने नमः॥
पादे, ज० नमः पराय पादात्मने नमः।
गुदे, छ० नमः पराय पाय्वात्मने नमः॥
उपस्थे, च० नमः पराय उपस्थात्मने नमः।
शिरसि, ङ० नमः परायाकाशात्मने नमः॥
मुखे, घ० नमः पराय वाय्वात्मने नमः।
हृदि, ग० नमः पराय तेज आत्मने नमः॥
गुह्ये, ख० नमः पराय जलात्मने नमः।
पादे, क० नमः पराय पृथिव्यात्मने नमः॥
हृदि, श० नमः पराय पुण्डरीकात्मने नमः।
ष० नमः पराय द्वादशकलात्मकसूर्य्यमण्डलात्मने नमः॥
स० नमः पराय षोडशकलात्मकचन्द्रमण्डलात्मने नमः।
ह० नमः पराय दशकलात्मकवह्निमण्डलात्मने नमः॥

शिरसि ष० नमः पराय परमेष्ठिवासुदेवात्मने नमः।
मुखे य० नमः पराय पुरुषसङ्कर्षणात्मने नमः॥
हृदि, व० नमः पराय विश्वप्रद्युम्नात्मने नमः।
गुह्ये, र० नमः पराय निवृत्त्यनिरुद्धात्मने नमः॥
पादयोः,ल० नमः पराय सर्व्वनारायणात्मने नमः।
सकलशरीरे
क्ष्रौ० नमः पराय कोपनृसिंहात्मने नमः।
ततो मूर्त्तिपञ्जरन्यासः काम्यो यथा।
ललाटे, अ ॐ केशवाय धात्रे नमः।
उदरे, आ न नारायणायार्य्यम्णे नमः॥
हृदि, इ मो माधवाय मित्राय नमः।
कण्ठे, ई भ गोविन्दाय वरुणाय नमः॥
दक्षिणपार्श्वे उ ग विष्णवे अंशवे नमः।
दक्षिणांसे ऊ व मधुसूदनाय भगाय नमः॥
दक्षिणगले ए ते त्रिविक्रमाय विवस्वते नमः।
वामपार्श्वे ऐ वा वामनाय इन्द्राय नमः॥
वामांसे ओ सु श्रीधराय पूष्णे नमः।
वामगले औ दे हृषीकेशाय पर्य्यन्याय नमः॥
पृष्ठे अं० वा पद्मनाभाय त्वष्ट्रे नमः।
ग्रीवायां अः य दामोदराय विष्णवे नमः॥
मूर्द्ध्नि ॐ नमो भगवते वासुदेवाय।

ततः कराङ्गन्यासः। अङ्गुष्ठादिषु, ॐ अङ्गुष्ठाभ्यां नमः। नम-

तर्जनीभ्यां स्वाहा । भगवते मध्यमाभ्यां वषट् । वासुदेवाय अनामिकाभ्यां हुं । समस्तेन कनिष्ठाभ्यां फट् । अस्त्राय फडिति तालत्रयं दिग्बन्धनञ्च कृत्वा हृदयादिषु न्यसेत् । ॐ हृदयाय नमः नमः शिरसे स्वाहा भगवते शिखायै वषट् वासुदेवाय कवचाय हुं समस्तेनास्त्राय फडिति तालत्रयं दिग्बन्धनञ्च कुर्य्यात् ।

यथा शारदातिलके,—

तारेण हृदयं प्रोक्तं नमसा शिर ईरितम् ।
चतुर्वर्णैः शिखा प्रोक्ता पञ्चार्णैः कवचं मतम् ॥
समस्तेन भवेदस्त्रमङ्गकल्पनमीरितम् ।

ततो मूर्द्धादिषु द्वादशस्थानेषु यथाक्रमं मन्त्रस्य द्वादशाक्षरान् न्यसेत् । यथा तत्रैव ।

मूर्द्धि भाले दृशोरास्ये गले दोष्णोर्हृदम्बुजे ।
कुक्षौ नाभौ ततो लिङ्गे जानुनोः पदयोर्न्यसेत् ॥

ततः पीठन्यासः । प्रणवादिनमोऽन्तेन न्यसेत् । दक्षिणांसे, धर्म्माय नमः । वामांसे, ज्ञानाय । वामोरौ, वैराग्याय । दक्षिणोरौ ऐश्वर्य्याय । मुखे, अधर्म्माय । वामपार्श्वे, अज्ञानाय । नाभौ, अवैराग्याय । दक्षिणपार्श्वे, अनैश्वर्य्याय । हृदये, अनन्ताय पद्माय अ० सूर्य्यमण्डलाय । उ० सोममण्डलाय, म० वह्निमण्डलाय स० सत्वाय, र० रजसे, त० तमसे आ० आत्मने, अ० अन्तरात्मने प० परमात्मने ह्रीं ज्ञानात्मने नमः ।

पद्मस्याष्टदिक्षु

विमलायै उत्कर्षिण्यै ज्ञानायै क्रियायै योगायै प्रह्व्यै सत्यायै

ईशानायै नमः। सर्वायै नमः। ॐ नमो भगवते विष्णवे सर्व्वभूतात्मने वासुदेवाय सर्व्वात्मसंयोगयोगपद्मपीठात्मने नमः।

एवं हैममये पीठे चिन्तयेदिष्टदेवताम्।

ध्यानं यथा,—

विष्णुं शारदचन्द्रकोटिसदृशं शङ्खं रथाङ्गं गदा
मम्भोजं दधतं सिताब्जनिलयं कान्त्या जगन्मोहनम्।
आबद्धाङ्गदहारकुण्डलमहामौलिं स्फुरत्कङ्कणं
श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रैः स्तुतम्॥

इति मनसा सर्व्वोपचारैः सम्पूज्य।

शङ्खचक्रगदापद्मधेनुकौस्तुभगारुडाः।
श्रीवत्सवनमालाश्च योनिमुद्राः प्रदर्शयेत्॥

ततोऽर्घ्यस्थापनम्।

स्ववामे भूमौ त्रिकोणमण्डलं कृत्वा तत्राधारं विन्यस्य तत्र दशकलात्मने वह्निमण्डलाय नम इत्याधारं सम्पूज्य तदुपरि अस्त्राय फडिति त्रिः प्रोक्षितं शङ्खं संस्थाप्य तत्र द्वादशकलात्मने सूर्य्यमण्डलाय नम इति शङ्खं संपूज्य चन्द्रमण्डलनिर्गतसुधारूपेण ध्यातैः शुद्धतोयैः।

क्ष॰ ळ॰ ह॰ स॰ ष॰ श॰ व॰ ल॰ र॰ य॰ म॰ भ॰ ब॰ फ॰ प॰ न॰ ध॰ द॰ थ॰ त॰ ण॰ ढ॰ ड॰ ठ॰ ट॰ ञ॰ झ॰ ज॰ छ॰ च॰ ङ॰ घ॰ ग॰ ख॰ क॰ अः अं॰ औ॰ ओ॰ ऐ॰ ए॰ ॡ॰ ऌ॰ ॠ॰ ऋ॰ ऊ॰ उ॰ ई॰ इ॰ आ॰ अ॰।

इति विपरीतमातृकामन्त्रं मूलमन्त्रञ्च जपन् पूजयेत्। नमो

मन्त्रेण तत्र गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्व्वा अष्टौ द्रव्याणि निक्षिप्य षोड़शकलात्मने चन्द्रमण्डलाय नम इति जलं सम्पूज्य इष्टदेवतारूपं जलं विभाव्य ।

ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्म्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

इति मन्त्रेण तीर्थमावाह्य जलं स्पृष्ट्वा मूलमन्त्रमष्टधा जप्त्वा मन्त्राङ्गाणि विन्यस्य अस्त्राय फड़िति तालत्रयं दिग्बन्धनञ्च कृत्वा ऊमिति मन्त्रेण दीर्घाधोमुखतर्ज्जनीभ्रामणरूपयाऽवगुण्ठनमुद्रयाऽवगुण्ठ्य वमिति धेनुमुद्रयाऽमृतीकृत्य सन्निरोधनमुद्रया सन्निरोधयेत् ।

ततस्तद्दक्षिणे अस्त्राय फड़िति प्रोक्षितं प्रोक्षणीपात्रमाधाय नम इति मन्त्रेण जलेन प्रपूर्य्य ओङ्कारेण गन्धपुष्पे निक्षिप्य तत्रार्घ्यजलं किञ्चिन्निक्षिपेत् ।

एवं क्रमेणार्घ्यस्योत्तरे पाद्यमाचमनीयञ्च स्थापयेत् ।

पाद्यद्रव्याणि पद्मपुष्पश्यामाकापराजितादूर्व्वादीनि[१] । आचमनीयद्रव्याणि लवङ्गकक्कोलजातीफलानि । ततश्च प्रोक्षणीजलेनात्मानं पूजासाधनद्रव्याणि सर्व्वाणि मूलमन्त्रेण प्रोक्ष्य संवीक्ष्य च कुशैः सन्ताड्य अस्त्राय फड़िति तालत्रयदिग्बन्धने संरचेत् । अथात्मपूजा ।

स्वदेहे पीठन्यासविधिना तत्तत्स्थानेषु धर्म्माय नम इत्यादिक्रमेण धर्म्मादीन् पीठमन्त्रान्तान् गन्धपुष्पैः संपूज्य हृत्पद्ममध्ये

१ ग पुस्तके, ०दूर्व्वाग्राणि ।

इष्टदेवं विचिन्त्य तद्रूपतया ध्यातमात्मानं पृथक्कृतैर्गन्धपुष्पधूपदीपैश्चतुर्भिरुपचारैरभ्यर्च्य मस्तके हृदये मूलाधारे पादे सर्व्वाङ्गे च पुष्पाञ्जलिपञ्चकं दत्त्वा क्रोड़निहितोत्तानकरयुगलः समकायग्रीवो निमीलितलोचनः सर्व्वैश्वर्य्यसम्पन्नं देवं विभाव्य सोऽहमिति मन्त्रं जपन् अनन्यमतिर्देवाकारतयात्मानं भावयन्नानन्दामृतमग्नो निरुच्छ्वासो यथेष्टं तिष्ठेत् ।

ततो यन्त्रे मण्डले शालग्रामे मणौ[१] प्रतिमायां वा वासुदेवं पूजयेत् । तत्र पीठस्योत्तरे वायव्यादीशानपर्य्यन्तं गुरुपंक्तिं पूजयेत् । श्रीगुरुभ्यो नमः परमगुरुभ्यो नमः परापरगुरुभ्यो नमः परमेष्ठिगुरुभ्यो नमः । तत्र पीठदक्षिणे गणेशं ॐ गणानान्त्वेति मन्त्रेणावाह्य पञ्चोपचारैः पूजयित्वा तन्मन्त्रं किञ्चिज्जप्त्वा स्तुत्वा प्रणमेत् । एकाक्षरगणेशमन्त्रस्य ध्यानं यथा ।

सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं
दन्तं पाशाङ्कुशेष्टान्युरुकरविलसद्वीजपूराभिरामम् ।
बालेन्दुज्योतिमौलिं करिपतिवदनं दानपूरार्द्रगण्डम्
भोगीन्द्राबद्धभूषं भजत गणपतिं रक्तवस्त्राङ्गरागम् ॥

ततः पीठपूजां प्रणवादिनमोऽन्तेन तत्तन्नाम्ना कुर्य्यात् ।

मण्डलमध्ये—

आधारशक्तये, कूर्म्माय अनन्ताय पृथिव्यै क्षीरसागराय श्वेतद्वीपाय रत्नमण्डपाय कल्पवृक्षाय रत्नवेदिकायै ।

---

१ ग पुस्तके मणौ ।

आग्नेयादिकोणचतुष्टये—

धर्माय ज्ञानाय वैराग्याय ऐश्वर्याय ।

पूर्वादिचतुर्दिक्षु—

अधर्माय अज्ञानाय अवैराग्याय अनैश्वर्याय ।

मध्ये—

शेषाय पद्माय अ० सूर्यमण्डलाय उ० सोममण्डलाय म० वह्निमण्डलाय स० सत्त्वाय र० रजसे त० तमसे आ० आत्मने अ० अन्तरात्मने प० परमात्मने ह्रीँ० ज्ञानात्मने नमः ।

पूर्वादिष्टकेशरेषु—

विमलायै उत्कर्षिण्यै ज्ञानायै क्रियायै योगायै प्रह्व्यै सत्यायै ईशानायै ।

मध्ये—

अनुग्रहायै पुनर्मध्ये ॐ नमो भगवते विष्णवे सर्व्वभूतात्मने वासुदेवाय सर्व्वात्मसंयोगयोगपद्मपीठात्मने नम इति पुष्पाञ्जलिना आसनं दद्यात् ।

ततस्तत्र पुष्पासनमध्ये कल्पतरुच्छायायां मूलमन्त्रेणेष्टदेवतामूर्त्तिं संकल्प्य पूर्व्ववद्देवं संचिन्त्य मूलमन्त्रं जपन् तेजोरूपतामापाद्य तत्तेजो हृत्पद्मात् पुष्पाञ्जलौ मूलमन्त्रेण वहन्नासापुटेन निर्गमय्य पूर्व्वकल्पितमूर्त्तौ तदीयब्रह्मरन्ध्रद्वारा प्रवेश्य मूलमन्त्रं पठन् श्रीभगवन् वासुदेव इहागच्छागच्छेत्यावाहनमुद्रयावाह्य तिष्ठ तिष्ठेति संस्थापनमुद्रया संस्थाप्य सन्निहितो भवेति सन्निधापनमुद्रया सन्निधीकृत्य प्रसन्नो भवाभिमुखो भवेति संमुखीकरणमुद्रया सम्मुखी-

हत्य वह्निचक्रो भवेति वह्निरोधनमुद्रया वह्निचक्रं देवताङ्गे षडङ्ग-न्यासं कृत्वा अवगुण्ठनामृतीकरणपरमीकरणमुद्रा दर्शयित्वा प्राण-प्रतिष्ठां कुर्य्यात् ।

आं ह्रीं क्रों[1] हं सः श्रीवासुदेवस्य प्राणा इह प्राणाः, आं ह्रीं क्रों हं सः श्रीवासुदेवस्य जीव इह स्थितः आं ह्रीं क्रों हं सः श्रीवासुदेवस्य सर्व्वेन्द्रियाणि, आं ह्रीं क्रों हं सः श्रीवासुदेवस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा।

इति प्राणप्रतिष्ठां कृत्वा मूलमन्त्रेण पुष्पाञ्जलिं दद्यात् ।

शालग्रामे प्रतिष्ठितदेवे चावाहनविसर्ज्जने न स्तः किन्तु हृद-यस्थतेजः पुष्पाञ्जलिना तत्तद्देवतायां संक्रमय्य सम्मुखीकरण-सकलीकरणावगुण्ठनपरमीकरणमुद्रा दर्शयेत् ।

ततश्च काष्ठाद्यासनसद्भावे मूलमन्त्रेणासनं दद्यात् । न चेत् प्रागेव पीठमन्त्रेण पुष्पासनं दत्तमस्तीति ।

ततः स्वागतन्ते कुशलन्ते इति पृष्ट्वा पाद्याचमनीयार्घ्यमधुपर्कपुन-राचमनीयस्नानीयवस्त्रालङ्कारगन्धपुष्पधूपदीपनैवेद्यादीनि दद्यात् ।

वमिति वरुणबीजेन द्रव्यं संप्रोक्ष्य अमुकद्रव्याय नम इति संपूज्य मूलमन्त्रं पठित्वा श्रीवासुदेवाय इदममुकद्रव्यममुकदैवतं नम इति अर्घ्योदकेन उत्सृज्य इदममुकद्रव्यमिति निवेदयेत् ।

अत्र स्वाहापदेनार्घ्यं स्वधापदेनाचमनीयमधुपर्कौ, अन्यत् सर्व्वं नमःपदेन देयं ।

स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ।

---

१ ग पुस्तके क्रौं इत्यत्र क्लीं इति पाठः।

तत्र तत्र जलं दद्यादुपचारान्तरान्तरे ॥
पूजाकाले देवताया नोपरि भ्रामयेत् करम् ।
नैवेद्यं दक्षिणे वामे पुरतो न तु पृष्ठतः ॥
दीपं दक्षिणतो दद्यात् पुरतो न तु वामतः ।
वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे ॥
निवेदयेत् पुरोभागे गन्धपुष्पादिभूषणम् ।
देवताभिमुखे दीपं धूपं दद्यादधः पुनः ॥

ततश्छत्रचामरादिकं दर्शयेत् । घण्टादिकञ्च वादयेत् । ताम्बूलञ्च दत्त्वा आवरणानि पूजयेत् ।

प्रथममङ्गावरणमाग्नेयादिकोणकेशरेषु ।

ॐ हृदयाय नमः । नमः शिरसे स्वाहा । ॐ शिरसे नमः । भगवते शिखायै वषट् ॐ शिखायै वषट् । वासुदेवाय कवचाय हुं ॐ कवचाय हुं ॐ कवचाय नमः । चतुर्दिक्केशरेषु नमस्तेऽस्त्राय फट् ॐ अस्त्राय फट् । ॐ अस्त्राय नमः । पूर्व्वादिचतुर्दिक्पत्रमूलेषु वासुदेवाय सङ्कर्षणाय प्रद्युम्नाय अनिरुद्धाय । आग्नेयादिकोणपत्रमूलेषु ॐ शान्त्यै नमः एवं श्रियै सरस्वत्यै रत्यै ।

चतुर्द्दिक्पत्रमध्ये चिरावृत्या केशवादिद्वादशमूर्त्तीः पूजयेत् ।

ॐ केशवाय नमः एवं नारायणाय माधवाय गोविन्दाय मधुसूदनाय त्रिविक्रमाय वामनाय श्रीधराय हृषीकेशाय पद्मनाभाय दामोदराय । प्रणवं नमः सर्व्वत्र ।

पत्रवाह्येऽष्टदिक्षु,—

ॐ इन्द्राय सुराधिपतये सवाहनपरिवारायुधाय नमः ।

ॐ अग्नये तेजोऽधिपतये सवाहनपरिवारायुधाय नमः ।
ॐ यमाय प्रेताधिपतये सवाहनपरिवारायुधाय नमः ।
ॐ नैर्ऋताय रक्षोऽधिपतये सवाहनपरिवारायुधाय नमः ।
ॐ वरुणाय जलाधिपतये सवाहनपरिवारायुधाय नमः ।
ॐ वायवे प्राणाधिपतये सवाहनपरिवारायुधाय नमः ।
ॐ सोमाय नक्षत्राधिपतये सवाहनपरिवारायुधाय नमः ।
ईशानाय सर्व्वविद्याधिपतये सवाहनपरिवारायुधाय नमः ।

निर्ऋतिवरुणयोर्मध्ये,—

ॐ अनन्ताय नागाधिपतये सवाहनपरिवारायुधाय नमः ।

इन्द्रेशानयोर्मध्ये,—

ॐ ब्रह्मणे सर्व्वलोकाधिपतये सवाहनपरिवारायुधाय नमः ।

ततस्तदाद्ये अष्टदिक्षु,—

ॐ वज्राय नमः । एवं शक्तये दण्डाय खड्गाय पाशाय अङ्कुशाय गदायै शूलाय । निर्ऋतिवरुणयोर्मध्ये चक्राय । इन्द्रेशानयोर्मध्ये पद्माय ।

ततो मूलमन्त्रेण भगवते पुष्पाञ्जलिं दत्वा प्राणायामत्रयं कृत्वा शिरोमुखहृदयेषु ऋषिच्छन्दोदेवता विन्यस्य इष्टदेवतारूपं आत्मानं विभाव्य मूलमन्त्रं यथाशक्ति जपित्वा अर्घोदकेन जपं समर्पयेत् ।

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादादधोक्षज ॥

ततः पुनः प्राणायामत्रयं कृत्वा स्तुत्वा प्रदक्षिणीकृत्य प्रसीद

भगवन्निति दण्डवत् प्रणमेत्।

मनोवाक्कायजनितं कर्म्म यन्मे शुभाशुभम्।
तत्सर्व्वं प्रीतये भूयान्नमो देवाय शार्ङ्गिणे॥

इत्यर्घ्योदकेन समाप्य[1] मत्स्यमुद्रां दर्शयित्वा मूलमन्त्रेण स्वाभीष्टं प्रार्थ्य प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवादिति पठन् स्वाभीष्ट-सम्पादकनिर्म्माल्यं भगवता दत्तमिति विभाव्य शिरस्याधाय मूल-मन्त्रेण ज्योतीरूपं देवं विचिन्त्य नमस्तेत्युक्ता यन्त्रादिस्थं तज्ज्योतिः पुष्पेण सह नासारन्ध्रद्वारा मूलमन्त्रेण हृत्पद्मे ज्योतीरूपे भग-वति परिवारगणैः सह स्थापयेत्। स्थापितप्रतिमायां शालग्रामे च विसर्ज्जनं नास्ति। तत ऐशान्यां भूमौ त्रिकोणमण्डलं कृत्वा तत्र निर्म्माल्यपुष्पेण निर्म्माल्यनैवेद्येन च वौं विष्वक्सेनाय नम इति पूजयेत्।

इति तान्त्रिकविष्णुपूजा समाप्ता।

एवमन्यदेवानामपि पूजा किन्तु अङ्गन्यासपीठन्यासावरणेषु विशेषस्तत्तन्मन्त्रकल्पे ज्ञेयः।

इदानीं वैदिकपूजाभिधीयते।

कूर्म्मपुराणे,—

तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम्।
तद्विष्णोरितिमन्त्रेण सूक्तेन पुरुषेण वा॥
नैताभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि।

---

१ स इत्यत्र समर्प्य।

तत ऋषिः पूर्व्ववद्धायने उपविश्य भूतशुद्धिप्राणायाममातृका-न्यासान् विधाय ओँकारेण मन्त्रन्यासं कृत्वा पुरुषसूक्तस्य ऋष्या-दिकं विन्यस्य षोड़शऋचः साङ्गे विन्यसेत्।

नरसिंहपुराणे,—

आनुष्टुभस्य सूक्तस्य त्रिष्टुभन्तस्य देवता।
पुरुषो यो जगद्वीजमृषिर्नारायणः स्मृतः॥

आनुष्टुभस्य अनुष्टुप्छन्दसः सूक्तस्य पौरुषस्य सहस्रशीर्षा इत्यादेर्यज्ञेन यज्ञमित्यन्तस्य पञ्चदशर्चकस्य त्रिष्टुप्छन्दोऽन्तः सम्भूत इत्यादिसप्तदशी ऋगन्ते समीपे यस्य तस्य जगद्वीजं पुरुषो देवता ऋषिस्तु नारायण इत्यर्थः।

तथाग्निपुराणे,—

प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे।
तृतीयां वामपादे च चतुर्थीं दक्षिणे तथा॥
पञ्चमीं वामजानौ च षष्ठीं तु दक्षिणे तथा।
सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे तथा॥
नवमीं नाभिमध्ये च दशमीं हृदये तथा।
एकादशीं कण्ठमध्ये द्वादशीं वामबाहुके॥
त्रयोदशीं दक्षिणे च तथास्ये च चतुर्द्दशीम्।
अक्ष्णोस्तथा पञ्चदशीं विन्यसेन्मूर्द्ध्नि षोड़शीम्॥
यथा देवे तथा देहे न्यासं कृत्वा विधानतः।
न्यासमकृत्वा जपेत् सोऽपि स्वयमेव जनार्द्दनः॥
एवं न्यासविधिं कृत्वा पश्चात् पूजां समाचरेत्।

शङ्खचक्रगदापद्मपाणिं ध्यायेज्जनार्दनम् ॥
ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

देवे प्रतिमायां यथैवं न्यासस्तथात्मदेहेऽपि न्यासं कृत्वा देवं ध्यायेत् । हिरण्मयवपुस्तेजोमयवपुर्वर्णोऽपि स्वर्णवर्ण एव । ततः सामान्यार्घ्यं विधाय पूजामारभेत् । नरसिंहपुराणेऽप्येतद्ध्यानमुक्तम् ।

नृसिंहपुराणे,—

अर्च्चनं संप्रवक्ष्यामि विष्णोरमिततेजसः ।
यत् कृत्वा मुनयः सर्व्वे परं निर्वाणमाप्नुयुः ॥

ध्येयः सदासवितृमण्डलेत्यादि,—

दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्च्चितं स्याज्जगदिदं तेन सर्व्वं चराचरम् ॥
आद्ययावाहयेद्देवं ऋचा तु पुरुषोत्तमम् ।
द्वितीययासनं दद्यात् पाद्यं चैव तृतीयया ॥
चतुर्थ्यार्घ्यं प्रदातव्यं पञ्चम्याचमनीयकम् ।
षष्ठ्या स्नानं प्रदद्याच्च सप्तम्या वस्त्रमेव च ॥
यज्ञोपवीतमष्टम्या नवम्या गन्धमेव च ।
दशम्या पुष्पदानं स्यादेकादश्या च धूपकम् ॥
द्वादश्या च तथा दीपं त्रयोदश्या चरुं तथा ।
चतुर्द्दश्याञ्जलिं बध्वा पञ्चदश्या प्रदक्षिणम् ॥

षोड़शोपचारेण कुर्य्याच्छेषकर्म्माणि पूर्व्ववत्।
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम्॥
तत्प्रसादात् सिद्धिमाप्नोति[1] देवदेवं समर्च्चयन्।
संवत्सरेण तेनैव सायुज्यमधिगच्छति॥
षष्ठं नैवेद्यं उद्वासनं विसर्ज्जनम्।

तच्च[2] स्वागतं मधुपर्काभरणानि यज्ञोपवीतं पुष्पाञ्जलिकरणञ्चाधिकमिति। शेषकर्म्माणीति द्वाविंशत्यध्याये मार्कण्डेयसहस्रानीकसम्वादे प्रागुक्तं गृहीतम्।

यथा,—

नमस्कारेण चैकेन अष्टाङ्गेन हरिं व्रजेत्।
स्तोत्रैर्जपैश्च देवाग्रे यः स्तौति मधुसूदनम्॥
सर्व्वपापविनिर्मुक्तो विष्णुलोकमवाप्नुयात्।
गीतवाद्यादिकं नृत्यं[3] शङ्खतुर्य्यादिनिस्वनम्॥
यः कारयति विष्णोः स विष्णुलोके महीयते।

अथ वैदिकपूजाप्रयोगः।

प्रातः शुचिराचान्तः पूर्व्ववदासने उपविश्य भूतशुद्धिप्राणायाम मातृकान्यासान् विधाय ॐकारेण करन्यासं षड़ङ्गन्यासञ्च कुर्य्यात्।

पुरुषसूक्तस्य नारायणऋषिर्मस्तकेऽनुष्टुप्छन्दो मुखे जगद्बीजं पुरुषो देवता हृदि चतुर्वर्गाप्तये श्रीपुरुषाराधने विनियोगः।

---

१ क पुस्तके, तथा सांसिद्धिमाप्नोति।
२ ख, ग, अत्र।   ३ ख, नित्यम्।

षडङ्गे मन्त्रन्यासो यथा,—

ॐ सहस्रशीर्षेति वामकरे। पुरुष एवेदमिति दक्षिणकरे। एतावानस्येति वामपादे। त्रिपादूर्द्ध्वमिति दक्षिणपादे। ततो विराडिति वामजानुनि। तस्माद्यज्ञादिति दक्षिणजानुनि। तस्मा-द्यज्ञादिति वामकट्याम्। तस्मादश्वा इति दक्षिणकट्याम्। तं यज्ञमिति नाभौ। यत्पुरुषमिति हृदये। ब्राह्मणोऽस्येति कण्ठे। चन्द्रमा मनस इति वामबाहौ। यत्पुरुषेणेति मुखे। सप्तास्या-सन्निति अक्ष्णोः। यज्ञेन यज्ञमिति मूर्द्ध्नि विन्यसेत्।

एवं विन्यस्य ध्यानं कुर्य्यात्,—

शङ्खचक्रगदापद्मपाणिं ध्यायेज्जनार्द्दनम्।

[1]ध्येयः सदा सवितृमण्डलमध्यवर्त्ती

नारायणः सरसिजासनसन्निविष्टः।

केयूरवान् मकरकुण्डलवान् किरीटी

हारी हिरण्मयवपुर्धृतशङ्खचक्रः॥

एवं ध्यात्वा मनसाभ्यर्च्यार्घ्यस्थापनं कुर्य्यात्। अस्त्राय फडिति साधारं शङ्खं प्रोक्ष्य नम इति मन्त्रेण पूरयित्वा।

ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति।

नर्म्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥

इत्यङ्कुशमुद्रया तीर्थमावाह्य ॐकारेण गन्धपुष्पाक्षतादीनि दत्त्वा धेनुमुद्रां प्रदर्श्य ॐकारमष्टधा जपेत्। तद्दक्षिणे प्रोक्षणीपात्रं

---

१ ख पुस्तके, ध्येयः सदासवितृमण्डलेत्यादि एतन्नास्त्यमस्ति।

संस्थाप्य अर्घेनापूर्य्य गन्धपुष्पे दत्त्वा सर्वांजलं किञ्चिद्दत्त्वा तज्जले-नात्मानं पूजोपकरणञ्चाभ्युक्ष्य एवमर्घं वामे पाद्यमाचमनीयञ्च स्थापयेत्।

मण्डले प्रतिमायां वा अप्स्वग्नौ सूर्य्यरश्मिषु।
शालग्रामे मणौ वापि पूजयेत् पुरुषोत्तमम्॥

मण्डलस्योभयपार्श्वे गुरुं गणेशञ्च सम्पूज्य मध्ये पुष्पाञ्जलिं दत्त्वा पूर्व्ववत् ध्यात्वा वहन्नासापुटेन तेजः पुष्पाञ्जलिना ॐसहस्रशीर्षेति मण्डलादिषु संस्थाप्य भगवन् श्रीमहापुरुष इहागच्छागच्छ तिष्ठ तिष्ठ सन्निहितो भवाभिमुखो भव इति तत्तन्मुद्राः प्रदर्श्य पुरुष एवेद-मिति पुष्पाञ्जलिमासनं काष्ठासनं वा यथालाभं दद्यात्। सर्व्वत्र मन्त्रान्ते श्रीपुरुषाय इदममुकद्रव्यं नम इत्यर्घोदकेनोत्सृजेत्।

ॐ एतावानस्येति पाद्यम्। त्रिपादूर्द्ध्वमित्यर्घ्यम्। ततो विरा-ड़ित्याचमनीयम्। तस्माद्यज्ञादिति स्नानीयम्। ततः पूर्व्ववदाच-मनीयम्। तस्माद्यज्ञादिति वस्त्रम्। ततः पूर्व्ववदाचमनीयम्। तस्मादश्वा इत्युपवीतम्। तं यज्ञमिति गन्धम्। यत्पुरुषमिति पुष्पम्। ब्राह्मणोऽस्येति धूपम्। चन्द्रमा मनस इति दीपम्। नाभ्या आसीदिति नैवेद्यम्। पूर्व्ववत्पुनराचमनीयम्। यत्पुरुषे-णेति पुष्पाञ्जलिदानम्। ततोऽष्टाक्षरमन्त्रं वासुदेवमन्त्रं वा यथा-शक्ति जप्त्वा जपं समर्प्य ॐ सप्तास्यासन्निति प्रदक्षिणीकृत्य स्तुत्वा प्रसीद भगवन्निति दण्डवत् प्रणम्य नमस्तेति उक्त्वा, ॐ यज्ञेन यज्ञमिति तत्तत्तं तेजः पुष्पेण सह हृत्पद्मे स्थापयेत्। वौं विष्वक्-सेनाय नम इति ऐशान्यां त्रिकोणमण्डले निर्माल्येन पूजयेत्।

अथ वा एवमुक्तप्रकारेण ।

ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।

दिवीव चक्षुराततम् ॥

इति मन्त्रेण निर्व्यापकन्यासं विधाय पूर्व्ववदावाहनादिकमु-द्वासनान्तं सर्व्वं तद्विष्णोरिति मन्त्रेण कुर्य्यात् । एवमन्येषामपि देवानां पूजां तेषां वैदिकमन्त्रेण कुर्य्यात् ।

इति वैदिकपूजाविधिः ।

मिश्रपूजा तु पूर्व्वोक्ततान्त्रिकप्रकारे वैदिकमपि मिश्रीकृत्य पूजयेत् । अथ फलवाक्यम् ।

श्रीगोविन्दपदद्वन्द्वमाधाय हृदि सादरम् ।

त्रिविधः सर्व्वदेवानां पूजाविधिरुदीरितः ॥

इति त्रिविधदेवपूजाः ।

श्रीगोविन्दपदद्वन्द्वे समाधाय मनोऽधुना ।

संक्रान्तिर्नक्षिणीवन्धोः सम्यगत्र विविच्यते ॥

अग्निपुराणे,—

अयने द्वे विषुवे द्वे चतस्रः षड़शीतयः ।

चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ॥

मृगकर्क्कटसंक्रान्ती द्वे तूदगुदक्षिणायणे ।

विषुवती तुलामेषे आद्यां मध्ये तथापराः ॥

वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी तथा ।

धनुर्मिथुनकन्यासु मीने च षड़शीतयः ॥

अतीतानागते पुण्ये द्वे तूदगुदक्षिणायणे ।

त्रिंशत् कर्कटके नाड्यो मकरे विंशतिः स्मृताः ॥
वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश।
षड़शीत्यामतीतायां षष्टिरुक्तास्तु नाड़िकाः॥
पुण्याख्या विष्णुपद्याञ्च प्राक् पश्चादपि षोड़श।
या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः ॥

मृगो मकरसंक्रान्तिरुत्तरायणं कर्कटसंक्रान्तिर्दक्षिणायनमित्यर्थः आसामयनविषुवसंक्रान्तीनामपराः षड़शीतिविष्णुपद्यः ।

स्वस्थे नरे सुखासीने यावत् स्पन्दति लोचनम्।
तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्त्तितः ॥
तत्पराच्छतशो भागस्त्रुटिरित्यभिधीयते।
त्रुटेः सहस्रभागो यः स कालो रविसंक्रमे ॥

इति देवीपुराणोक्तसंक्रान्तिकालस्य कर्म्मायोग्यत्वात् तत्सन्निहितकालानां पुण्यकालत्वमाह अतीतानागते इति उत्तरायणमतीतं सत्पुण्यं, दक्षिणायणमनागतं भविष्यदिति कृत्वा पुण्यमित्यर्थः। कर्कटे दक्षिणायणेऽनागते भविष्यति संक्रान्तेः प्राक्कालीनास्त्रिंशन्नाड्यो दण्डाः पुण्याः स्नानदानादिकर्म्मार्हाः। तथा मकरे[1] उत्तरायणे अतीते संक्रान्तेः परकालीना विंशतिनाड्यः[2] पुण्या इत्यर्थः ।

तथा च देवीपुराणम्,—

यावद्विंशकला भुक्तास्तत्पुण्यञ्चोत्तरायणे ।

---

१ ग, अथ मकरे ।

२ ग, परकालीनविंशतिनाड्यः ।

निरंशे भास्करे दृष्टे दिनान्तं दक्षिणायने ॥

संक्रान्तिपक्षे भास्करोऽंशशून्यो भवति तस्मिन् भास्करे जाते सति संक्रान्तेः परं यावद्विंशतिकला भुक्ता भवन्ति तावत्कालमुत्तरायणे पुण्यमित्यर्थः । दक्षिणायने तु दिनान्तं दिवावसाने प्रमाणं अहोरात्रार्द्धं त्रिंशद्दण्डाः पुण्यमित्यर्थः ते च संक्रान्तेः प्राक्तना एव । भविष्यत्ययने पुण्यमिति वक्ष्यमाणैतद्दोषापरवचनात् । वर्त्तमाने तुलामेषे इति उभयतः प्राक् पश्चादपि दश नाड्यो मिलिता विंशतिरित्यर्थः ।

तथा वृद्धनारदीयेऽपि,—

तत्र च कर्कटे ज्ञेयो दक्षिणायनसंक्रमः ।
पूर्व्वतो घटिकास्त्रिंशत् पुण्यकालं विदुर्बुधाः ॥
तुलायां चैव मेषे च पूर्व्वतः परतः स्थिताः ।
ज्ञेया दशैव घटिका इत्यास्थयकारिकाः ॥

यच्च,—

षडशीतिमुखेऽतीते वृत्ते च विषुवद्वये ।
भविष्यत्ययने पुण्यमतीते चोत्तरायणे ॥

इति देवीपुराणवचनं तत्र वृत्ते चेति चकारोऽवृत्ते चेति समुच्चयार्थः वर्त्तमाने वाक्य अर्थः नारदीयाग्निपुराणवचनाभ्यां सहैकवाक्यत्वात् देवीपुराणे अयनपदं गोवत्सीवर्द्धन्यायाद्दक्षिणायनपरम् । देवीपुराणे विषुवे षडशीत्याद्य कालसंख्या नोक्ता साचाग्निनारदीयपुराणवचनाभ्यामवगन्तव्या । पुण्याख्या इति विष्णुपदाद्य प्रागपि पश्चादपि षोडश नाड्य इत्यर्थः । एतद्वचनैक-

वाक्यत्वात् षडशीतिविषुवायनेषु क्वचिदतीतानां[1] क्वचिदनागतानां तत्तत्संख्याविशेषविधिविरोधाच्च शातातपजावालवचनमपि विष्णु-पदीविषयमेव।

यथा शातातपः,—

अर्व्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोडश।
कालः पुण्योऽर्कसंक्रान्तेर्विद्वद्भिः परिकीर्त्तितः॥

जावालः,—

संक्रान्तेः पूर्व्वकालस्तु षोडशोभयतः कला।

या याः सन्निहिता नाड्य इति सर्व्वसंक्रान्तिविषयम्।

यत्तु,—

अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः।

इति देवीपुराणवचनं, तस्यायमर्थः,—

संक्रान्तेरतीतानागतो भोगो भोगहेतुः पुण्यजनककालः स्यात् स च पञ्चदश नाड्यः स्मृतास्तदपि विष्णुपदीविषयमेव षोडशदण्डात् पञ्चदशदण्डानां प्राशस्त्यप्रदर्शनपरम्।

यच्चापरं देवीपुराणवचनम्।

मन्दा मन्दाकिनी ध्वाङ्क्षी घोरा चैव महोदरी।
राक्षसी मिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी मता।
क्षिप्रे ध्वाङ्क्षीं विजानीयादुग्रे घोरा प्रकीर्त्तिता॥
चरे महोदरी ज्ञेया क्रूरे चये तु राक्षसी।

---

१ ग, क्वचिदतीतानां पदं नास्ति।

मिश्रिता चैव विज्ञेया मिश्रितर्क्षे तु संक्रमे ॥

चित्वतुःपञ्चसप्ताष्टनवद्वादश एव च ।

क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम् ॥

तदयनादिद्वादशसंक्रान्तिषु ध्रुवादिनक्षत्रविशेषसञ्चाराभ्यन्दादिनामतया सप्तधा भिन्नासु पूर्व्वोक्तकालमध्ये यथासंख्यं सञ्चारसन्निहितानां चित्वतुःपञ्चादिनाड़िकानामतिप्राशस्त्यप्रदर्शनपरं अतएव तत्पुण्यं पारमार्थिकमित्युक्तम् ।

ध्रुवादिनक्षत्राण्युक्तानि ज्योतिषे,—

उत्तरात्रयरोहिण्यो ध्रुववर्गः प्रकीर्त्तितः ।

पूर्व्वाणि त्रीणि भरणी मघा चोग्रगणः स्मृतः ॥

श्रवणादित्रयं स्वाती चरवर्गः पुनर्वसुः ।

पुष्याश्विनी तथा हस्ता क्षिप्रनामा गणः स्मृतः ॥

चित्रानुराधारेवत्यो मृगशीर्षं मृदुगणः ।

अश्लेषार्द्रा तथा ज्येष्ठा मूला क्रूरगणः स्मृतः ॥

कृत्तिका च विशाखा च मिश्रसंज्ञावुभौ स्मृतौ ।

एतत् सर्व्वं दिवासंक्रान्तिविषयं रात्रिसंक्रान्तीनां वक्ष्यमाणविशेषवचनाम्नातत्वे प्रागुक्तानां सामान्यवचनानां पदाहवनीयन्यायेन तदितरपरत्वादिति ।

रात्रौ द्वादशसंक्रान्तिषु व्यवस्थामाह ।

देवीपुराणम्,—

अर्द्धरात्रेत्वसम्पूर्णे दिवा पुण्यमनागतम् ।

सम्पूर्णेचार्द्धरात्रे च उदयेऽस्तमयेऽपि वा ॥

मासार्द्धं भास्करे पुण्यमपूर्व्वं शर्व्वरीदये।
सम्पूर्णे तूभयोर्ज्ञेयमतिरेके परेऽहनि॥

अर्द्धरात्रादर्व्वाक् द्वादशस्वेव संक्रमेषु अर्थात्तद्दिवसीयं दिवा पुण्यं अर्द्धरात्रे संपूर्णेऽतीते सति संक्रमे अनागतं भाविदिवा पुण्य-मित्यर्थः। अर्द्धरात्रेऽन्यूनातिरिक्ते[१] संक्रमे उदये सति तदारभ्य भावि दिवा पुण्यं अस्तमयेऽस्तमयपर्य्यन्तं अतीतदिवा च पुण्यमित्यर्थः। वाशब्दः समुच्चये। अत्र दिवामात्रं पुण्यमुक्तं तत् किं सर्व्वमुत कियदेति सन्देहे आह मासार्द्धमिति। दशमर्द्धं, रात्रेः प्रथमार्द्धं संक्रान्तौ भास्करे अर्थात् दिवा मासार्द्धं सन्निहितत्वाच्छेष-दिवार्द्धं पुण्यमित्यर्थः। अर्द्धरात्रादतिरेके संक्रान्तौ परेऽहनि प्रथ-मदिनार्द्धं पुण्यं सान्निध्यात्। अतएव या याः सन्निहिता नाद्य इत्युक्तम्। सम्पूर्णे तूभयोरिति। सम्पूर्णार्द्धरात्रे संक्रान्तौ उभयोः पूर्व्वापर[२][दिनयोरर्द्धं पूर्व्व]दिनस्योत्तरार्द्धं परदिनस्य पूर्व्वार्द्धं च पुण्यमित्यर्थः।

अत्रैव विशेषमाह देवीपुराणे,—

आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत्।
अर्द्धरात्रे व्यतीते तु विज्ञेयं चापरेऽहनि॥ इति।

सम्पूर्णार्द्धरात्रे संक्रमणे पूर्व्वदिवसीयतिथिर्यदि संक्रमणकाले स्यात्तदा पूर्व्वदिनस्योत्तरार्द्धमेव पुण्यं न तु परदिनस्य पूर्व्वार्द्धं एवञ्च यदुभयोः पुण्यत्वमुक्तं तद्भिन्नतिथिपक्षे बोद्धव्यम्। एवञ्च अन्यतिथ्य-नुरोधेनार्द्धरात्रात् परतः संक्रान्तावपि पूर्व्वदिनपरार्द्धंदिनस्य

१ ख, ग, अन्यूनानतिरिक्ते। २ ग, [ ] चिह्नितांशो नास्ति।

पुण्यत्वमस्त्वित्याशङ्कां निवारयति अर्द्धरात्र इति रात्रेः परार्द्धसंक्रमणे सर्व्वदैव परदिनपूर्व्वार्द्धमेव पुण्यमित्यर्थः।

यत्तु समयप्रकाशे त्रिचतुःपञ्चसप्ताष्टेत्यादिवचनं मन्दादिसंक्रान्तिगोचरतया सन्ध्यासंक्रान्तिविषयं दिवारात्रिसंक्रान्त्योर्यथायथं व्यवस्थापितत्वादित्युक्तम्। तदयुक्तं रात्रिसंक्रान्तौ विशेषवचनदर्शनात् सामान्यानां यावद्विंशकला भुक्ता इत्यादिवचनानां तदितरपरत्वावगमात् सन्ध्यासंक्रान्तिष्वपि प्रवृत्तेर्विपरीतोत्तरे नियामकविरहाच्च। नन्वेवं रात्रिसंक्रमणेऽपि दिनस्यैव पुण्यत्वमुक्तं तत्कथम्—

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।
स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च॥

इति देवलवचनं सङ्गच्छते। सत्यं, प्राग्दक्षिणायनादिषु यत्नारे तत्पूर्व्वकालस्य दिवाशेषे च षडशीत्युत्तरायणादिषु यत्नारे परकालस्य पुण्यत्वाद्रात्रौ स्नानदानादिविधायकत्वमस्त्येति। निशीति याचाश्राद्धादिनिषिद्धकालोपलक्षकं, अतएव विवाहोपरागादिनिमित्तकश्राद्धादिकं याचाश्राद्धौ निर्विवादम्।

देवीपुराणे—

मन्दा विप्रजने शस्ता मन्दाकिन्यस्तु राजनि।
ध्वाङ्क्षी वैश्येषु विज्ञेया घोरा शूद्रे शुभप्रदा॥
महोदरी तु चौराणां शौण्डिकानां जयावहा।
चण्डालपुक्कशादीनां राक्षसी क्रूरकर्म्मणाम्॥
सर्व्वेषां कारुकाराणां मिश्रिता भूतिवर्द्धनी।
नृपाः पीडन्ति पूर्व्वाह्णे मध्याह्ने च द्विजोत्तमाः॥

अपरात्रे तथा वैश्याः शूद्राश्चास्तमये रवौ।
पिशाचास्तु प्रदोषे तु अर्द्धरात्रे तु राक्षसाः॥
अर्द्धरात्रे व्यतीते तु पौषान्ते नटनर्त्तकाः।
उषःकाले तु संप्राप्ते हन्ति गोस्वामिनो जनान्।
हन्ति प्रव्रजितान् सर्व्वान् सन्ध्याकाले न संशयः॥

पौषघ्नि पौषान्ते आर्षे।

राजमार्त्तण्डे,—

सुप्तः संक्रमते भानुर्गरादिकरणत्रये।
आदित्रये सोपविष्ट ऊर्द्ध्वश्चैव ततो द्वये॥
दुर्भिक्षं रोगसम्पत्तिमूर्द्ध्वः सन् संक्रमन् रविः।
सुप्तः करोति कल्याणमुपविष्टः समं फलम्॥

आदित्रये ववबालवयोः।

तथा,—

कुजार्कशनिवारेषु महासंक्रमणं यदा।
तदा भवेत् प्रजानाशो दुर्भिक्षादिभयं भवेत्॥
तुलासंक्रमणे रात्रौ मेषसंक्रमणे दिवा।
उभयोः प्रत्यवृद्धिः स्याद्विपरीतं विपर्य्यये॥

यत्तु,— सूर्य्योदये विषुवतो जगतां विपत्ति
र्मध्यन्दिने विकलता बहुशस्यहानिः।
अस्तङ्गते दिनकरे बहुशस्यवृद्धि-
रैश्वर्य्यभोगविजया निशि चार्द्धरात्रे॥

इति वचनम्। तदेतद्वचनैकवाक्यतया जलविषुवपरम्।

ज्योतिषे,—

नाड़ीनक्षत्रदिवसे रविभौमशनैश्चराः ।
संक्रान्तिं यस्य कुर्व्वन्ति तस्य क्लेशोऽभिजायते ॥
गोमूत्रसर्षपैः स्नानं सर्व्वौषधिजलेन च ।
ग्रहं सम्पूज्य तं दद्यात् विप्राय कनकोत्तमम् ॥

ग्रहणविवेचने नाड़ीनक्षत्राणि प्रागुक्तानि । यस्य ग्रहस्य सञ्चारस्तं सम्पूज्य इत्यर्थः ।

सर्व्वौषधिरुक्तस्तत्रैव ।

मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
शठी चम्पकमुस्तञ्च सर्व्वौषधिगणः स्मृतः ॥

शैलेयं शैलजमिति ख्यातम् । रजनीद्वयं हरिद्रा दारुहरिद्रा च ।

तथा,— यस्य जन्मर्क्षमासाद्य रविसंक्रमणं भवेत् ।
तन्मासाभ्यन्तरे तस्य रोगक्लेशधनक्षयाः ॥
तगरस्वरोदयपत्रै रजनीसिद्धार्थलोध्रसंयुक्तैः ।
स्नानं जन्मन्यृक्षे रविसंक्रान्तौ नृणां शुभदम् ॥

सिद्धार्थः श्वेतसर्षपः ।

अथ संक्रान्तिकृत्यानि ।

देवीपुराणे,—

संक्रान्त्यां यानि दत्तानि हव्यकव्यानि मानवैः ।
तानि तस्य ददात्यर्कः सप्तजन्म पुनः पुनः ॥

विष्णुः,— आदित्यसंक्रमणं विषुवद्द्वयं विशेषेणायनद्वयं जन्मर्क्षमभ्युदयश्चेति ।

एतांस्तु श्राद्धकालान् वै काम्यानाह प्रजापतिः।
श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते॥

आदित्यसंक्रमणमिति गोवलीवर्द्दन्यायात् विषुवायनेतरपरं विषुवायनयोस्तु फलातिशयः।

संक्रान्तिश्राद्धञ्च पिण्डरहितं कार्य्यम्।

अयनद्वितये श्राद्धं विषुवद्वितये तथा।
संक्रान्तिषु च सर्व्वासु पिण्डनिर्वापनादृते॥
वैशाखस्य तृतीयायां नवम्यां कार्त्तिकस्य च।
श्राद्धं कार्य्यञ्च शुक्लायां संक्रान्तिविधिना नरैः॥
त्रयोदश्यां भाद्रपदे माघे चन्द्रक्षयेऽहनि।
श्राद्धं कार्य्यं पायसेन दक्षिणायनवच्च तत्॥

इति ब्राह्मपुराणवचनात्। संक्रान्तिविधिना पिण्डदानेतर विधिना युगाद्यास्वपि श्राद्धमित्यर्थः। न चैषां वचनानामना-करत्वाशङ्का ब्रह्मपुराणाग्निपुराणयोर्दृष्टत्वात् संवत्सरप्रदीपाद्यनेक-संग्रहेषु लिखितत्वाच्च।

मान्यास्तु,—

ततः प्रभृति संक्रान्तावुपरागादिपर्व्वसु।
त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि॥

इति मत्स्यपुराणवचनात् पिण्डदानविधिनिषेधयोर्विकल्पः। दाने तु फलातिशय इत्याहुः। तदयुक्तम्।

तत्रैव मत्स्यपुराणे,—

ततः प्रभृति पितरः पिण्डसंप्राप्तु लेभिरे।

इति परिभावितत्वात्त्रिपिण्डमाचरेदित्यस्य महीधरवचनस्य- त्रयः पिण्डाः पितरोऽत्रेति व्युत्पत्त्या त्रिपिण्डं त्रैपुरुषिकमाद्ध- मिति व्याख्यानात् । अतएवैकोद्दिष्टं मृताहनीति मृताहे ऐक- पुरुषिकोपहारः कृतः ।

राजमार्त्तण्डे,—

रविसंक्रमणे पुण्ये न स्नायाद्यस्तु मानवः ।
सप्तजन्मस्वसौ रोगी निर्धनश्चाभिजायते ॥

एतेन संक्रान्तिस्नानं नित्यमुक्तम् ।

वराहपुराणे,—

मृते जन्मनि संक्रान्त्यां ग्रहणे चन्द्रसूर्य्ययोः ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

भविष्ये,—

संक्रान्त्यां पक्षयोरन्ते ग्रहणे चन्द्रसूर्य्ययोः ।
गङ्गास्नातो नरः कामाद्ब्रह्मणः सदनं व्रजेत् ॥
अयने विषुवे चैव यः स्नायाज्जाह्नवीजले ।
गङ्गास्नानस्य वर्षार्द्धकृतस्य फलमाप्नुयात् ॥

संक्रान्तौ गङ्गास्नानं काम्यं नित्यन्त्वनुपदेन गतार्थम् ॥

संक्रान्तौ दानमाह राजमार्त्तण्डे,—

अयने कोटिगुणितं लक्षं विष्णुपदीफलम् ।
षडशीतिसहस्राणि षडशीत्यामुदाहृतम् ॥
शतमिन्दुक्षये दानं सहस्रन्तु दिनक्षये ।
विषुवे शतसाहस्रमाकामावैश्वनन्तकम् ॥

आ—आषाढ़ी, का—कार्त्तिकी, मा—माघी, वै—वैशाखी, आसु पौर्णमासीषु दानमनन्तकं कल्पान्तस्थायिफलकमित्यर्थः।

देवीपुराणे,—

एकधापि कृतं कर्म्म कोटिकोटिगुणं भवेत्।
धर्म्मादिवर्द्धते ह्यायूराज्यपुत्रसुखानि च॥
अधर्म्मव्याधिशोकादि विषुवायनसन्निधौ।
विषुवेषु च यज्जप्तं दत्तं भवति चाक्षयम्॥

तथा,— तुलामेषप्रवेशे तु त्यागे च मिथुनस्य च।
रवेर्महाफलं ज्ञेयं तेभ्योऽपि चाप्यमहाफलम्॥
यदा प्रविशते भानुर्मकरं द्विजसत्तमाः।

भविष्ये,—

उपोष्यैव च संक्रान्त्यां प्रातर्योऽभ्यर्चयेद्धरिम्।
स्नात्वा पञ्चोपचारेण स कामानखिलान् लभेत्॥

पूर्व्वदिनमुपोष्येत्यर्थः।

तथा,—

कृत्वोपवासं विधिवद्विषुवे योऽर्च्चयेच्छिवाम्।
शक्तिमान् बहुपुत्रश्च स भवेद्धनवान्नरः॥

तथा,—

योऽभिवीक्षेत विषुवे गत्वा श्रीपुरुषोत्तमम्।
रामं कृष्णं सुभद्राञ्च स वैष्णवपुरं व्रजेत्॥

अथ,— मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्व्वशः।
उल्लेखनमकुर्व्वाणो न तस्य फलभाग्भवेत्॥

इति ब्रह्माण्डपुराणवचनात् मलमासपूर्व्वकाले पूर्व्वसौरमासोल्लेखः मलमासपरकाले तु परसौरमासोल्लेखः कार्य्यः ॥

तत ॐ अद्यामुके मासि अमुकराशितोऽमुकराशौ रवेरमुकसंक्रान्त्यामसुकपक्षेऽमुकतिथावस्मिन् भारतवर्षाख्यभूप्रदेशे इत्यादिवाक्यं मन्तव्यं वाक्यरचनाविचारस्तु दानकौमुद्यां द्रष्टव्यः ग्रन्थगौरवभियात्रोपेक्षितः।

विष्णुपुराणे,—

चतुर्द्दश्यष्टमी चैव अमावस्याऽथ पूर्णिमा।
पर्व्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥
स्त्रीतैलमांससंभोगी पर्व्वस्वेतेषु वै पुमान्।
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः ॥

अत्राधुनिकाः,—

निषेधोऽयं स्नानादिविधिवत् पुण्यकाल एव ततः परं मत्स्यादीनामुपभोगो निर्व्विवाद एवेति लोभाध्यापितकुतर्काः शिष्टाचारं विलोपयन्ति, तन्मन्दम् यद्यपि विधौ संक्रान्तिपदेन पुण्यकालो लक्ष्यते तथापि,—

अष्टम्यां पक्षयोरन्ते रविसंक्रान्तिवासरे।
पक्षोपान्ते स्त्रियं तैलं मांसञ्च परिवर्ज्जयेत् ॥

इति ब्रह्मपुराणे वासरग्रहणात् मलमासोपलक्षितदिन एव निषेधः, तदेकवाक्यतया विष्णुपुराणवचनमपि मलमासोपलक्षितदिवसपरम्।

न च वासरस्योपलक्षितत्वेऽपि पुण्यकाल एव विधिवन्निषेधोऽपि भविष्यतीति वाच्यम्।

निमित्तं कालमाश्रित्य प्रवृत्तिर्विधिनिषेधयोः।
तत्र पूर्व्वे विधेर्वृत्तिर्निषेधः कालमात्रके॥

इति प्रचेतोवचनात्, वासरपदवैयर्थ्यापत्तेश्च।

एवञ्च,—

निरंशं दिवसं विष्टिं व्यतीपातञ्च वैधृतिम्।
केन्द्रञ्चापि शुभैः शून्यं पापाढ्यमपि वर्ज्जयेत्॥

इत्यादौ ज्योतिषे [1][रविणा निरंशीकृतमहोरात्रं व्याप्यैव शुभकर्म्मणां निषेधोऽपि सङ्गच्छते अन्यथा मदद्वैशसं स्यात्। अथवा सञ्चारक्षणस्यातिसूक्ष्मत्वात् तत्र विधिनिषेधानुपपत्त्या संक्रान्तिपदेन विधौ निषेधे च सर्व्वत्रैव सञ्चारोपलक्षितदिनमेवोच्यते तदा च 'तत्र पूर्व्वे विधेर्वृत्तिर्निषेधः कालमात्रके' इति वचनात् पुण्यकाले विधिर्निषेधस्त्वहोरात्रव्यापीति अतएव संक्रान्तेः पुण्यकालस्तु इत्यादिवचनैः पुण्यजनकत्वमेव तत्तद्दण्डानामुक्तं अन्यथा पुण्यपदवैयर्थ्यापत्तेः।

न च रात्रेः परार्द्धे सञ्चारे तद्दिवसस्योपलक्षणात् कथं परदिने विधिनिषेधाविति वाच्यं, तथाविधसञ्चारे तद्दिवसीयविधेः परदिने वचनेनातिदिष्टत्वात्।]

यथा देवीपुराणे,—

सम्पूर्णे तूभयोर्यामयमतिरेके परेऽहनीति।

---

[1] ख पुस्तके, [ ] चिह्नितसन्दर्भो नास्ति।

राजमार्त्तण्डे भोजराजः,—

अर्द्धरात्रादधस्तात् स्यात्सङ्क्रान्तिर्वाह्नि क्रिया ।
ऊर्द्ध्वं संक्रमणे भानोरपरेऽह्नि तत्क्रिया ॥

[1][निषेधस्तु सञ्चारोपलक्षितदिन एव प्रागुक्तवचनात् अन्यथा परदिनदिवार्द्धस्य पुण्यकालत्वे रात्रौ सञ्चारक्षणे क्षौरकर्मप्रसङ्गः[2] तथार्द्धरात्रसञ्चारे पूर्व्वापरदिवार्द्धयोः पुण्यकालत्वात् तत्र दिनद्वये मांसादिवर्ज्जनप्रसङ्गः तन्मध्ये च रात्रौ मांसभक्षणादिप्रसङ्गश्च स्यात् ।]

अथ दधिसंक्रान्तिव्रतम् ।

तच्चोत्तरायणसंक्रान्तिमारभ्य वर्षैकं यावत् प्रतिसंक्रान्तौ कार्य्यम् । तत्रायं विधिः ।

स्नातः शुचिराचान्तः स्वस्ति वाच्य संकल्पं कुर्य्यात् । अद्यामुके मासि अमुकराशितोऽमुकराशौ रवेरमुकसंक्रान्त्यामसुकपक्षेऽमुकतिथावारभ्य वर्षैकं यावत् प्रतिसंक्रान्तौ भारतवर्षाख्यभूप्रदेशे अमूकगोत्रनामाहं हृदयसन्तापनाशधनधान्यसमृद्धिसौख्यविवृद्धिकामो दधिसंक्रान्तिव्रतं करिष्ये ।

स्त्रियास्तु हृदयसन्तापानुत्पत्त्यवैधव्यधनधान्यसमृद्धिसौभाग्यसौख्यविवृद्धिकामेति विशेषः । मोक्षकामस्य तु संसारसन्तापप्रशमनकाम इति विशेषः । इति संकल्प्य भूतशुद्धिप्राणायाममातृकान्यासान् विधाय ॐकारेणाङ्गन्यासं कृत्वा तद्विष्णोरिति मन्त्रेण व्यापकत्रयं विधाय नारायणं ध्यायेत् ।

---

१ ख पुस्तके, [ ] चिह्नितसन्दर्भो नास्ति । २ ग पुस्तके, क्षौरसङ्गः ।

उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदां पङ्कजं
चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम्।
कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभो-
द्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे॥

इति ध्यात्वा मनसा सम्पूज्यार्घ्यस्थापनं कृत्वा प्रोक्षणीपात्रं पाद्यञ्च स्थापयेत्। ततो घटे गणेशं ध्यात्वावाह्य प्रोक्षणीजलेन पाद्यादिभिः सम्पूज्य स्वर्णताम्रादिमयीं श्रीलक्ष्मीकनारायणप्रतिमां शालग्रामं वा तद्विष्णोरिति मन्त्रेणाष्टाक्षरनारायणमन्त्रेण वा दध्ना स्नपयित्वा घटे वा मण्डले वा संस्थाप्य पुनर्ध्यात्वा तद्विष्णो-रिति मन्त्रेणाष्टाक्षरेण वावाह्य मन्त्रद्वयान्यतमेन पाद्यादिभिरुप-चारैः पूजयेत्। विशेषतो गव्यं दधि दद्यात्। नारी तु प्रणव-वर्ज्जितेन सप्ताक्षरनारायणमन्त्रेणेति।

ॐ श्रीकृष्णाय नमः ॐ वासुदेवाय नमः ॐ नारायणाय नमः ॐ देवकीनन्दनाय नमः ॐ यदुश्रेष्ठाय नमः ॐ वार्ष्णेयाय नमः ॐ असुराक्रान्तभारहारिणे नमः ॐ धर्म्मसंस्थापकाय नमः। इति कृष्णाष्टकेन सम्पूज्य कथां शृणुयात्।

भविष्ये अगस्त्य उवाच,—

नृणां हृदयसन्तापः कर्म्मणा केन माधव।
व्रतेन वा विनश्येत तन्मे ब्रूहि जनार्द्दन॥

श्रीकृष्ण उवाच,—

एतदर्थे कथां दिव्यां शृणु वक्ष्यामि तेऽनघ।

१ ख पुस्तके, उद्यत्कोटिदिवाकराभमनिशमित्यादि ध्यायेत्।

क्षीरोदधौ पुरा विप्र शेषपर्य्यङ्कशायकः ॥
अभवं तत्र मे लक्ष्मीः पादसंवाहिकाऽभवत् ।
अथ तस्योदधेस्तीरे गत्वा काचन कन्यका ॥
रोदिति स्मातिसन्तप्ता विलप्य च पुनः पुनः ।
शोकेन महतात्यर्थं मनस्तापेन दुःखिता ॥
तस्यास्तथा रुदत्यास्तु दुःखाकुलितचेतसः ।
निशम्य करुणं लक्ष्म्या वारि सुस्राव चक्षुषः ।
तप्तानां वाष्पविन्दूनां पतितानां ममोपरि ॥
तेषां स्पर्शादहं निद्रां महर्षे त्यक्तवांस्तदा ।
अवोचं च तदा लक्ष्मीं कारुण्यद्रुतचेतसम् ॥
कस्मात्त्वं रोदिषि शुभे किन्ते शोकस्य कारणम् ।
एवमुक्ता तु सा लक्ष्मीः प्रत्युवाचातिदुःखिता ॥
देवास्य जलधेस्तीरे प्रत्यहं कापि कन्यका ।
रोदित्यन्यन्तदुःखार्त्ता करुणञ्च विलापिनी ॥
तस्यास्तथाविधां वाचं निशम्य मम वेगतः ।
सुस्राव नेत्रजं वारि कारुण्यान्मधुसूदन ॥
मनुष्याणां कथं देव सन्तापो नोपपद्यते ।
तन्मे ब्रूहि जगन्नाथ श्रोतुं कौतूहलं मम ॥

देव उवाच,—

शृणु प्रिये प्रवक्ष्यामि दधिसंक्रान्तिनामकम् ।
व्रतमस्ति मनुष्याणां सन्तापशमनं परम् ।
शुभे काले तु संप्राप्ते संक्रान्तिर्या शुभा भवेत् ॥

उत्तरायणसंक्रान्तिविशेषेण प्रशस्यते।
तदारभ्य व्रतं चैतत् कार्य्यमावत्सरात्शुभे॥
मां त्वया सहितं दृष्ट्वा स्नापयित्वा प्रयत्नतः।
गन्धादिभिश्च विधिवदुपचारैः समर्च्चयेत्॥
गव्यं दधि शुभं देवि मम हस्ते प्रदापयेत्।
दधिभोज्यं ब्राह्मणाय प्रदद्यात् प्रीतये मम॥
मासि मासि च संक्रान्तौ दधिभोज्यञ्च वत्सरम्।
समाप्ते तु व्रते देवि गन्धपुष्पनिवेदनैः॥
वस्त्रयज्ञोपवीताद्यैर्विशेषेण समर्च्चयेत्।
द्वादश ब्राह्मणान् भक्त्या भोजयेद्दधिभिः सह॥
विप्रेभ्यो दक्षिणां दद्यात् प्रतिष्ठार्थं व्रतस्य च।
एवं कृते व्रते देवि सन्तापो नोपपद्यते॥
वैधव्यदुःखशमनं धनधान्यसमृद्धिदम्।
दम्पत्योः प्रीतिजननं सर्व्वसौख्यविवर्द्धनम्॥
कर्त्तव्यं पुरुषैः स्त्रीभिर्व्रतं मोक्षकरं परम्।
एवन्ते कथितं देवि व्रतानां व्रतमुत्तमम्॥
कथामेताञ्च ये पुण्यां शृण्वन्ति श्रद्धया नराः।
सर्व्वदुःखविनिर्मुक्तास्तेऽपि यान्ति परां गतिम्॥

इति श्रुत्वा स्तुत्वा प्रणम्य ब्राह्मणाय भोज्यं दद्यात्। अद्येत्यादि दधिसंक्रान्तिव्रतकर्म्मणि सलक्ष्मीकनारायणप्रीतिकामो यथागोत्र-नाम्ने ब्राह्मणाय भोज्यमिदं सदधि सोपकरणं सम्प्रददे। तत्र काञ्चनदक्षिणा देया प्रतिमासीयव्रतेऽपि दक्षिणेत्याचारः। ततः

यमस्वेति हृदये उदास्य दधिसहितं हविष्यान्नं भुञ्जीत। वत्सरान्तरे उत्तरायणसंक्रान्त्यां यथाविधि व्रतं कुर्य्यात्। तत्र वस्त्रदधिभिः स्नापयित्वा षोड़शोपचारैर्विशेषतो दधिवस्त्रयज्ञोपवीताद्यैः लक्ष्मीकं नारायणमर्च्चयित्वा द्वादशब्राह्मणेभ्यः सदधीनि सवस्त्राणि भोज्यानि दत्त्वा स्तुत्वा पुनःपुनः प्रणम्य व्रतं समर्पयेत्।

ॐ अद्येत्यादि तत्तत्फलकामनया कृतैतद्दधिसंक्रान्तिव्रतं श्रीयलक्ष्मीकनारायणाय समर्पये प्रीयतां भगवान् विष्णुः।

ॐ अद्येत्यादिकृतैतद्दधिसंक्रान्तिव्रतकर्म्मणः प्रतिष्ठार्थं दक्षिणामिदं काञ्चनं यथागोत्रनामभ्यो ब्राह्मणेभ्योऽहं संप्रददे। ततः यमस्वेति [1]हृदये देवमुदास्याच्छिद्रं कृत्वा शान्तिं कुर्य्यात्॥

इदानीं मासकृत्ये निरूपयितव्ये मासज्ञानाधीनत्वात्तत्कृत्यानां प्रथमं सामान्यतो मासपदार्थं निरूप्य [2]चैत्रादिमासविशेषोऽपि निरूप्यते।

अत्र केचित्,—

हारीतेन चान्द्रमासि मासशब्दस्य सङ्केतितत्वात्तस्यैव मासशब्दो मुख्योऽन्यत्र भाक्तः॥

यथा हारीतः,—

> इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।
> अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ॥

---

१ ख पुस्तके, सहृदये।

२ ग पुस्तके, चैत्रादिपदवाच्यमासविशेषः।

तमतिक्रम्य तु रविर्यदा गच्छेत् कदाचन।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः॥

शुक्लप्रतिपदि इन्द्राग्नियागः कृष्णप्रतिपदि अग्नीषोमयागः एतौ दर्शपौर्णमासान्तर्गतौ पिण्डपितृयज्ञाङ्गभूतः पितृविग्रह-सोमदैवतोऽग्नौकरणहोमो दर्शे विहितः, माघादिः समाप्तावित्य-नेन शुक्लप्रतिपदादिदर्शान्तश्चान्द्रो माघ इत्युक्तं तं माघमतिक्रम्य रविर्यदि गच्छेत् तत्र यदि सञ्चारं न करोति तदा स माघो मलिम्लुच इत्याहुः॥

तन्मन्दं सङ्क्रमाप्रोपयुक्तचान्द्रमासस्यैव हारीतेन सङ्केतितत्वात्, तमतिक्रम्येत्यादिना तथैवोपसंहारात्, किन्तु बहूनां मुनीनां सौर-सावनचान्द्रनाक्षत्रेषु तुल्यसङ्केतदर्शनाच्चतुर्ष्वेव नानार्थो माससब्दो मुख्यः।

न च नानार्थकल्पनागौरवाच्चान्द्रे मुख्योऽन्यत्र भाक्त इति वाच्यम्। विनिगमनाविरहात् सर्व्वत्र मुनीनां तुल्यसङ्केतदर्शनाच्च, अन्यथा नानार्थोच्छेदापत्तेः।

यथा ब्रह्मसिद्धान्ते,—

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः।
एकराशौ रविर्यावत् कालं [1]मासः स भास्करः॥

शुक्लादिः शुक्लप्रतिपदादिरित्यर्थः पक्षावयववाचित्वाच्च शुक्ल-शब्दस्य।

---

१ ख, ग पुस्तके, मासस्तु भास्करः।

यथा वराहसंहितायाम्,—

दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः ।
रविसंक्रान्तिषु चिह्नः सौरस्तु निगद्यते तज्ज्ञैः ॥

दर्शादित्यवधौ पञ्चमी न त्वभिविधौ तदा हि मासानां दर्शादित्वे दर्शान्तत्वपादित्वे वा वत्सरे यथा मासानां नोपापत्तिः स्यात् ।

न चैक एव दर्शः पूर्व्वमाससमापकः परमासारम्भकश्चेति वाच्यं एकस्य द्वयोरवयवत्वविरोधात् मासानां परस्परपरीहारेणावस्थानप्रसिद्धिबाधाच्च दर्शे मृतस्य सांवत्सरिकश्राद्धानध्यवसायाच्च। अतएव विष्णुधर्म्मवचने सन्निकर्षादथारभ्येत्यत्र सन्निकर्षान्तरकालस्यापि लक्षणा ।

यथा विष्णुधर्म्मोत्तरे,—

चन्द्रमाः कृष्णपक्षान्ते सूर्य्येण सह युज्यते ।
सन्निकर्षादथारभ्य सन्निकर्षमथापरम् ॥
चन्द्रार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते ।
सावने च तथा मासि त्रिंशत् सूर्य्योदयाः स्मृताः ॥
आदित्यराशिभोगेन सौरो मासः प्रकीर्त्तितः ।
सर्व्वर्क्षपरिवर्त्तैस्तु नाक्षत्रो मास उच्यते ॥

राममार्त्तण्डे,—

मासो रवेः स्यात् प्रतिराशिभोगात्
शुक्लादिदर्शान्तमितोऽथ चान्द्रः ।
त्रिंशद्दिनैरप्यथ सावनाख्यो
भानां भवेद्भः परिवर्त्तनेन ॥

रत्नमालायाम्,—

दर्शावधिं चान्द्रमुशन्ति मासं

सौरं तथा भास्कररांशिभोगात्।

त्रिंशद्दिनं सावनसंज्ञमाहु-

र्नाक्षत्रमिन्दोर्भगणभ्रमाच्च॥

सूर्य्यसिद्धान्ते,—

नाड़ीषष्ट्या तु नाक्षत्रमहोरात्रं प्रचक्षते।

तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा॥

ऐन्दवस्तिथिभिस्तद्वत् संक्रान्त्या सौर उच्यते।

तथा त्रिंशता अर्कोदयैः सावन इत्यर्थः। षष्टिदण्डमात्रेणैव नाक्षत्रं दिनं अर्कोदयस्तु राशिविशेषावस्थानवशेन यावन्ति पलानि दिनभोगः स्यात् तदधिकषष्टिदण्डैर्भवति।

तत्र तत्रैव।

ग्रहोदयप्राणहता खखाष्टैकोद्धृता १८०० गतिः।

चक्रासवो २१६०० लब्धयुता आहोरात्रासवः क्रमात्॥

इत्यनेनाहोरात्रमानं वक्ष्यते ततश्च सावनसंवत्सरेणैकदिनाधिकवत्सरो नाक्षत्रो भवतीत्येतयोर्भेदः। अयञ्च नाक्षत्रो मासो गणनोपयुक्त एव व्यवहारोपयुक्तस्तु विष्णुधर्म्मोत्तराद्युक्तश्चन्द्रस्य भगणभ्रमणात्मक एव स च प्रागेवोक्त इति। ऐन्दवस्तिथिभिस्तद्वदिति तद्वत् त्रिंशता तिथिभिश्चान्द्रो मास इत्यर्थः।

अत्र यद्यपि सामान्येन त्रिंशता तिथिभिरित्युक्तं तथापि हारीतब्रह्मसिद्धान्तवराहसंहिताविष्णुधर्म्मराजमार्त्तण्डादीनां पूर्व्वा-

मन्त्रवचनैकवाक्यतया शुक्लप्रतिपदादिभिस्त्रिंशता तिथिभिरिति बोद्धव्यम्।

अतएव तत्रैव सूर्य्यसिद्धान्ते चयोदशाध्याये,—

त्रिंशता तिथिभिर्मासश्चान्द्रः पित्र्यमहः स्मृतम्।

इति पित्र्याहोपसंहारात् तस्य च शुक्लकृष्णपक्षनियतत्वाद्देन-देव सिद्धम्।

यथा मनुः,—

पित्र्ये राव्यहनी मासः प्रविभागस्तु पक्षयोः।

कर्म्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्व्वरी॥ इति।

यत्तु,—

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः।

न्यूनाः संवत्सरस्यैव स्यातां षाण्मासिके तथा॥

इति छन्दोगपरिशिष्टवचने।

मुख्यं श्राद्धं मासि मासि अपर्य्याप्तावृतुं प्रति।

इति मरीचिवचने।

मृताहे प्रतिमासं कुर्य्यात्। इति विष्णुवचने च।

मासपदं, तत्त्रिंशत्तिथिप्रचयमात्रे लाक्षणिकम्। अतएव चौर्ण-मासान्तेऽपि सुतरामेव लाक्षणिको मासशब्द इति ध्येयम्॥

एवञ्च मासशब्दस्य नानार्थत्वे सति।

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः। इति।

आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः। इति।

मेषादिरविसंक्रान्तिः शशिमासे भवति यत्र तन्नैत्यादौ

चान्द्रो माघ इत्यादि सोपाधिप्रयोगः सङ्गच्छते। अन्यथा तदनर्थकं स्यादिति।

एतेन सौरादिषु त्रिषु रूढं माघपदं चान्द्रे तु माघनक्षत्रायमिति व्युत्पत्त्या त्रिंशत्तिथिप्रचये यौगिकमिति ये वदन्ति तेऽपि निरस्ताः हारीताद्यनेकमुनिभिः सौरादिवच्चान्द्रेऽपि सङ्केताभिधानात् अन्यथा तस्य वैफल्यप्रसङ्गात् अनेकमुनिवचनेषु चान्द्रो माघ इत्यत्र चान्द्रपदस्य पुनरुक्तवैफल्याच्च, माघपदादेव तथा प्रतीतेः।

एवञ्च माघस्य चतुर्विधत्वे सति द्वादशमासाः संवत्सरः इति श्रुतेः।

सौरेणाब्दस्तु मानेन यदा भवति भार्गव।
सावने च तदा माने दिनषट्कं प्रवर्द्धते॥
सौरसंवत्सरस्यान्ते मानेन शशिजेन तु।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन॥

इति विष्णुधर्मोत्तरवचनाच्च सौरादिभिश्चतुर्विधैर्द्वादशभिर्मासैश्चतुर्विधः संवत्सर इति।

न चाधिमासपाते त्रयोदशभिश्चान्द्रमासैः संवत्सर इति वाच्यम्।

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः।
पूर्व्वमर्द्धं परित्यज्य उत्तरार्द्धं प्रशस्यते॥

इति वचनेन मासद्वयस्यैकमासत्वाभिधानात्। अथवा धर्म्मकार्य्योपयुक्तैरेव द्वादशभिर्मासैश्चान्द्रसंवत्सरव्यवहारो न लघिकेनेति।

यत्तु,—

मेषादयो द्वादशैते मासाः संवत्सरः स्मृतः।

इति सूर्य्यसिद्धान्तवचनं तत् सौरसंवत्सरस्य मेषादित्वप्रदर्शन-परम्॥

इदानीं वैशाखादिपदवाच्यं निरूप्यते।

अत्र केचित् सौरे चान्द्रे च मासुभयत्रैव प्रयोगभूयस्त्वदर्शनादु-भयत्रैव वैशाखादिपदशक्तिरित्याहुः तन्न एकत्र लक्षणया सम्भवति प्रयोगनिर्वाहे नानार्थताकल्पनमन्याय्यं शुक्लादिशब्दवत् गौरवात्। तथा चोक्तं कल्पनातो लक्षणैव श्रेयसीति, अगत्यैव हि नानार्थ-ताङ्गीक्रियते यथाक्षादिषु मुख्यसम्बन्धाभावेन लक्षणानुपपत्त्या विनिगमनाविरहेण च स्वीकृतेति। न चात्रापि विनिगमनाविरह इति वाच्यम्। चान्द्रमासस्यैव वैशाखादिपदानां सङ्केतदर्शनात्।

यथा ब्रह्मगुप्तः,—

मेषगरविसंक्रान्तिः शशिमासे भवति यत्र तच्चैत्रम्।
एवं वैशाखाद्या वृषादिसंक्रान्तियोगेन॥

तथा च श्रुतिः,—

या वैशाख्यामावास्या या रोहिण्या सम्बध्यते इति।

अत्र चामावास्यान्तकाले सूर्य्याचन्द्रमसोः सहावस्थाननियमेन वृषार्क एवामावास्यायां रोहिणीयोगसम्भवात् [१]मेषार्के चासम्भवात् श्रुत्यापि ब्रह्मगुप्तवचनं समर्थितम्।

---

१ ख पुस्तके, मेषार्के चासम्भवादित्यंशो नास्ति।

हारीतेनापि,—

इन्द्राग्नी यत्र हूयेते माघादिः स प्रकीर्त्तितः ।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥

इत्यनेन सूर्य्यगतेर्मन्दत्वशीघ्रत्वाभ्यां तद्राग्नौ कदाचित्तिथि-द्वयलाभात् श्राद्धसंशये कदाचिच्च तत्तिथ्यलाभे श्राद्धलोपसवत्त्वात् सौरमासचिह्नं विहाय इन्द्राग्नी यत्र हूयेते इत्यनेनोक्तचान्द्रमास-स्यैव पौषमाघादिसंज्ञां विधाय इतरव्यावर्त्तकेन तेन माघादि-मासचिह्नेन निर्व्विवादं सांवत्सरश्राद्धं इति वदता चान्द्रमास्येव माघादिपदानां शक्तिरुक्ता ।

एवञ्च,—

माघादिषट्कमासेषु शार्ङ्गिणः शयनावधि ।
चूड़ाकर्म्म प्रशंसन्ति मुनयो व्रतकर्म्म च ॥
द्वौ द्वौ माघादिमासौ स्यादृतुस्तैरयनं त्रिभिः ।

इत्यादौ सौरमासे माघादिपदं मकरस्थरव्यारब्धत्वादृत्याद्यौपं अग्निर्माणवक इतिवदिति ।

एतेन ब्रह्मपुराणादौ बहुप्रयोगदर्शनात् पौर्णमास्यन्तमासे माघादिपदशक्तिर्दर्शान्ते लक्षणाऽस्त्वित्यपि निरस्तं पूर्व्वोपन्यस्तश्रुति हारीतब्रह्मपुराणादौ दर्शान्त एव सङ्केतितत्वात् अनुवादकशास्त्रतः सङ्केतशास्त्रस्य बलीयस्त्वाच्च पौर्णमास्यन्तचैत्रादेश्चैत्रपौर्णमास्यन्त-चित्रान्तितिथिप्रचयात्मकतया लक्ष्यतावच्छेदकं वाच्यत्वेन दर्शान्तचैत्रा-पेक्षत्वाच्च। एवञ्च दर्शान्ते मासि चैत्रादिप्रयोगे निर्णीते सति केचित् नक्षत्रेण युक्तः कालः सास्मिन् पौर्णमासीति पाणिनिस्मरणात्

चित्रानक्षत्रयुक्ता पौर्णमासी चैत्री सास्मिन् मासे इति व्युत्पत्त्या पुनरण्प्रत्ययेन यौगिकं चैत्रादिपदमाहुः, तन्न अहोरात्रचिरात्र-द्व्यरात्रादिष्वपि चैत्रादिपदप्रसङ्गात् ।

मासे योगरूढमिति चेत् नक्षत्रयोगव्यभिचारेऽपि कार्त्ति-कादिपदप्रयोगात् ।

तथा ज्योतिषे,—

अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः ।
ज्ञेया मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया ॥

पौर्णमास्यां कृत्तिकादिक्रमेण द्विदिनक्षत्रयोगात् अन्त्योपा-न्त्ययोराश्विनभाद्रयोः फाल्गुने च नक्षत्रत्रययोगात् कार्त्तिकादयो द्वादश मासा भवन्तीत्यर्थः ।

[1]पाणिनिना तु प्रायिकयोगमाश्रित्य यथाकथञ्चित् व्युत्पत्ति-र्दर्शितेति । न च कृत्तिकादिपदेन कृत्तिकारोहिण्योरन्यतर-मुपलक्ष्यते एवमन्येष्वपि मासेष्विति वाच्यं अन्त्योपान्त्यौ त्रिभौ ज्ञेयाविति वचनस्यापि प्रायिकयोगमाश्रित्योक्तत्वादत्रापि व्यभि-चारदर्शनात् ।

यथा ब्रह्मपुराणे,—

आग्नेयन्तु यदा ऋक्षं कार्त्तिक्यां भवति क्वचित् ।
महती सा तिथिः प्रोक्ता स्नानदानेषु चोत्तमा ॥
यदा याम्यन्तु भवति ऋक्षं तस्यां तिथौ क्वचित् ।
तिथिः सापि महापुण्या मुनिभिः परिकीर्त्तिता ॥

---

१ ख, पाणिनिमते ।

प्राजापत्यं यदा ऋचं तिथौ तस्यां नराधिप।
सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा॥

आग्नेयं कृत्तिका, याम्यं भरणी, प्राजापत्यं रोहिणीत्यर्थः। अत्र पौर्णमास्यां भरणीयोगेऽपि कार्त्तिकत्वं प्रत्युत भवन्मते आश्विनत्वमेव तथेति। तुलार्कस्य षोड़शदिनमारभ्य षड्विंशतिदिनाभ्यन्तरे या पौर्णमासी तस्याञ्च तुलाकारब्धचान्द्रमासान्तर्गतत्वात् [1]कार्त्तिकीत्वेनाव्यभिचरितायामवश्यमेव भरणीयोगः पौर्णमास्यन्तकाले सप्तमराशावर्कात्कान्तांशसमसंख्यांशे चन्द्रावस्थाननियमात्, एवञ्च वृश्चिकार्कस्य दशमदिनादूर्द्ध्वं चतुर्दशदिनपर्य्यन्तं तुलाकारब्धचान्द्रमासान्तर्गता या कार्त्तिकी पौर्णमासी तस्यामेव रोहिणीयोगो नान्यत्र कार्त्तिक्यामिति। यदा तु वृश्चिकार्कस्य षोड़शं दिनमारभ्य त्रयोविंशतिदिनाभ्यन्तरे वर्त्तमानायां पौर्णमास्यां वृश्चिकारब्धचान्द्रमासान्तर्गतत्वादाग्रहायणीत्वेनाव्यभिचरितायां रोहिणीयोगोऽवश्यमेव कदाचिन्मृगशिरायोगः पौर्णमास्यन्तकाले चन्द्रार्कयोरन्योऽन्येन सप्तमराशौ समांशावस्थाननियमात्। तदा च नक्षत्रव्यभिचारात् मार्गशीर्षस्यापि कार्त्तिकत्वं प्रसज्येत एवमन्येष्वपि मासेषु नक्षत्रव्यभिचारः सुधीभिरूह्य इति।

अन्ये तु मीनस्थरविशारब्धशुक्लप्रतिपदादिदर्शान्तश्चान्द्रो मासश्चैत्र इत्यादिलक्षणं वदन्ति। तदपि न चारु क्षयमासाव्याप्तेः।

यथा ज्योतिषे,—

असंक्रान्तमासोऽधिमासः स्फुटं स्यात्

---

१ क, ख, पुस्तकद्वये,कार्त्तिकत्वेन।

द्विसंक्रान्तमासः क्षयाख्यः कदाचित्।
क्षयः कार्त्तिकादित्रये नान्यदा स्यात्
तदा वर्षमध्येऽधिमासद्वयञ्च ॥

तथा ज्योतिषे,—

यद्वर्षमध्येऽधिकमासयुग्मम्
यत्कार्त्तिकादित्रितये क्षयाख्यम्।
मासत्रयं त्याज्यमिदं प्रयत्ना
द्विवाहयज्ञोत्सवमङ्गलेषु ॥

क्षयमासस्य द्विसंक्रान्तत्वे मध्ये मासैकलोपप्रसङ्गः स्यात्।

यथा शुक्लप्रतिपदि धनुःसञ्चारः अमावस्यायाञ्च मकरसञ्चारः तस्य च मासस्य वृश्चिकस्थरविप्रारब्धत्वेन [1][मार्गशीर्षत्वात् तत्परस्य च मासस्य मकरस्थरविप्रारब्धत्वेन सुतरां] माघत्वात् धनुःस्थरविप्रारब्धमासाभावात् पौषलोपः स्यात्। अस्त्वेवमिति चेत् तद्वर्षे तन्मासविहिततिथिकृत्यसांवत्सरिकश्राद्धादीनां लोपापत्तिः स्यात् ततश्च प्रतिसंवत्सरं कुर्य्यादिति विधिबाधः प्रसज्येत। [2]एतेन मेषस्थरविप्राप्यश्चान्द्रो मासश्चैत्र इत्याद्यपि निरस्तं मलमासस्य पूर्व्वमासत्वप्रसङ्गः स्यादिति। अन्ये तु ब्रह्मगुप्तलक्षणमेव साधु मन्यन्ते। यदाह ब्रह्मगुप्तः,—

मेषगरविसंक्रान्तिः शशिमासे भवति यत्र तच्चैत्रम्। एवं वैशाखाद्या वृषादिसंक्रान्तियोगेन। तच्चैत्रमिति, चैत्र एव चैत्रं

१ ख पुस्तके, [ ] चिह्नितांशो नास्ति।
२ ग, एतेन च।

स्वार्थेऽण् देवतादिशब्दवत् क्वचित् स्वार्थिकप्रत्ययाः लिङ्गमतिवर्त्तन्ते एतच्च लक्षणं चयमात्रेऽपि सङ्गतम्, उभयार्कसञ्चारेणैकस्यापि मासस्योभयसंज्ञासमावेशात् । किन्त्वत्रापि मलमासत्वाप्तिर्दोषः ।

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ।

इत्यादिवचनात् रविसंक्रान्तिरहितस्यैव मलमासत्वात् ।

न चानामको मलमास इति वाच्यं न निर्विशेषं सामान्यमिति न्यायेन चैत्रादिसंज्ञकातिरिक्तमासाभावात् ।

न च,— वत्सरान्तर्गतः पापो यज्ञानां फलनाशकृत् ।

नैर्ऋतैर्यातुधानैश्च समाक्रान्तो विनामकः ॥

इति वचनादिति वाच्यं एतस्यामूलत्वात् समूलत्वेऽपि चैत्रादि-मासविशेषचिह्नितकार्य्याभावात् लाक्षणिकं विनामकं विनामक-पदमिति । विनामकैरिति कालमाधवीये पाठः ।

अमावास्यामतिक्रम्य कुलीरं याति भास्करः ।

द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥

इत्यादिराजमार्त्तण्डादिवचने द्विराषाढ़ादिपदप्रयोगाच्च ।

न च द्विराषाढ़ादिप्रयोगो गौण इति वाच्यं युगपद्वृत्ति-द्वयविरोधात् द्वित्वासम्भवाच्च मलमासमरणे तन्मासस्यानामकत्वेन सांवत्सरिकश्राद्धे सपिण्डीकरणे चानध्यवसायाच्च चैत्रादिविशेष-चिह्नाभावादिति, मृताहे सपिण्डीकरणविधानाच्च तत्तन्मासविशेषा-च्छिन्नतिथिविशेषस्य मृताहशब्दवाच्यत्वात् अन्यथातिप्रसङ्गादिति ।

एकसंज्ञौ यदा मासौ स्यातां संवत्सरे क्वचित् ।

तत्राद्ये पितृकार्य्याणि दैवकार्य्याणि चोत्तरे ॥

इति राजमार्त्तण्डवचने एकवंशमलकथनाच्च तथाद्ये पितृकार्य्या-णीति पितृकार्य्यपदं सपिण्डीकरणपरम् ।

सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः ।

इति हारीतवचनात् ।

तथा,— रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ।

तत्र यद्विहितं कर्म्म उत्तरे मासि कारयेत् ॥

इति भीमपराक्रमवचने तत्र मलमासे वैशाखादिपुरस्कारेण विहितं यत्कर्म्म तदुत्तरे प्रकृतवैशाखादौ मासि कुर्य्यादित्यभिधा-नान्मलिम्लुचस्य वैशाखादिसंज्ञा स्फुटैवोक्ता अन्यथा मलमासे कर्म्म-विधानाभावात्तदसङ्गतं स्यात् ।

तथा ज्योतिषे,—

पक्षद्वयेऽपि संक्रान्तिर्यदि न स्यात् सितासिते ।

तदा तन्मासविहितमुत्तरे मासि कारयेत् ॥ इति ।

तथा,— आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः ।

इति हारीतवचने आद्यं द्वितीयमित्यपि मासयोरेकनामत्वे सत्येव सङ्गच्छते इति ।

वस्तुतस्तु,—

या वैशाख्यामावास्या या रोहिण्या सम्पद्यते ।

इति श्रुत्यनुसारात् लक्षणान्तरमुच्यते ।

मेषगतरविसञ्चाररहितसंक्रान्तमासादितरो मीनस्थरविसं-योगी प्रथममासश्चैत्र इत्यादि । मीनस्थरविसंयोगी प्रथममासश्चैत्र इत्युक्ते फाल्गुनेऽतिव्याप्तिवारणाय मेषगतरविसञ्चाररहितसंक्रा-

न्तमासादितर इत्युक्तं फाल्गुन स्तु मेषगतरविसञ्चाररहितसंक्रा-
न्तमासादितरो न भवत्येवेति । संक्रान्तपदन्तु मलमासाव्याप्ति-
वारणायेति । सर्व्वेष्वेव मलमासेषु सर्व्वमासलक्षणातिव्याप्तिवारणाय
मीनस्थरविसंयोगीत्यादिपदम् ।

न च प्रतिपत्प्रथमक्षणे उभयोरराशिसंयोगरूपे रविसञ्चारे सति
पूर्व्वमासो मलमास एव उत्तरमासस्य प्रकृतमासत्वात्तन्नामकता-
ऽवश्यं वाच्या तच पूर्व्वराशिस्थरविसंयोगाभावाल्लक्षणाव्याप्तिरिति
वाच्यम् । सूर्य्यमण्डलस्य मण्डलादिकदेशेनोत्तरराशिसंयोगे सत्यपि
परभागेण पूर्व्वराशिसंयोगसत्त्वान्नाव्याप्तिः ।

एवञ्च वृषगतरविसञ्चाररहितसंक्रान्तमासादितरो मेषस्थ-
रविसंयोगी मासो वैशाख इत्यादिक्रमेणमितरेषु मासेषूह्यम् ।
एतेन एकस्यापि क्षयमासस्योभयार्कसञ्चारेणोभयलक्षणव्याप्त्या
उभयमासत्वं सङ्गतमिति ।

न च क्षयमासमरणे तन्मासस्योभयसंज्ञकत्वात् सांवत्सरिकश्रा-
द्धानध्यवसाय इति वाच्यम् । 

तिथ्यर्द्धे प्रथमे पूर्व्वो द्वितीयार्द्धे तदुत्तरः ।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥

इति व्यासवचनात् तिथेः पूर्व्वार्द्धे मरणे पूर्व्वमासीयतिथि-
र्ग्राह्यः परार्द्धमरणे तु परमासीयतिथिरिति व्यवस्था न चैतदना-
करमिति प्रकृत्य कालमाधवीयादिषु पाश्चात्यस्मृतिषु लिखित-

१ ख, ग पुस्तके, प्राक्काये पं ।

मादिति । एवञ्च चैत्रादिपदार्थे निर्णीते चैत्रपौर्णमासान्त-विशेषणविशिष्टयोः गौणचैत्र इत्यादिलक्षणं ज्ञेयम् ।

न च मीनस्थरविप्रारब्धकृष्णप्रतिपदादिपौर्णमास्यन्तश्चैत्र इति वाच्यम् । कुम्भस्थरविप्रारब्धकृष्णप्रतिपदादावव्याप्तेः ।

न च मीनस्थरविसमाप्यकृष्णपक्षतदव्यवहितशुक्लपक्षौ चैत्र इत्यादिलक्षणं वाच्यम् । मलमासाव्याप्तेः ।

एवं चैत्रादिपदानां चान्द्रे शक्तिः सौरे प्रयोगभूयस्त्व-दर्शनान्निरूढ़लक्षणा ततश्च प्रमाणसद्भावे सौर एव चैत्रादिः प्रमाणाभावे तु मुख्यचान्द्र एव यत्र तु गौणचान्द्रे प्रकरणादिकं प्रमाणमस्ति तत्र गौणमेव चैत्रादिपदमित्याद्यपि ज्ञेयम् । मलमासविवेचनन्तु शुद्धिकौमुद्यां द्रष्टव्यं विस्तरभयान्नेह प्रस्तुतम् ।

अथ पक्षपदार्थो निरूप्यते ।

अथ केचिदुत्तरवचनदर्शनाच्चान्द्रमासार्द्धे पक्षपदशक्तिमाहुः । यथा वायुपुराणे,—

शुक्लपक्षस्य पूर्व्वाह्णे श्राद्धं कुर्य्याद्विचक्षणः ।
कृष्णपक्षापराह्णे तु रौहिणन्तु न लङ्घयेत् ॥

मनुः,—

यथा चैवापरः पक्षः पूर्व्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्व्वाह्णादपराह्णो विशिष्यते ॥

ब्रह्मपुराणे,—

पक्षयुक्तकृष्णपक्षे तु श्राद्धं कुर्य्याद्दिने दिने ।

कात्यायनः,—

शाकेनाप्यपरपक्षं नातिक्रमेदिति।

तत्रान्त्यं श्रावणेषु पञ्चदशाहोरात्रेषु पक्षपदस्य सङ्केतितत्वात्।

यथा विष्णुपुराणे,—

त्रिंशन्मुहूर्त्तं कथितमहोरात्रञ्च यन्मया।

तानि पञ्चदश ब्रह्मन् पक्ष इत्यभिधीयते॥

तथाचामरकोषे,—

ते तु त्रिंशदहोरात्रः पक्षस्ते दशपञ्च च।

नचोभयत्र शक्तिगौरवात् निरूढ़लक्षणया प्रतिपदादिपञ्चदश-तिथिप्रचये प्रयोगिणां समर्थितत्वात्। न च वैपरीत्याशङ्का सङ्केतग्राहकशास्त्राभावात्, अनुवादकशास्त्रतः शक्तिग्राहकशास्त्रस्य बलीयस्त्वाच्च।

पक्षौ पूर्व्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ।

इत्यमरकोषे शुक्लकृष्णयोर्विधेयत्वेन पक्षपदस्यानुवादकत्वाच्च न च प्रयोगभूयस्त्वदर्शनाशङ्का निरूढ़लक्षणायाः शक्तितुल्यत्वात् सौरे मासे चैत्रादिशब्दवत्, किन्तु शुक्लकृष्णपदयोः प्रतिपदादि-पञ्चदशतिथिप्रचये शक्तिरिति।

अथ ऋतुनिरूपणम्।

सूर्य्यसिद्धान्ते,—

भानोर्मकरसंक्रान्तेः षण्मासास्तूत्तरायणम्।

कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम्॥

द्विराशिमाना ऋतवस्ते चापि शिशिरादयः।

सूर्य्यभुक्तराशिद्वयमानेन माघादि ऋतवो भवन्ति ते च ऋतवः शिशिरादयः शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः उत्तरायणे ऋतुत्रयं दक्षिणायने ऋतुत्रयमित्यर्थः । तेन मकरादिराशीनां भानोर्द्विद्विराशिभोगकाल ऋतुरिति ऋतुलक्षणम् ।

तथाच रत्नमालायाम्,—

मृगादिराशिद्वयभानुभोगात्
षड़र्त्तवः स्युः शिशिरो वसन्तः ।
ग्रीष्मश्च वर्षाश्च शरच्च तद्-
द्धेमन्तनामा कथितश्च षष्ठः ॥

तथाच विष्णुपुराणे,—

द्वौ माषावर्कजावृतुः इत्यनेन सौरमानेनैव मासद्वये ऋतुपदप्रयोग उक्तः । तथाच शक्तिग्राहकशास्त्रेऽमरकोषे द्वौ द्वौ माघादिमासौ स्यादृतुस्तैरयनं त्रिभिरिति अत्र तैरयनं त्रिभिरित्यनेन सौरमासेनैव ऋतुपदशक्तिर्दर्शिता ।

तथाच श्रुतिः,—

तपश्च तपस्यश्च शैशिरावृतुः । मधुश्च माधवश्च वासन्तिकावृतुः ।
शुक्रश्च शुचिश्च ग्रैष्मावृतुः[१] । अथैतदुदगयनं देवानां दिनम् ।
नभश्च नभस्यश्च वार्षिकावृतुः । इषश्चोर्जश्च शारदावृतुः ।
सहश्च सहस्यश्च हैमन्तिकावृतुः ।
अथैतद्दक्षिणायनं देवानां रात्रिरिति ।

---

१ ख, ग पुस्तके, ग्रैष्मिकावृतुः ।

अत हि उत्तरायणदक्षिणायनोपसंहारात् अयनस्य च सौर-नियतत्वात् अन्यथा तपस्तपस्यादिपदानां सौरपरत्वात् श्रुत्यापि सौरेणैव मासेन ऋतुपदशक्तिः अवसिता। तेन तपस्तपस्यादि-पदानां मुख्यवृत्त्यनुरोधेन मुख्यचान्द्रमासद्वये केषाञ्चिदृतुपद-वाच्यताभ्रमो हेय एव।

अतएव श्राद्धविवेके।

आश्वयुज्यास्तु कृष्णायां त्रयोदश्यां मघासु च।

प्रावृड्‌ऋतौ यमः प्रेतान् पितॄंश्चाथ यमालयात्॥

इति वचनव्याख्यानावसरे प्रावृड्‌ऋतुरत्र ऋतुः संवत्सर इति मतेन व्याख्यातम्। अन्यथा मघात्रयोदश्या मुख्यचान्द्रभाद्रीयत्वेन सुतरां प्रावृड्‌ऋतुगोचरत्वादन्यथा व्याख्यानमसङ्गतं स्यात्।

यच्च,—

मुख्यं श्राद्धं मासि मासि अपर्य्याप्तावृतुं प्रति।

इति मरीचिवचने चान्द्रेण ऋतुशब्दप्रयोगः, स च गौण एवा-वश्यं वाच्यः तस्य शिशिरादिशब्दवाच्यत्वाभावात् न निर्विशेषं सामान्यमिति न्यायेन शिशिरादिव्यतिरिक्तत्वाभावाच्च।

यच्च,—

विशेषतश्च कार्त्तिक्यां द्विजेभ्यः संप्रयच्छति।

शरद्व्यपाये रत्नानि पौर्णमास्यामिति स्थितिः॥

इत्यादिविष्णुपुराणवचने पौर्णमास्यन्तगौणचान्द्रेण ऋतुसमा-प्तिरवगम्यते। तत् पौर्णमास्यन्तमासद्वये शरदादिपदस्य भाक्तत्वात्, न च वैपरीत्याशङ्का सङ्केतग्राहकशास्त्राभावात्। अनुवादकशास्त्रतः

प्रक्रियाद्यकग्राखानां बलीयस्त्वाच्च श्रुतेरपि स्मृतेर्दुर्बलत्वाच्चेति प्रक्षतमनुसरामः ।

अथ वैशाखकृत्यम् ।

भविष्ये,— तुलामकरमेषेषु प्रातः स्नानं विशेषतः ।

हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम् ॥

तुलादिराशुल्लेखेन विधानात् सौरमास एव प्रातःस्नानादित्रयं ब्रह्मचर्य्यं स्त्रीपरित्यागः, एषां त्रयाणां मिलितानामेवैतत्फलं न प्रत्येकस्य । तथाच कर्म्मविपाके वैशाखमाहात्म्ये ।

उपस्पृषसि वैशाखे ब्रह्मचर्य्ये व्यवस्थितः ।

राजन् मेषगते भानौ यस्मिन् कस्मिन् जलाशये ॥

यताहारः स्थितः स्नाहि सर्व्वपापैः प्रमुच्यसे ।

ब्रह्मचर्य्यैकभक्तेन मेषभानावुपस्थिते ॥

स्नाहि कूपोदकेनापि राजन् पापभयार्द्दितः ।

तत्रैव गङ्गास्नाने फलविशेषमाह ।

अङ्गिरा उवाच,—

गवामर्द्धप्रसूतानां लचं दत्वा तु यत् फलम् ।

तत्फलं प्राप्यते स्नात्वा राजन् मेषे च जाह्नवीम् ॥

तथा तत्रैव ब्राह्मणप्रेतसम्वादे ।

मेषभानौ च गङ्गायां कामतो वाऽप्यकामतः ।

मज्जन् मज्जति नापि नरः संसारसागरम् ॥

सखे स्नातोऽपि तस्यां त्वं तस्यैकाहस्य मे फलम् ।

देहि त्यक्त्वा इमं देहं प्राप्नोमि परमाङ्गतिम् ॥

क्वापि कठ्ठापौत्तयर्थः। अत्र कामतो वाऽप्यकामतः इत्यभिधानात् हविष्यं ब्रह्मचर्यं विनापि गङ्गास्नातः, स्नानमात्रस्य फलमिति दर्शितम्। वैशाखे केवलैकभक्तेन यत्फलं तदाह स्कन्दपुराणे,—

वैशाखं यः क्षिपेन्मासमेकभक्तेन वै नरः।
स याति श्रेष्ठतां लोके पूजितो धनवानपि॥

एतदपि सौरचान्द्रत्यम्।

मधूरं निम्बपत्राभ्यां योऽश्नाति मेषगते रवौ।
मेषस्थे च विधौ तस्य नास्त्येव विषजं भयम्॥

मेषरवौ मेषस्थे चन्द्रे चतुर्द्दश्यमावस्या प्रतिपदा भवेत्।

मत्स्यपुराणे,—

वैशाखे पुष्पलवणं वर्ज्जयित्वा तु गोप्रदः।
भूत्वा विष्णुपदं कल्पं स्थित्वा राजा भवेदिह॥

एतदपि सौरवैशाख एव पुष्पलवणमिति द्वन्द्वसमासात् समुदितवर्ज्जनस्य फलं, मासान्ते गोप्रदानं, विष्णुपदं विष्णुपुरम्। भविष्ये,— गन्धस्य माल्यानि तथा वैशाखे सुरभीणि च।

देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये॥

विष्णुधर्म्मे,—

तोयपानप्रदानेन वैशाखे सुखमश्नुते।
आतपत्रप्रदानाच्च स्वर्गलोके महीयते॥

एतदपि सौरवैशाख एव।

भारते,—

मीनकर्कटयोर्मध्ये गाढं तपति भानुमान्।

स्वर्णभारसमं तोयं पलमेकं युधिष्ठिर ॥
प्रपाः कार्य्याः प्रयत्नेन सर्व्वलोकहिताय वै ।

विष्णुपुराणे,—

कृत्तिकाप्रथमे भागे यदा भानुस्तथा शशी ।
विशाखायाश्चतुर्थांशे मुने तिष्ठत्यसंशयम् ॥
तदैव विषुवाख्योऽयं कालः पुण्योऽभिधीयते ।
दर्शदानस्तु विषुवे कृतकृत्योऽभिजायते ॥

सौरवैशाखशेषदिनचये रविः कृत्तिकाप्रथमपादे तिष्ठति तन्मध्ये विशाखाशेषपादे यदा चन्द्रावस्थानं तदा कृष्णप्रतिपदेवेति नियमः तदा विषुवाख्यो योगविशेषः कृतकृत्यता चाक्षयफललाभात् अक्षयत्वञ्च कल्पान्तस्थायित्वम् ।

ज्योतिषे,—

पञ्चाननस्थौ गुरुभूमिपुत्त्रौ
मेषे रविः स्याद्यदि शुक्लपक्षे ।
माघाभिधाना करभेण युक्ता
तिथि र्व्यतीपात इतीह योगः ॥
अस्मिंस्तु गोभूमिहिरण्यवस्त्र-
दानेन पापं परिहाय सर्व्वम् ।
सुरत्नमिन्द्रत्वमिलाधिपत्यं
लभेत् पुमान् दानवशात्तदैव ॥

पञ्चाननः सिंहः माघाभिधाना द्वादशीतिथिः। करभं हस्तानक्षत्रं इला पृथिवी ।

भविष्ये,—

वैशाखं यो घटं पूर्णं सभोज्यं वै दिजन्मने।

ददात्यक्षुत्का राजेन्द्र स याति परमां गतिम्॥

वैशाखं व्याप्य अत्यन्तसंयोगे द्वितीया प्रत्यहमित्यर्थः। पूर्णं शीतलजलपूर्णं एतच्च विषुवसंक्रान्तिमारभ्य परसंक्रान्तिपर्य्यन्तं प्रत्यहं कार्य्यमिति प्राञ्चः। आचारोऽपि तथाविध एव।

एवञ्च फलस्य माससाध्यत्वेन कर्मैक्यादिषुवसंक्रान्तावेकच संकल्पं कृत्वा,—

ॐ एष धर्म्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः।

अस्य प्रदानात् सफला मम सन्तु मनोरथाः॥

इति भविष्यपुराणोक्तमन्त्रेण प्रत्यहं सभोज्यं जलपूर्णघटं ब्राह्मणाय भोजनात् प्राक् दद्यात्। मासान्ते दक्षिणा देया। संकल्पस्त्वेवम्।

अद्यामुके मास्यमुके पक्षेऽमुकतिथौ रवेर्मेषविषुवसंक्रान्तावारभ्यापरसंक्रान्तिं यावत् प्रत्यहममुकगोत्रोऽमुकशर्म्माहं परमगतिप्राप्तिकामः सभोज्यं शीतलजलपूर्णं घटं यथागोत्रनाम्ने ब्राह्मणाय दास्ये इति।

वैशाखे शुक्लपक्षे यवश्राद्धमावश्यकं व्रीहियवपाकौ चेति नित्यप्रकरणे विष्णुपुराणवचनात्। तच "शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते" इति परिशिष्टवचनात् वसन्तनियमः।

तत्रापि,—

पौषे चैचे कृष्णपक्षे नवान्नं नाचरेद्बुधः।

पितरस्तस्य तृप्यन्ति दाता च नरकं व्रजेत् ॥

इति महार्णवप्रकाशलिखितविष्णुधर्मवचनात् मेषगतस्य सौर एव वसन्ते विधानात् अतोऽत्र तथैव मासद्वयात्मकत्वमिति प्रागेवोक्तम्। तथापि नन्दादिषु निषेधो यथा ज्योतिषे,—

नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मनि ।

अत्र श्राद्धं न कुर्व्वीत पुत्रदारधनक्षयात् ॥

त्रिषु जन्मताराखित्यर्थः ।

महाभारते,—

न प्रौष्ठपदयोः कार्य्यं तथाग्नेये च भारत ।

प्रौष्ठपदा भाद्रपदाद्वयं आग्नेयं कृत्तिका ।

ज्योतिषे,—

नक्षत्राणि तथैवात्र दारुणोग्राणि वर्ज्जयेत् ।

तथा,—

अश्लेषाद्रा तथा ज्येष्ठा मूला च दारुणः स्मृतः ।

पूर्व्वाणि त्रीणि भरणी मघा चोग्रगणो भवेत् ॥

अत्र केचित्,—

मेषादौ सक्तवो देया वारिपूर्णा च गर्म्मरी ।

तथा,—

सक्तून् शर्करया मिश्रान् दद्यात् सजलगर्म्मरीम् ॥

इत्यादिवचनदर्शनात् विषुवसंक्रान्त्यामेव यवप्राकश्राद्धमित्याहुः तदयुक्तं यवसक्तुषु प्रमाणाभावात् दद्यादिति दानविधानात् श्राद्धे प्रमाणाभावाच्च पुरावनयवसक्तुदानेनापि वचनोपपत्तेश्च। किन्तु

विषुवसंक्रान्तिः पूर्व्वोक्तनिषेधाविषयः स्यात् तदा तथापि यव-
पाकश्राद्धं निर्व्विवादमेव ।

यत्तु,— निरंश्ं दिवसं विष्टिं व्यतीपातञ्च वैधृतिम् ।
केन्द्रञ्चापि शुभैः शून्यं पापाढ्यमपि वर्ज्जयेत् ॥

इति वचनात् संक्रान्तौ श्राद्धनिषेध इत्याधुनिकैरुक्तं तदयुक्तं विवाहादीनि मङ्गलकर्म्माण्येवास्य निषेधस्य विषयाः न तु श्राद्धदानादि, मङ्गलकर्म्मोपक्रम्याभिधानात् । अन्यथा पापाढ्यविष्टिव्यतीपातादौ युगाद्यादिषु दानश्राद्धादिनिषेधप्रसङ्गः। प्रत्युत संक्रान्त्यादिषु श्राद्धदानादीनां महाफलं श्रूयते ।

यथा देवीपुराणे,—

संक्रान्त्यां यानि दत्तानि हव्यकव्यानि मानवैः ।
तानि तस्य ददात्यर्कः सप्तजन्म पुनः पुनः ॥
विषुवेषु च यज्जप्तं दत्तं भवति चाक्षयम् ।

तथा,—

शतमिन्दुक्षये दानं सहस्रन्तु दिनक्षये ।
विषुवे शतसाहस्रमाकामावेष्वनन्तकम् ॥

वैधृतिव्यतीपातावधिकृत्य सूर्य्यसिद्धान्ते,—

स्नानं दानं जपः श्राद्धमचानन्तगुणं भवेत् ।

किञ्च केन्द्रञ्चापि शुभैः शून्यमित्यनुरोधात् शुभलग्न एव नवान्नश्राद्धप्रसक्तेः पूर्व्वोक्तवर्ज्जनप्रसङ्गः ।

न च नवान्नभक्षणार्थं श्राद्धमिति वाच्यं श्राद्धस्य नित्यत्वात् ।

न तावाश्नौ नवाराच्च विना श्राद्धं कथञ्चन ।

इति श्राद्धं विनैव यवानामभक्ष्यत्वाभिधानात् तदन्यदिनेऽपि भक्ष्यत्वसिद्धेरित्यलं वक्तना । अथ यद्यक्षयतृतीया प्राग्भक्षनिषेधाविषयस्तदा तस्यां यवानां प्राशस्त्यं वक्ष्यमाणत्वात् तत्रैव यवश्राद्धं कार्य्यम् ।

तथा ब्रह्मपुराणे,—

वैशाखे शुक्लपक्षे तु तृतीयायां जनार्द्दन ।
यवानुत्पादयामास युगञ्चारब्धवान् कृतम् ।
ब्रह्मलोकात्त्रिपथगां पृथिव्यामवतारयत् ॥
तस्यां कार्य्यो यवैर्होमो यवैर्विष्णुं समर्च्चयेत् ।
श्रद्धया क्रियते तच्च तदानन्त्याय कल्पते ॥
सिन्धोस्तीरे विशेषेण सर्व्वमक्षयमुच्यते ॥

होमस्तायं विष्णुमुद्दिश्यैव अर्च्चासाहचर्य्यात् । सिन्धोः समुद्रस्य । अथ श्राद्धमक्षयनिमित्तं पृथगिति कश्चित् तन्मन्दं श्राद्धभेदे विधिगौरवापत्तेः प्राप्तश्राद्धस्यैव गुणफलविधित्वं न्याय्यं प्राप्तिस्तु यवपाकनिमित्तेन युगादित्वेन चेति ।

यथा ब्रह्मपुराणे,—

युगाद्येषु युगान्तेषु श्राद्धमक्षयमुच्यते ।

विष्णुपुराणे,—

वैशाखमासस्य तु या तृतीया
नवम्यसौ कार्त्तिकशुक्लपक्षे ।
नभस्यमासस्य तमिस्रपक्षे
त्रयोदशी पञ्चदशी च माघे ॥

एता युगाद्याः कथिताः पुराणै-
रनन्तपुण्यास्तिथयस्तथैताः ।
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः ॥
श्राद्धं कृतं तेन समाः सहस्रं
रहस्यमेतत् पितरो वदन्ति ॥

अत्र पञ्चदशीसामान्यश्रुतेर्विशेषाकाङ्क्षायां तमिस्रपक्षानुषङ्गाद्यौ-
चित्यान्माघे पञ्चदशी अमावस्या न तु पौर्णमासी अन्यथा चकार-
वैयर्थ्यात् ।

न च,—

वैशाखशुक्लपक्षे तु तृतीयायां कृतं युगम् ।
कार्त्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ॥
तथा भाद्रपदे कृष्णे त्रयोदश्यान्तु द्वापरम् ।
माघे तु पौर्णमास्यान्तु घोरं कलियुगं स्मृतम् ॥

इति ब्रह्मपुराणे विरोधान्न तमिस्रपक्ष[१] इति वाच्यम् । अग्नि-
पुराणादिवचनैकवाक्यतया अनुषङ्गस्यैव न्याय्यत्वात् ।

यथाग्निपुराणे,—

नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात् कृतम् ।
त्रेता सिततृतीयायां वैशाखे द्वापरं युगम् ॥
दर्शे तु माघमासस्य त्रयोदश्यां नभस्यके ।

---

१ ख पुस्तके, तमिस्रपक्षानुषङ्गः ।

कृष्णे कलिर्विनिर्दिष्टस्तथा मन्वन्तराद्यः ॥

निरगात् निःशेषेण प्राप्तमित्यर्थः ।

तथा वायुपुराणे,—

दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम् ।

कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः ॥

तथा ब्राह्मे,—

त्रयोदश्यां भाद्रपदे मासे चन्द्रक्षयेऽष्टमीति पूर्व्वमुक्तमेव ।

विष्णुधर्म्मोत्तरे,—

द्वे शुक्ले द्वे तथा कृष्णे युगाद्ये परिकीर्त्तिते ।

शुक्ले पूर्व्वाह्णिके ज्ञेये कृष्णे चैवापराह्णिके ॥

ब्रह्मपुराणवचनन्तु पाश्चात्याः माघे च पञ्चदश्यामितिति पठन्ति ।

अन्ये तु कल्पभेदेन व्यवस्थामाहुः । तन्मतेऽपि विष्णुपुराणे चकारस्य वैयर्थ्यभियाऽनुवक्ष्यमाणस्यैवावश्यकत्वात् वराहकल्पवृत्तान्तमधिकृत्य पराशर इत्यग्निपुराणात् विष्णुपुराणीयकल्पस्यैव[1] अस्मिन् वराहकल्पेऽनुष्ठानस्य न्याय्यत्वात् अनेकमुनिसम्मतत्वाच्चामावस्यैव युक्तेति । अतएव माघभाद्रमासौ पौर्णमास्यन्तावेव सर्व्वत्र तु तथैव तिथित्वाभिधानात् । युगाद्याश्राद्धन्तु पिण्डरहितमेव कार्य्यमिति संक्रान्तिप्रकरणे प्रागुक्तमस्ति ।

अथ यदि तदहरेव नवपाकनिमित्तं श्राद्धं क्रियते तदा तस्य युगाद्याश्राद्धस्य च न तन्त्रेणानुष्ठानं सपिण्डापिण्डयोर्वैषम्यात् किन्तु नित्येन पार्व्वणेन नवश्राद्धेन हीनाङ्गं युगाद्याश्राद्धमनुष्ठेयम्

१ ग, पक्षस्यैव अस्मिन् वर्त्तमाने वराहकल्पे ।

गतार्थं अतिप्रचयफलार्थिभिस्तु पृथगपीच्छया क्रियते। तत्रोभयदिने पूर्व्वाह्णे तृतीयालाभे।

युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वतीप्रिया।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता॥

इति देवीपुराणात् परदिने उदयगामिन्यामेव युगाद्याविहितं स्नानादिदैवकृत्यं जन्मतिथौ वर्षवृद्धिविहितमाचवत्, अक्षयतृतीया-विहितन्तु वक्ष्यमाणविष्णुपूजावारिदानादि युग्मादरात् कार्य्यं युगाद्यात्वेनाविधानात्।

श्राद्धन्तु यस्मिन् दिने पूर्व्वाह्णे श्राद्धयोग्यतृतीया लभ्यते तत्रैव निर्व्विवादम्।

शुक्लपक्षस्य पूर्व्वाह्णे श्राद्धं कुर्य्याद्विचक्षणः।
कृष्णपक्षापराह्णे तु रौहिणन्तु न लङ्घयेत्॥

इति वायुपुराणवचनात् उभयदिने पूर्व्वाह्णे श्राद्धयोग्यकाललाभे परदिन एवोदयगामिन्यां शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविरिति वचनात्।

विष्णुः,—वैशाखे शुक्लतृतीयायामुपोषितोऽक्षतैर्वासुदेवमभ्यर्च्य तानेव हुत्वा दत्त्वा च सर्व्वपापेभ्यः पूतो भवति। यच्च तस्मिन्नहनि प्रयच्छति तदक्षय्यमाप्नोति।

उपोषितो द्वितीयायामित्यर्थात् अक्षतैर्यवैः।

अक्षतास्तु यवाः प्रोक्ता भ्रष्टा धाना भवन्ति ते।
भ्रष्टास्तु व्रीहयो लाजास्तूर्णितास्ते च सक्तवः॥

इत्यभिधानकोषात्।

दुर्गां प्रकृत्य देवीपुराणे,—

तृतीयायान्तु वैशाखे रोहिण्यृक्षे प्रपूज्य च ।
उदकुम्भप्रदानेन ब्रह्मलोके महीयते ॥

तेन रोहिणीयुक्तायामक्षयतृतीयायां दुर्गापूजापूर्व्वककुम्भदानस्य ब्रह्मलोकमहितत्वं फलमित्यर्थः ।

तथा,—

इत्येषा कथिता राजन् तृतीया तिथिरुत्तमा ।
यामुपोष्य नरो भक्त्या वृद्धिमृद्धां श्रियं लभेत् ॥

विष्णुधर्म्मे,—

भक्ष्यभोज्यसमायुक्तां वर्द्धनीं यः प्रयच्छति ।
तृतीयायान्तु वैशाखे ब्रह्मलोके महीयते ॥

वर्द्धनी घटीत्यर्थाज्जलपूर्णा। भक्ष्यं मोदकादि भोज्यं शक्तुकादि ।

भविष्ये,—

वारिदानं प्रशस्तं स्यान्मोदकानाञ्च वै भवेत् ।
वैशाखे मासि राजेन्द्र तृतीयां चन्दनस्य च ॥
वारिणा तुष्यते देवी मोदकैर्भव एव च ।
दानात्तु चन्दनस्येह कञ्जजो नात्र संशयः ॥
यत्किञ्चिद्दीयते दानं स्वल्पं वा यदि वा बहु ।
तत्सर्व्वमक्षयं यस्मात्तेनाक्षावक्षया स्मृता ॥

तृतीयामिति कालकर्म्म, चन्दनस्य दानं प्रशस्तमित्यनुषङ्गः । कञ्जजो ब्रह्मा । एतेषु विष्णुभविष्यादिवचनेषु कृतकर्म्मणामक्षयत्वेन तृतीयामाचन्याक्षयश्रुतेर्नक्षत्रविशेषयोगः प्राशस्त्यार्थ एव ।

यथा,—

वैशाखे मासि राजेन्द्र शुक्लपक्षे तृतीयिका।
अक्षया सा तिथिः प्रोक्ता कृत्तिकारोहिणीयुता॥

यमः,—

वैशाखे शुक्लपक्षे तु तृतीयायां तिथौ सकृत्।
गङ्गातोये नरः स्नात्वा सर्व्वपापैः प्रमुच्यते॥

नरसिंहपुराणे,—

तथाक्षयतृतीयायां शिष्यं नाध्यापयेद् ध्रुवम्।
माघमासे तु सप्तम्यां रथ्यायाञ्च विवर्ज्जयेत्॥
अध्यापनं तथा त्यक्तः? स्नानकाले च वर्ज्जयेत्।

ब्रह्मपुराणे,—

वैशाखे शुक्लसप्तम्यां जाह्नवी जह्नुना पुरा।
क्रोधात् पीता पुनः त्यक्ता कर्णरन्ध्रात्तु दक्षिणात्।
तस्मात्तां पूजयेत्तत्र सर्व्वकामफलेच्छया॥

नारदीये,—

वैशाखे शुक्लपक्षे तु द्वादशी वैष्णवी तिथिः।
तस्यां शीतलतोयेन स्नापयेत् केशवं शुचिः॥

इयमेव पिपीतकद्वादशी।

अत्र तिथिद्वैधे युग्मादरात् पूर्व्वदिन एवैतत् व्रतं कार्य्यं एतच्चोपवासमन्तरेणापि कार्य्यम् अन्यथा द्वादशीक्षये व्रतस्योपापत्तेः, उपवासे तु फलातिशयः।

## अथ पिपीतकीव्रतविधिः।

प्रातः शुचिरावान्तो निवर्त्तितनित्यकृत्यः स्वस्ति वाच्य सङ्कल्पं कुर्य्यात्। ॐ अद्येत्यादि अमुकगोत्रोऽमुकशर्म्मा क्षुत्पिपासाजनकयम-लोकगतिपरित्यागपूर्वकविष्णुलोकप्राप्तिकामः श्रीविष्णुपूजापूर्वकम-त्यश्चयथाक्रमघृतपायसशर्करदधिमोदकतण्डुलसमेतवस्त्राच्छादितमा-ल्यालङ्कृतसुवासितशीतजलपूरितब्राह्मणसम्प्रदानकचतुरष्टादशघो-कुम्भकुम्भदानात्मकचतुर्वर्षसाध्यपिपीतकद्वादशीव्रतमहं करिष्ये। गन्ध-पुष्पाभ्यां करौ सम्मार्ज्य अस्त्राय फडिति तालत्रयदिग्बन्धनञ्च कृत्वा भूतशुद्धिप्राणायाममातृकान्यासान् विधाय कराङ्गन्यासौ कुर्य्यात्।

ॐ अङ्गुष्ठाभ्यां नमः नमस्तर्ज्जनीभ्यां स्वाहा भगवते मध्यमाभ्यां वषट् वासुदेवाय अनामिकाभ्यां हुं ॐ नमो भगवते वासुदेवाय कनिष्ठाभ्यां फट्। ॐ हृदयाय नमः, नमः शिरसे स्वाहा, भगवते शिखायै वषट्, वासुदेवाय कवचाय हुं ॐ नमो भगवते वासु-देवाय अस्त्राय फडिति तालत्रयं दिग्बन्धनञ्च कृत्वा भगवन्तं चिन्तयेत्।

विष्णुं शारदचन्द्रकोटिसदृशं शङ्खं रथाङ्गं गदा
मम्भोजं दधतं सिताब्जनिलयं कान्त्या जगन्मोहनम्।
आबद्धाङ्गदहारकुण्डलमहामौलिं स्फुरत्कङ्कणं
श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रैः स्तुतम्॥

ध्यात्वा मानसैरुपचारैरभ्यर्च्य सोऽहमिति विभाव्यात्मशिरसि पुष्पं दत्वा पूर्व्ववदर्घ्यस्थापनं कृत्वा सामान्यार्घ्यञ्च विधाय पाद्या-चमनीयपात्रञ्च स्थाप्यम्।

ततो घटे गणेशं पूजयेत्,—

सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं
दन्तं पाशाङ्कुशेष्टान्युरुकरविलसद्वीजपूराभिरामम्।
बालेन्दुद्योतिमौलिं करिपतिवदनं दानपूरार्द्रगण्डं
भोगीन्द्राबद्धभूषं भजत गणपतिं रक्तवस्त्राङ्गरागम्॥

इति ध्यात्वा मनसा सम्पूज्य ॐ गणानान्त्वा गणपतिमिति मन्त्रेण घटे आवाह्य गं गणपतये नम इति पाद्यादिभिः सम्पूज्य स्तुत्वा प्रणमेत्।

एकदन्तं महाकायं लम्बोदरगजाननम्।
विघ्ननाशकरं देवं हेरम्बं प्रणमाम्यहम्॥

ततः शालग्रामे घटे वा विष्णुं पूजयेत्। पूर्व्ववत् ध्यात्वा अष्टदिक्षु,— विमलायै उत्कर्षिण्यै ज्ञानायै क्रियायै योगायै प्रह्व्यै सत्यायै ईशानायै। मध्ये अनुग्रहायै नमः। ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वभूतात्मसंयोगयोगपद्मपीठात्मने नम इति पुष्पाञ्जलिना आसनं दत्वा पूर्व्ववद्ध्यात्वा।

ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः।
दिवीव चक्षुराततम्।

इति मन्त्रेणावाह्य द्वादशाक्षरमन्त्रेण मूर्त्तिं सङ्कल्प्य भगवन् श्रीवासुदेव इहागच्छागच्छ इह तिष्ठ तिष्ठ सन्निहितो भव सन्निरुद्धो भव आवाहनादिमुद्राः प्रदर्श्य द्वादशाक्षरमन्त्रेण पुष्पाञ्जलिं दत्वा तेनैव मन्त्रेण पाद्याचमनीयार्घ्यमधुपर्कपुनराचमनीयानि दत्वा जलपूर्णसुशीतलं सुवासितं स्नानार्थं भगवते

दत्त्वा पुनराचमनवस्त्रयज्ञोपवीतालङ्कारगन्धपुष्पधूपदीपनैवेद्यताम्बूलचन्दनादीनि दत्त्वा शङ्खघण्टादिभिस्तोषयेत्।

चतुर्दिक्षु,—

वासुदेवाय सङ्कर्षणाय प्रद्युम्नाय अनिरुद्धाय,

आग्नेयादिकोणेषु। शान्त्यै श्रियै सरस्वत्यै रत्यै नमः।

ततो द्वादशकेशरान् प्रणवादिनमोऽन्तेन पूजयेत्।

केशवाय नारायणाय माधवाय गोविन्दाय विष्णवे मधुसूदनाय त्रिविक्रमाय वामनाय श्रीधराय हृषीकेशाय पद्मनाभाय दामोदराय।

दिक्षु इन्द्रादिलोकपालेभ्यो नमः वज्राद्यायुधेभ्यो नमः।

ततो द्वादशाक्षरमन्त्रं किञ्चिज्जप्त्वा स्तुत्वा प्रणम्य कुम्भानुत्सृजेत्। सुवासितसुशीतजलपूर्णकुम्भान् एतत्सम्प्रदानब्राह्मणान् वरणाद्य समभ्यर्च्य ॐ अद्येत्यादि अमुकगोत्रोऽमुकशर्म्माहं क्षुत्पिपासाजनकयमलोकगतिपरित्यागपूर्व्वकविष्णुलोकप्राप्तिकाम एतान् वस्त्राच्छादितान् चन्दनचर्च्चितान् सुवासितसुशीतजलपूरितान् सजवणान् चतुरः कुम्भान् यथागोत्रनामभ्यो ब्राह्मणेभ्योऽहं सम्प्रददे। कृतैतज्जलपूर्णकुम्भदानकर्म्मणः प्रतिष्ठार्थं दक्षिणां काञ्चनं तन्मूल्यं वा सम्प्रददे। एवं ब्राह्मणेभ्यो दत्त्वा यथाशक्ति भोज्यान्यपि दद्यात्। एवं द्वितीयेऽब्देऽष्टौ कुम्भान् शर्करादधिसंयुतान् तृतीये द्वादशकुम्भान् मोदकयुक्तान् चतुर्थे षोड़शकुम्भान् तण्डुलयुक्तानिति।

अथ कथा।

ब्रह्मपुराणे शतानीक उवाच,—

अन्नदानस्य माहात्म्यं यत्त्वया कथितं पुरा।
तदहं श्रोतुमिच्छामि पिपीतककथां शुभाम्॥
पुरा केन कृता कस्मात् द्वादशी या पिपीतकी।
किम्वा विधानं देवर्षे कथयस्व विशेषतः॥

नारद उवाच,—

शृणु राजन् प्रवक्ष्यामि द्वादशीं तां पिपीतकीम्।
यां कृत्वा यमलोकात्तु स गतो वैष्णवं पुरम्॥
पिपीतक इति ख्यातो ब्राह्मणः संशितव्रतः।
चिरं तप्त्वा तपोऽरण्ये काले मृत्युमुपेयिवान्॥
यमदूतैः समागत्य नीयमानोऽथ स द्विजः।
ददृशे बहुलान् नारी नरान् निरयसंस्थितान्॥
असिपत्राद्यनेकेषु कुम्भीपाकेषु च स्थितान्।
कृतार्त्तरावांस्तान् दृष्ट्वा विषादमगमद्द्विजः॥
क्षुत्पिपासाकुलो भूत्वा यमदूतवशङ्गतः।
बहून् वस्त्रावृतान् कुम्भान् ददर्शातिमनोहरान्॥
प्रासादे स्थापितांस्तत्र पुष्पाद्यैरुपशोभितान्।
क्वचित् प्रधावमानांश्च किङ्करान् यमशासनैः॥
नीयमानांस्ततः प्रेतान् वध्यमानान् स्वकर्म्मभिः।
दृष्ट्वा भीतिसमायुक्तस्तृष्णया परिपीड़ितः॥
सन्दह्यमानो राजेन्द्र ययाचे किङ्करान् जलम्।
बहुशः सेव्यमानैस्तु किङ्करैरभिताड़ितः॥
मुहूर्त्तं तत्र संस्थाप्य नीयते किङ्करैः पुनः।

नीयमानोऽथ ददृशे वटशोभं क्रमोत्तमम् ॥
सच्छायं शीतलं रम्यं पुण्यं पिप्पलसंज्ञकम् ।
लम्बन्ते वटशस्तत्र कुम्भाः सन्दामबन्धनाः ॥
शीततोयेन सम्पूर्णाश्छादिताः शुक्लवाससा ।
रक्षन्ति वटवक्षांस्तु किङ्कराः शस्त्रपाणयः ॥
तोयदर्शनमात्रेण साह्लादः स द्विजोऽभवत् ।
विनयावनतो भूत्वा ययाचे किङ्करान् जलम् ॥
अपानभावाद्देहस्य विनाशो जायते मम ।
तस्मात्तोयप्रदानेन प्राणान् रक्षन्तु साधवः ॥
श्रुत्वा वाक्यन्तु विप्रस्य तमूचुर्यमकिङ्कराः ।
विष्णुव्रतमकृत्वा तु तोयमेतत् सुदुर्लभम् ॥
याचमानस्ततस्तोयं यमदूतैः स ताडितः ।
अत्यन्तार्त्तस्तु विप्रेन्द्रो नीतो वैवस्वतान्तिकम् ॥
कृतार्त्तरावं तं दृष्ट्वा यमः प्रोवाच सादरम्[१] ।
मा रोदीर्विप्र तद्ब्रूहि का ते पीड़ास्ति चेतसि ॥
स ययाचेऽथ तत्तोयं दृष्ट्वा व्याकुलचेतनः[२] ।
श्रुत्वा वाक्यन्तु विप्रस्य तमुवाचाथ धर्मराट् ॥
त्वया तत्र कृतं पूर्व्वं येनैतल्लभ्यते जलम् ।
यत्कृत्वा सुकृती मर्त्त्यो विष्णुलोकं गतः पुरा ॥

---

१ ख, ग, पुस्तकद्वये सान्त्वयन् ।
२ ख, ग पुस्तके तृषाव्याकुलचेतनः ।

वैष्णवस्त्वञ्च विप्रेन्द्र त्वया नैव प्रीयते ।
तत्तपो न कृतं पूर्व्वं येनैतल्लभ्यते ऽक्षयम् ॥

विप्र उवाच,—

उच्यतां मे व्रतं देव येन प्राप्नोमि तत्फलम् ।

यम उवाच,—

वैष्णवं तद्व्रतं विप्र कुरु गत्वा निजालयम् ।
विधानं शृणु धर्म्मज्ञ व्रतस्यास्य विशेषतः ॥
वैशाखे शुक्लपक्षस्य द्वादशी वैष्णवी तिथिः ।
तस्यां सुशीतलतोयैः स्नापयित्वा तु केशवम् ॥
पूजयेद्गन्धपुष्पैश्च धूपदीपैर्विधानतः ।
नैवेद्यैर्विविधैर्भक्ष्यैस्ताम्बूलैः शुक्लवाससा ।
जपित्वा वैष्णवं मन्त्रं दण्डवत् प्रणिपत्य च ॥
दद्याद्विप्रेभ्यः सम्पूज्य कुम्भांस्तोयेन पूरितान् ।
प्रथमे चतुरः कुम्भान् दद्यात् लवणसंयुतान् ॥
माल्यदामसमायुक्तान् सुसिक्त(?)जलपूरितान् ।
शुक्लवस्त्रावृतमुखानुपवीतसमन्वितान् ॥
द्वितीयेऽष्टौ तथा कुम्भान् शर्करादधिसंयुतान् ।
तृतीये द्वादशकुम्भान् तथा मोदकसंयुतान् ॥
चतुर्थे षोड़शकुम्भान् तण्डुलैश्च समन्वितान् ।
दद्यात् सम्पूज्य विप्रेन्द्र द्विजातिभ्यो निजाश्रमे ॥
दक्षिणां काञ्चनं दद्यात् कुर्य्याद्ब्राह्मणतोषणम् ।
अनेन विधिना त्वञ्च प्रयासि वैष्णवं पदम् ॥

यः करोति व्रतं चैतच्च भवेत् स कृपाकुलः ।
यमवाक्यं समाकर्ण्य गत्वा सोऽथ निजाश्रमम् ॥
चकार द्वादशीं विष्णोरगमद्वैष्णवं पुरम् ।
पिपीतकस्य नाम्ना तु विख्याता वैष्णवी तिथिः ॥
यः कुर्य्याच्च नरो भक्त्या नारी वा व्रतमुत्तमम् ।
प्रयाति परमं स्थानं वासुदेवस्य निश्चितम् ॥

ततो देवं प्रणम्य समाप्य विसृज्य दक्षिणां दत्वा ब्राह्मणैः सह पारणं कुर्य्यात् । इति पिपीतकद्वादशीव्रतविधिः ॥ * ॥

महाभारते,—

वैशाख्यां पौर्णमास्यान्तु तिला देया द्विजातिषु ।
तिला भक्षयितव्याश्च तथैवालभनं तिलैः ॥
कार्य्यं सततमिच्छद्भिः श्रेयः सर्व्वात्मना गृहे ।
आलभनमुद्वर्त्तनम् ।

ब्रह्मपुराणे,—

वैशाख्यां पौर्णमास्यान्तु सृष्टाः कमलयोनिना ।
कृष्णा गौराश्च तिलास्तृप्तये सर्व्वदेहिनाम् ॥
तस्मात् कार्य्यं तिलैः स्नानं कर्त्तव्यं तिलतर्पणम् ।
तिलानग्नौ च जुहुयाद्विष्णवे तान् निवेदयेत् ॥
तिलतैलेन देयाश्च दीपा देवेभ्य एव हि ।
तिलैः समधुभिर्युक्तं ब्राह्मणेभ्यश्च भोजनम् ॥
मन्त्रं जपेच्च पौराणं पारम्पर्य्यक्रमागतम् ।
तिलाश्च सोमदैवत्या सुरैः सृष्टाश्च गोसवे ॥

स्वर्गप्रदाः स्वतन्त्राश्च ते मां रक्षन्तु नित्यशः।
दातव्या दक्षिणा तेभ्यस्तिलैर्मधुयुतैः पुनः॥
एवं कृते च मुक्तः स्यात् पापैर्जन्मशतोद्भवैः।
मन्त्रजपस्तु ब्राह्मणभोजनसमये। मन्त्रमाह तिलास्त्विति॥

यमः,—

वैशाख्यां पौर्णमास्यान्तु ब्राह्मणान् पञ्च सप्त वा।
क्षौद्रयुक्तैस्तिलैः कृष्णैराशयेद्यदि वेतरैः॥
प्रीयतां धर्मराजेति यद्वा मनसि राजते।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति॥

इतरैः शुक्लैः धर्मराजः प्रीयतां श्रीविष्णुः प्रीयतामिति वोक्ता पञ्च सप्त ब्राह्मणान् कृष्णैः शुक्लैर्वा तिलैर्मधुमिश्रैर्भोजयेत्।

वैशाखीमुपक्रम्य जावालः—

सुवर्णतिलयुक्तैश्च ब्राह्मणान् पञ्च सप्त वा।
तर्पयेद्ब्रह्मपातैस्तु ब्रह्महत्यां व्यपोहति॥

विष्णुधर्म्मे,—

मोदकानुदकुम्भांश्च दत्वाऽक्षयचिताक्षरः।
वैशाखे पौर्णमास्यान्तु ब्रह्मलोके महीयते॥
धान्यमन्नं तथा शाकं हिरण्यं गां तिलानपि।
दानं श्रेयस्करश्चात्र स्त्रीणाञ्च पुरुषस्य च॥

अथ ज्यैष्ठकृत्यम्।

विष्णुधर्म्मे,—

वृषसंक्रमणे दानं गवां पुष्टं महाफलम्।

वामनपुराणे,—

उदकुम्भश्च धेनुश्च तालवृन्तं सचन्दनम् ।
त्रिविक्रमस्य प्रीत्यर्थं दातव्यं साधुभिः सह ॥
ज्यैष्ठे मासि विशेषेण यदिच्छेद्वैष्णवं पदम् ।

महाभारते,—

निदाघकाले पानीयं यस्य तिष्ठत्यवारितम् ।
स दुर्गं विषमं कृच्छ्रं न कदाचिदवाप्नुयात् ॥
छत्रं चोपानहौ दत्वा ज्यैष्ठे मासि द्विजोत्तमाः ।
अक्षयं फलमाप्नोति स्वर्गलोकञ्च गच्छति ॥
छत्रादिदानं चैत्रज्यैष्ठकृत्यं निदाघप्रक्रमात् ।

भविष्ये,—

ज्यैष्ठे मासि द्विजश्रेष्ठ कृष्णाष्टम्यां त्रिलोचनम् ।
यः पूजयति देवेशमीशलोकं स गच्छति ॥

अत्र च यावन्ति तिथिकृत्यानि तानि सर्व्वाणि कृष्णप्रतिपदादि-पौर्णमास्यन्तमासव्यवस्थया कार्य्याणि ब्रह्मपुराणादौ तथैव प्रक्रमात् ।

---

अथ सावित्रीचतुर्द्दशी ।

राजमार्त्तण्डे,—

ज्यैष्ठेऽसितचतुर्द्दश्यां सावित्रीव्रतमुत्तमम् ।
अवैधव्याय कुर्व्वन्ति स्त्रियः श्रद्धासमन्विताः ॥
ज्यैष्ठे कृष्णचतुर्द्दश्यां सावित्रीमर्च्चयन्ति याः ।
वटमूले सोपवासा न ताः वैधव्यमाप्नुयुः ॥

एतच्च व्रतं सन्ध्यायामारभ्य प्रदोषे कर्त्तव्यम्।

यथा भविष्ये,—

ज्येष्ठकृष्णचतुर्द्दश्यामुपवासपरा सती।

सन्ध्यायामर्च्चयेद्देवीं सावित्रीं देवमातरम्॥

सत्यवन्तं च सावित्रीं वटमूले तथा यमम्।

एवमेतद्व्रतं कृत्वा वर्षाणि च चतुर्द्दश॥

अवैधव्यमवाप्नोति पुत्रांश्च चिरजीविनः।

अत्रएव वचनात् गायत्रीदैवतमिदं व्रतं सावित्रीपूजानन्तरं पृथक् सत्यवत्सावित्र्योः पूजाविधानात् तस्मादत्र यस्मिन् दिने सन्ध्याकाले चतुर्द्दशी लभ्यते तत्रैव व्रतम्।

एतन्मूलकमेव नारदवचनम्,—

दिवाभागे त्रयोदश्यां यदा चतुर्द्दशी भवेत्।

तत्र पूज्या महासाध्वी देवी सत्यवता सह॥

उभयदिने तु सन्ध्यायां चतुर्द्दश्या लाभे अलाभे वा परदिन एव चतुर्द्दश्यामारभ्यामावास्यायां समाप्यम्।

यथा स्कन्दपुराणे,—

भूतविद्धाप्यमावास्या न कर्त्तव्या कदाचन।

वर्ज्जयित्वा तु सावित्रीव्रतन्तु शिखिवाहन॥

शिवपुराणे,—

शिवा घोरा तथा प्रेता सावित्री च चतुर्द्दशी।

कृष्णपक्षेव कर्त्तव्या कृष्णामेव हि पारणम्॥

पारणमपि पक्षेनैव कार्य्यम्।

पराशरः,—

सावित्रीमर्च्चयित्वा तु फलाहारा परेऽहनि ।
ततश्चाविधवा नारी चिरभोगान् लभेत सः ॥

यत्तु संवत्सरप्रदीपे भविष्योत्तरनाम्ना वचनं लिखित्वा त्रयोदशीमारभ्योपवासत्रयममावास्यायाञ्च व्रतं कार्य्यमित्युक्तं। तच्चिन्त्यं पूर्व्वोक्तानेकवचनविरोधात्, भविष्योत्तरवचनन्तु यदि साकरं स्यात् तदा सावित्रीप्रतिमादानविषयं न तु व्रतविषयं तथैवोपसंहारात् । उपवासत्रयमपि तत्रैव। यथा भविष्योत्तरे,—

पञ्चदश्यां तथा ज्यैष्ठे वटमूले महासती ।
त्रिरात्रोपोषिता नारी विधानेन प्रपूजयेत् ॥
अशक्ता तु त्रयोदश्यां नक्तं कुर्य्याज्जितेन्द्रिया ।
अयाचितं चतुर्द्दश्याममावस्यामुपोषणम् ॥
तत्र वंशमये पात्रे वस्त्रयुग्मेन वेष्टिते ।
सावित्रीप्रतिमां कृत्वा सर्व्वावयवशोभिनीम् ॥
सौवर्णीं राजतीं वापि यथाशक्तिविनिर्म्मिताम् ।
पूजयित्वा विधानेन प्रभाते विमले शुभे ॥
प्रतिमां ब्राह्मणे दत्वा प्रणिपत्य क्षमापयेत् ।
एवं दत्वा द्विजेन्द्राय सावित्रीं तां युधिष्ठिर ॥
अवैधव्यमवाप्नोति सावित्रीतुल्यसन्ततिः ।

अथाचारात् सावित्रीव्रतविधिर्लिख्यते ।

वटमूले गोमयेनोपलिप्ते प्राङ्मुख उदङ्मुखो वा उपविश्य सायंसन्ध्यायां स्वस्ति वाच्य सङ्कल्पं कुर्य्यात्। ॐ अद्येत्यादि अमु-

कगोचा अमुकदेवी अवैधव्यकामा श्रीसावित्रीपूजापूर्व्वकसत्यवत्सावित्रीयमपूजासावित्र्युपाख्यानश्रवणात्मकचतुर्द्दशवर्षसमाप्य सावित्रीचतुर्द्दशीव्रतमहं करिष्ये इति सङ्कल्प्य भूतशुद्धिं कृत्वा सामान्यार्घ्यं विधाय वटमूले घटं स्थापयित्वा तत्र गणेशं यथाविधि सम्पूज्य कराङ्गन्यासौ कुर्य्यात्।

सां अङ्गुष्ठाभ्यां नमः सीं तर्ज्जनीभ्यां स्वाहा सूं मध्यमाभ्यां वषट् सैं अनामिकाभ्यां हुं सौं कनिष्ठाभ्यां वौषट् सः करतलपृष्ठाभ्यां फट्। सां हृदयाय नमः सीं शिरसे स्वाहा सूं शिखायै वषट् सैं कवचाय हुं सौं नेत्रत्रयाय वौषट् सः अस्त्राय फट् इति तालत्रयं दिग्बन्धनञ्च कृत्वा सावित्रीं ध्यायेत्।

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैः
युक्तामिन्दुनिबद्धरत्नमुकुटां पूर्णेन्दुकोटिप्रभाम्।
सावित्रीं वरदाङ्कुशाभयकरां पाशं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे॥

इति ध्यात्वा मानसोपचारैरभ्यर्च्यार्घ्यस्थापनं कृत्वा पुनर्देवीं ध्यात्वा घटे आवाहयेत्।

भगवति सावित्रि देवि इहागच्छागच्छ तिष्ठ तिष्ठ सन्निहिता भव सन्निरुद्धा भव इत्यावाहन्यादिकाः पञ्च मुद्राः प्रदर्श्य सावित्र्यै नम इति मन्त्रेण पाद्यार्घ्याचमनीयमधुपर्काचमनपुनराचमनस्नानीयवस्त्रालङ्कारगन्धपुष्पधूपदीपनैवेद्यैः सम्पूज्य प्रणमेत्।

ब्रह्मा विष्णुश्च रुद्रश्च त्रिसन्ध्यं त्वामुपासते।
ब्रह्मर्षयो मरीच्याद्यास्तथा देवर्षयोऽपि च॥

यथोरूपासि देवि त्वं रजःसत्वतमोमयी ।
विष्णुब्रह्मेशरूपाऽसि वेदमातर्नमोऽस्तु ते ॥

ततस्तत्रैव सावित्रीं सत्यवन्तञ्चावाह्य सत्यवत्सावित्रीभ्यां नम इत्यादिभिरुपचारैर्विधिवतोऽर्च्चयेत् । ततो यममावाह्य यमाय नम इति पञ्चोपचारैरभ्यर्च्च्य प्रणमेत् ।

यमस्त्वं पितृलोकानां शास्ता वै कर्म्मणा नृणाम् ।
फलदः सर्व्वभूतानां यमोऽसि वरदो भव ॥

इति पुष्पाञ्जलिं दद्यात् । ततो वटवृक्षं पुष्पाञ्जलिना पूजयेत् ।

वटोऽसि वृक्षनाथस्त्वं ख्यातो हरिहरात्मकः ।
भवतु त्वत्प्रसादेन*व्रतं मे सफलं विभो ॥

वटवृक्षाय नमः । ततः सावित्र्युपाख्यानं शृणुयात् ।

भविष्यपुराणे सुमन्तुरुवाच,—

वनवासगतो राजा धर्म्मपुत्रो युधिष्ठिरः ।
भ्रातृभिः सहितः सर्व्वैर्द्रौपद्या च समन्वितः ॥
मार्कण्डेयं महात्मानं मुनिं धर्म्मभृतां वरम् ।
पप्रच्छ राजशार्दूलो विनयावनतः स्थितः ॥

युधिष्ठिर उवाच,—

भगवन् चिरजीवी त्वं दृष्टलोकपरापरः ।
दृष्टपूर्व्वा त्वया काचित् कचिदेवं पतिव्रता ॥
स्वयं प्राप्य महद्‌दुःखं भर्त्तुरुद्धारकारिणी ।
यथेयं द्रौपदी कृष्णातनुः शंसितुमर्हति ॥
एवमुक्तो नृपेणाथ मार्कण्डेयो महातपाः ।

कथां स कथयामास धर्म्मराजाय धीमते ॥

मार्कण्डेय उवाच,—

मद्रदेशे महाराज बभूवाश्वपतिर्नृपः।
ब्रह्मण्यः शीलसम्पन्नः प्रजापालनतत्परः॥
अभूत्तस्य महादेवी मालवी नाम सुन्दरी।
पतिव्रता महाभागा शीलाचारसमन्विता॥
अनपत्यः स राजर्षिः सावित्रीं समपूजयत्।
षष्ठे षष्ठे तदा काले बभूव मितभोजनः॥
एतेन नियमेनासन् वर्षाण्यष्टादशैव तु।
सावित्र्या हुतवानग्निं पुत्रकामो महामनाः॥
अथाग्निहोत्रे सावित्री तस्य प्रत्यक्षतां गता।
वरं ददौ नृपश्रेष्ठ कन्या तव भविष्यति॥
वंशस्थितिकरी भूयो न वक्तव्यं त्वया वचः।
इत्युक्त्वान्तर्हिता देवी सावित्री नृपसत्तम॥
अथ सा मालवी राज्ञो महिष्यश्वपतेर्नृप।
असूत कन्यां संयुक्तां सर्व्वैर्लोकसुन्दरीम्॥
सावित्र्या वरदानेन यस्माज्जातेयमुत्तमा।
सावित्रीति ततस्तस्या नाम चक्रे पिता नृप॥
अथ सा राजभवने ववृधे रूपसान्विता।
अतीतशैशवा राजन् बभूवाद्भुतदर्शना॥
न च तां वरयामास कश्चिदागत्य भूपतिः[१]।

१ ग, भूमिपः।

राजा च चिन्तयाविष्टो दुहितुर्वरकारणात् ॥
अथ सा पितुराज्ञातो रथमारुह्य शोभनम् ।
ययौ तपोवनं रम्यं वृद्धामात्यैरधिष्ठिता ॥
ततो वनानि रम्याणि सा बभ्राम मनोरमा ।
नानातपस्विनस्तत्र ददर्श विपुलेक्षणा ॥
वानप्रस्थान् बहुविधान् राजर्षीन् संशितव्रतान् ।
तत्र शाल्वपतेः पुत्रं द्युमत्सेनस्य भूपतेः ॥
मनसा वरयामास सत्यवन्तं स्वकं पतिम् ।
अथाजगाम नगरं सा पितुः पितृनन्दिनी ॥
तस्मिन् काले मद्रपतिर्नारदेन समागतः ।
अथ तं परिपप्रच्छ देवर्षिर्नारदो नृपम् ॥
क्वेयं कुत्र गता वेति तमथ प्रावदन्नृपः ।

राजोवाच,—

देवर्षे मम कन्येयं सावित्री नामतः श्रुता ।
ममैवानुज्ञया याता तपोवनमनिन्दिता ॥
स्वयम्बरं वरयितुं तदस्याः श्रूयतां वरः ।
एतया योऽभिलषितः स कः कीदृग्गुणाश्रयः ॥
अथ सा नारदेनोक्ता मनसाभिमतं वरम् ।
कथयामास मुनये पित्रे च विनयान्विता ॥

सावित्र्युवाच,—

आसीच्छाल्वेषु धर्मात्मा द्युमत्सेनाह्वयो नृपः ।
स समीपगतै राजा भूमिपालैः पराजितः ॥

वनं जगामानुगतः पत्न्या बालसुतेन च ।
तपश्चभिरतश्चाथ तस्य पुत्रो गुणाकरः ॥
सत्यवान् नाम देवर्षे मनसा स वृतो मया ।
तच्छ्रुत्वा दुहितुर्वाक्यं नृपः प्रोवाच नारदम् ॥

राजोवाच,—

भगवन् के गुणास्तस्य के वा दोषा भवन्ति हि ।
एतत् सर्व्वमशेषेण कथयस्व मुने मम ॥

नारद उवाच,—

महात्मा सत्यवान् कान्तो शीलवान् प्रियदर्शनः ।
मातापितृहिते युक्तः पण्डितः शूरसत्तमः ॥
आचारयुक्तः सुमनाः सत्यवादी दृढव्रतः ।
एते चान्ये च बहवो गुणाः सत्यवति प्रभो ॥
दोषस्त्वेको महांस्तस्य गुणानाक्रम्य तिष्ठति ।
अद्य प्रभृति राजेन्द्र वर्षमेकं स सत्यवान् ॥
जीविष्यति ततस्तस्यायुषस्तस्य हानिर्भविष्यति ।
तस्माद्विद्या न विहितं भद्रमेतत् कथञ्चन ॥
अन्यं वरं वरयतु सावित्री नृपतेः सुतम् ।
एतच्छ्रुत्वाऽथ सावित्री प्रत्युवाच शुभानना ॥
सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥
दीर्घायुरथवाल्पायुः सगुणो निर्गुणोऽपि वा ।
सकृद्वृतो मया भर्त्ता न द्वितीयं वृणोम्यहम् ।

मनसा निश्चयं कृत्वा ततो वाचाऽभिधीयते ।
क्रियते कर्म्मणा पश्चात् प्रमाणं मनसस्ततः ।

नारद उवाच,—

स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव ।
नैषा वारयितुं शक्या धर्म्मादस्मात् कथञ्चन ॥
नान्यस्मिन् पुरुषे सन्ति ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव ॥

मार्कण्डेय उवाच,—

एवमुक्त्वा समुत्पत्य नारदस्त्रिदिवङ्गतः ।
राजापि दुहितुः सर्व्वं वैवाहिकमकारयत् ॥
ततोऽस्या निश्चयं बुद्ध्वा स राजाऽश्वपतिस्तदा ।
रथमारोप्य तां कन्यां प्रययौ सपुरोहितः ॥
तपोवनं मुनिजनैराहृतं कृतसम्भृतिः ।
अथ सोऽश्वपतिर्गत्वा द्युमत्सेनं महीपतिम् ॥
उवाच नृपते कन्या ममेयं वरवर्णिनी ।
भवत्सुतं सत्यवन्तं वरयामास चेतसा ॥
स त्वमेतां स्नुषां राजन् स्नुषाणोपाहृतां[1] मया ।

द्युमत्सेन उवाच,—

च्युताः स्म राज्यात् वनमाश्रिता-
श्चराम धर्म्मं नियतास्तपस्विनः ।

---

१ ख, उपहृतां ।

कथन्त्वनर्हा वनवासमाश्रमे
निवत्स्यते क्लेशमिमं सुता तव ॥

अश्वपतिरुवाच,—

अनुरूपोऽसि पुत्रस्य त्वं ममाहं तवापि च ।
स्नुषां प्रतीच्छ मत्कन्यां भार्य्यां सत्यवतः सतः ॥

द्युमत्सेन उवाच,—

पूर्व्वमेवाभिलषितः सम्बन्धो मे त्वया सह ।
भ्रष्टराज्यस्त्वहमिति तत एतद्विचारितम् ॥
अभिप्रायस्त्वयं यो मे पूर्व्वमेवाभिकाङ्क्षितः ।
स निवर्त्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः ॥
ततः सर्व्वान् समानाय्य द्विजानाश्रमवासिनः ।
यथाविधिसमुद्वाहं कारयामासतुर्नृपौ ॥
दत्वा सोऽश्वपतिः कन्यां यथार्हं सपरिच्छदाम् ।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥
गते पितरि सर्व्वाणि सन्न्यस्याभरणानि च ।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥
अथ सा राजतनया सावित्री विनयान्विता ।
श्वश्रूश्वशुरयोः सेवां भर्त्तुरप्यकरोत्तदा ॥
भक्त्या परमया नित्यं श्वश्रूश्वशुरयोस्ततः ।
भर्त्तुश्च दयिता साध्वी तापसानाञ्च सम्मता ॥
ततः सा नारदवचो धारयन्ती सुचेतसा ।
गणयामास दिवसान् पक्षं मासं तथान्तरम् ॥

ततस्त्रिरात्रमात्रे तु तस्मिन् संवत्सरे स्थिते ।
श्वश्रूश्वशुरयोः पत्युराज्ञां जग्राह सा सती ॥
कर्त्तुं व्रतं त्रिरात्राख्यमुपवाससमन्विता ।
अथ तस्मिन् दिने प्राप्ते नारदेन निवेदिते ॥
सत्यवान् विपिनं गन्तुमुपक्रममथाकरोत् ।
स्कन्धे परशुमादाय हस्ते कृत्वा करण्डिकाम् ॥
फलं काष्ठमथादातुं विज्ञाप्य पितरौ तदा ।
सावित्री चोदिते सूर्य्ये कृत्वा पूर्व्वाह्णिकीः क्रियाः ॥
सर्व्वानेव द्विजान् वृद्धान् श्वश्रुं श्वशुरमेव च ।
अभिवाद्यानुपूर्व्वेण प्राञ्जलिर्निभृतस्थिता ॥
अवैधव्याशिषस्तेषां जग्राह विनयान्विता ।
श्वशुरावथ सावित्री जगादैकान्तमाश्रिता ॥
विपिनं द्रष्टुमिच्छामि सह भर्त्रा कुतूहलात् ।
तामूचतुस्तौ श्वशुरौ पारणादिवसस्तव ॥
अकृत्वा तां कथं गन्तुं वनमिच्छसि शोभने ।

सावित्र्युवाच,—

अस्तङ्गते मयादित्ये भोक्तव्यं कृतकामया ।
एष मे हृदि सङ्कल्पः समयश्च कृतो मया ॥
भर्त्रा सहैव भोक्तव्यं मया परमया मुदा ।
न पत्युः सन्निधौ क्लान्तिर्मम काचन विद्यते ॥
ततोऽनुज्ञां प्रददतुस्तस्यै तौ श्वशुरौ तदा ।
जगाम सत्यवान् सोऽपि विपिनं सह भार्य्यया ॥

गत्वा तत्र फलैर्वन्यैः स करण्डीमपूरयत् ।
अथ काष्ठं कुठारेण पाटयामास सत्यवान् ॥
तस्य पाटयतः काष्ठं मध्याह्ने महती व्यथा ।
मूर्ध्नि जातः ततः सोऽथ सुष्वाप नृपनन्दनः ॥
सावित्र्या उत्सदेशे तु सन्निवेश्य शिरस्तथा ।
अथ सा नारदवचो ध्यायन्ती दैवतानि च ॥
जगाम शरणं साध्वी भर्त्तुर्जीवितकाङ्क्षया ।
अथ सा पाशहस्तस्य कृष्णं रक्तेक्षणं यमम् ॥
ददर्श सत्यवत्पार्श्वे स्थितं विपुलतेजसम् ।
ततः सत्यवतस्तस्य राजपुत्रस्य वेपतः ॥
अङ्गुष्ठमात्रं पुरुषं निराकर्ष यमो बलात् ।
यमस्तु तं तदा बध्वा प्रयातो दक्षिणामुखः ॥
तदानीं सापि सावित्री सम्भ्रमाक्रान्तमानसा ।
शनैः शरीरं तद्भर्त्तुर्मृतं भूमावशाययत् ॥
विनयावनता भूत्वा प्राञ्जलिर्यममन्वगात् ।
यत्र पाशेन बद्धा तं पतिं तस्या यमोऽनयत् ॥

यम उवाच,—

त्वं निवर्त्तस्व सावित्री कुरु स्वाम्यौर्द्धदेहिकम् ।
कृतं भर्त्तुस्त्वया नूनं यावद्गम्यं गतं त्वया ॥

सावित्र्युवाच,—

यत्र मे नीयते भर्त्ता स्वयं वा यत्र गच्छति ।
मया च तत्र गन्तव्यमेष धर्म्मः सनातनः ॥

तपसा गुरुभक्त्या च भर्त्तुः स्नेहाद् व्रतेन च ॥
तव चैव प्रसादेन न मे प्रतिहता गतिः ।
धर्म्मं[१] प्रधानं मुनयो वदन्ति
धर्म्माधिपं त्वामपि चामनन्ति ।
सर्व्वस्य लोकस्य कृतस्य वेत्सि
सर्व्वे ततस्त्वां शरणं प्रपन्नाः ॥

यम उवाच,—

वरं वरय सुश्रोणि सत्यवज्जीवनादृते ।

साविच्युवाच,—

ममान्धौ श्वशुरौ देव तपोवनमुपागतौ ।
सचक्षुषौ भवेतां तौ त्वत्प्रसादेन सूर्य्यज ॥

यम उवाच,—

एवमस्तु निवर्त्तस्व गच्छ श्वशुरयोर्गृहम् ।
श्रमस्त्वा मास्पृशद्भद्रे त्वां ग्लानामिव लक्षये ॥

साविच्युवाच,—

श्रमः कुतो भर्त्तृसमीपतो मे
यतो हि भर्त्ता मम सा गतिर्ध्रुवा ।
यतः पतिं नेष्यसि तत्र मे गति
र्देवेश भूयोऽपि वचो निबोध मे ॥
सतां सकृत् सङ्गतमीप्सितं वरं
ततः परं मित्रमिति प्रचक्षते ।

---

१ ख, ग, धर्म्मप्रधानं ।

न चाऽप्यर्थं सत्पुरुषेषु यन्ति
ततः सतां सन्निवसेत् समागमे ॥

यम उवाच,—

तुष्टोऽस्मि तेऽनया वाचा वरं वरय सुव्रते ।
ऋते सत्यवतो जीवाद्यदिच्छसि ददामि तत् ॥

सावित्र्युवाच,—

हृतं पुरा मे श्वशुरस्य वैरिभिः
स्वमेव राज्यं लभतां स पार्थिवः ।
जह्यात् स्वधर्म्मं न च मे गुरुर्यथा
द्वितीयमेतद्वरयामि ते वरम् ॥

यम उवाच,—

एवमस्तु निवर्त्तस्व त्वं सावित्रि स्वमन्दिरम् ।

सावित्र्युवाच,—

अद्रोहः सर्व्वभूतेषु कर्म्मणा मनसा गिरा[1] ।
अनुग्रहश्च दानञ्च सतां धर्म्मः सनातनः ।
सन्तस्ततोऽप्यमित्रेषु दयां प्राप्तेषु कुर्व्वते ॥

यम उवाच,—

जीवनेन विना भर्त्तुर्वरं वृणुष्व शोभने ।
तृतीयं ते वरं भद्रे ददामि प्रीतिमान् पुनः ॥

सावित्र्युवाच,—

पुत्रहीनो मम पिता तस्य पुत्रशतं भवेत् ।

---

१ क, मनसापि वा ।

यम उवाच,—

कुलस्य सन्तानकरं पितुः पुत्रशतं भवेत् ।
त्वं निवर्त्तस्व सावित्रि दूरं पन्थानमागता ॥

सावित्र्युवाच,—

विवस्वतस्त्वं तनयः प्रतापवान्
ततोऽथ वैवस्वत उच्यसे बुधैः ।
समेन धर्म्मेण च रञ्जिताः प्रजाः
ततस्तवाहेश्वर धर्म्मराजता ॥

आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः ।
तस्मात् सत्सु विशेषेण सर्व्वः प्रणयमिच्छति ॥

यम उवाच,—

परितुष्टोऽस्मि भद्रन्ते चतुर्थं त्वं वरं वृणु ।
विना सत्यवतः प्राणान् यदिच्छसि ददामि तत् ॥

सावित्र्युवाच,—

मम सत्यवतः पुत्रशतमौरससुत्तमम् ।
जायतां मयि देवेश त्वत्प्रसादेन सूर्य्यज ॥

यम उवाच,—

भविष्यत्येवमेवं हि परितुष्टो ददामि तत् ।
अतिदूरं समायाता निवर्त्तस्व स्वमन्दिरम् ॥

सावित्र्युवाच,—

सतां सदा शाश्वतधर्म्मवृत्तिः
सन्तो न सीदन्ति न च व्यथन्ति ।

सतां सद्भिर्नाफलः सङ्गमोऽस्ति
सद्भ्यो भयं नानुविन्दन्ति सन्तः ॥
सन्तो हि सत्येन नयन्ति सूर्य्यं
सन्तो भूमिं तपसा धारयन्ति ।
सन्तो गतिर्भूतभव्यस्य राजन्
सतां मध्ये नावसीदन्ति सन्तः ॥
न कामये भर्त्तृविनाकृता सुखं
न भर्त्तृहीना व्यवसामि जीवितुम् ।
त्वयैष दत्तः शतपुत्रतावरः
कथं त्वया मे ह्रियते पतिः पुनः ॥
वरं वृणे जीवतु सत्यवानयं
त्वमेव सत्यं वचनं कुरुष्व ॥

मार्कण्डेय उवाच,—

एवमुक्तस्तु सन्तोषो[१] यमः पाशादमोचयत् ।
अङ्गुष्ठमात्रं पुरुषं सत्यवद्देहनिःसृतम् ॥
धर्म्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ।
एष भद्रे मया मुक्तो भर्त्ता ते कुलनन्दिनि ॥
चतुर्वर्षशतायुश्च त्वया सार्द्धमवाप्स्यति ।
इष्ट्वा यज्ञैश्च धर्म्मेण ख्यातिं लोके गमिष्यति ॥
त्वयि पुत्रशतञ्चैव सत्यवान् जनयिष्यति ।
एवं तस्यै वरं दत्वा धर्म्मराजः प्रतापवान् ॥

---

१ ग, ख प्रीतः ।

निवर्त्तयित्वा सावित्रीं स्वमेव भवनं ययौ ।
सावित्र्यपि जगामाशु यत्र सुप्तः स सत्यवान् ॥
स चेतनां ततः प्राप्य सत्यवांस्तामभाषत ।
चिरं सुप्तोऽस्मि दयिते त्वया किं न विबोधितः ।
क चासौ पुरुषः श्यामो योऽसौ मां सञ्चकर्ष च ॥

सावित्र्युवाच,—

गतः स भगवान् देवः प्रजासंयमनो यमः ।
विश्रान्तोऽसि महाभाग कथयिष्यामि तेऽखिलम् ॥
यदि शक्यं समुत्तिष्ठ विगाढ़ां पश्य शर्व्वरीम् ॥

मार्कण्डेय उवाच,—

उपलभ्य ततः संज्ञां सत्यवान् समचिन्तयत् ।
कथमद्य गमिष्यामि पित्रोरन्तिकमाकुलः ॥
करण्डिका फलैः पूर्णा काष्ठभारश्च तिष्ठतु ।
रक्षार्थमेतं परशुं गृहीत्वा गम्यतां शुभे ॥
अन्यथा का गतिस्तत्र पित्रोरद्य भविष्यति ।
ततस्तमाह सावित्री प्रजावो यदि मन्यसे ॥
ततस्तां सत्यवान् प्राह परशुं त्वं गृहाण मे ।
पलाशखण्डे सावित्री पन्था व्यावर्त्तते द्विधा ॥
तत्रोत्तरेण यः पन्थास्तेन गच्छ त्वमाशु च ।
एतस्मिन्नेव काले तु द्युमत्सेनो महीपतिः ॥
लब्धचक्षुस्तदा रात्रौ शैव्यया सह भार्य्यया ।
आश्रमांस्तापसानाञ्च व्यचरत् पुत्रलिप्सया ॥

शुशोच चातिदुःखार्तः पुत्रं ताञ्च शुभां वधूम् ।
स गौतमादिभिर्विप्रैः सान्त्वितः शोककर्षितः ॥
सर्व्वे तमूचुर्मुनयो न शोकं कुरु भूपते ॥
यथाऽस्य भार्य्या सावित्री शीलाचारसमन्विता ।
यथा च ते दृशोर्लाभश्चिरं जीवति सत्यवान् ॥
एतस्मिन्नेव काले तु सावित्र्या सह भार्य्यया ।
सत्यवानागतस्तत्र पित्रोः प्रीतिं विवर्द्धयन् ॥
अथ तैः सर्व्वतो विप्रैः पृष्टस्त्वं केन हेतुना ।
दिवसे न समायातः पितरौ तव दुःखितौ ॥
ततः स कथयामास शिरःपीडादिकं तथा ।
ततस्ते विप्रसङ्घाताः सावित्रीमिदमब्रुवन् ॥
कथयस्व तु सावित्रि वृत्तान्तो यो वनेऽभवत् ।
ततः सा कथयामास यमसन्दर्शनादिकम् ॥
चक्षुर्लाभस्य राज्यस्य द्वौ वरौ श्वशुरस्य मे ।
पितुः पुत्रस्य च शतं पुत्राणाञ्चात्मनः शतम् ॥
चतुर्वर्षशतायुश्च भर्त्तुः प्राप्तं तथा यमात् ।
तच्छ्रुत्वा परमप्रीता विप्रास्ते स्वमठं ययुः ॥
सत्यवानपि संहृष्टः पितृभ्यां सह भार्य्यया ।
अथ रात्र्यां व्यतीतायां सङ्गतास्ते तपोधनाः ॥
कृतपूर्व्वाह्णिकाः सर्व्वे सावित्रीं प्रशशंसिरे ।
शाल्वदेशाद्यथामात्या शुभमेनं महीपतिम् ॥
आगत्योचुर्महाराज अमात्येन हतो रिपुः ।

तव पूर्व्वेण सत्येन वयमभ्यागता इह ॥
अपचक्षुर्वा सचक्षुर्वा त्वं राजा भव भूपते ।
ततस्तैरभ्यनुज्ञातो ब्राह्मणैः स महीपतिः ॥
तैरमात्यैः परिवृतो महादेव्या च शैव्यया ।
पुत्रेण च तथा वध्वा सावित्र्या शीलयुक्तया ॥
ययौ स्वपुरमव्यग्रो हर्षसम्पूर्णमानसः ।
तत्र गत्वा द्युमत्सेनः सत्यवन्तं प्रियं सुतम् ॥
यौवराज्ये महाराजः स्थापयामास धर्म्मतः ।
सावित्र्याश्चापि कालेन जज्ञे पुत्रशतं वरम् ॥
भ्रातृणाञ्च शतं जातं सोदर्य्याणां महात्मनाम् ।
एवमात्मा पिता माता श्वश्रूश्च श्वशुरः पतिः ॥
भर्त्तुः कुलञ्च सावित्र्या सर्व्वं कृच्छ्रात् समुद्धृतम् ।
एवमेषापि पाञ्चाली शीलाचारसमन्विता ॥
तारयिष्यति वः सर्व्वान् सावित्रीव कुलाङ्गना ।
एवमाश्वासितस्तेन मार्कण्डेयेण धीमता ॥
युधिष्ठिरः प्रीतमनाः काम्यके न्यवसद्वने ।
य इदं शृणुयाद्भक्त्या सावित्र्याख्यानमुत्तमम् ॥
स सुखी सर्व्वसिद्धार्थो न दुःखं प्राप्नुयान्नरः ।
इति भविष्यपुराणे सावित्र्युपाख्यानम् ।

ततः स्तुत्वा देवीं प्रणम्य दक्षिणां दत्वा देवान् विसृज्य आचाराद्गन्धमाल्यादिभिः स्वपतिं पूजयेत् ।

इति सावित्रीव्रतं समाप्तम् ।

ब्रह्मपुराणे,—

ज्यैष्ठे शुक्लचतुर्थ्यान्तु जाता पूर्व्वमुमा सती।
तस्मात् सा तत्र सम्पूज्या स्त्रीभिः सौभाग्यवृद्धये॥

राजमार्त्तण्डे,—

ज्यैष्ठे मासि सिते पक्षे षष्ठी चारण्यसंज्ञिता।
व्यजनैककरास्तस्यामटन्ति विपिने स्त्रियः॥
तां विन्ध्यवासिनीं देवीं पूजयेयुर्वने गताः।
कन्दमूलफलाहारा लभन्ते सन्ततिञ्च ताः॥
तस्यां स्कन्दस्य कर्त्तव्या पूजा सर्व्वोपचारिकी।
आरोग्यकामैर्बालानां पुत्रवद्भिर्विशेषतः॥

तां षष्ठीसंज्ञया प्रसिद्धां कन्दं शालूकादि मूलं मानकचादि।

ब्रह्मपुराणे,—

ज्यैष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता।
तस्यां स्नानं प्रकुर्व्वीत दानञ्चैव विशेषतः॥
यां काञ्चित् सरितं प्राप्य दद्याद्दर्भतिलोदकम्।
मुच्यते दशभिः पापैर्महापातकसम्मितैः॥

अत्र नदीमात्रे स्नानस्य सतिलतर्पणाङ्गकस्य दशपापक्षयः फलं प्रतीयते।

भविष्ये,—

ज्यैष्ठे शुक्लदशम्यान्तु हस्तयोगेन जाह्नवी।
हरते दशपापानि तस्माद्दशहरा स्मृता॥

अत्र गङ्गायां तर्पणं विनापि हस्तायोगे दशविधपापक्षयः फलं

व्रतपर्व्वस्नाने तु फलातिशयः। अन्यनदास्नु हस्तायोगेऽपि फलाधिक्यं नास्ति विशेषाश्रवणात् वक्ष्यमाणवचने हस्तायां गङ्गावतरणस्य निमित्तकत्वकथनात् गङ्गायामेव हस्तायाः फलातिशयहेतुत्वाच्च ।

यत्तु,—

ज्यैष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
हरते दशपापानि तस्माद्दशहरा स्मृता ॥

इति भविष्योत्तरवचनं तदपि पूर्व्ववचनैकवाक्यतया गङ्गास्नानविषयम् ।

भविष्ये,—

ज्यैष्ठे मासि दशम्यान्तु कुजहस्तसमागमे ।
गङ्गा स्वर्गादुपागत्य मर्त्यलोकमवातरत् ॥
दशजन्मकृतं पापं दशपापानि चैव हि ।
नाशयेत्यप्रयत्नेन स्नानमात्रेण जाह्नवी ॥

अत्र भौमवारे हस्तायोगे गङ्गास्नानात् दशजन्मकृताशेषपापक्षयो दशविधपापक्षयश्च फलं प्रतीयते ।

ब्रह्मपुराणे,—

ज्यैष्ठे शुक्लदशम्यान्तु भवेद्भौमदिनं यदि ।
ज्ञेया हस्तर्क्षसंयुक्ता सर्व्वपापहरा तिथिः ॥

अत्रापि सर्व्वपापक्षयः फलं गङ्गायामेव पूर्व्ववचनैकवाक्यत्वात् ।

स्नानकाले पठनीयमाह काशीखण्डे ।

अदत्तानामुपादानं हिंसा चैवाविधानतः ॥
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ।

पारुष्यमनृतञ्चैव पैशून्यञ्चापि सर्व्वशः।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्॥
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम्
एतानि दश पापानि प्रशमं यान्तु जाह्नवि
स्नातस्य मम ते देवि जले विष्णुपदोद्भवे

तत्र गङ्गापूजामाह भविष्ये,—

ज्यैष्ठे मासि सिते पक्षे दशम्यां हस्तसंयुते
गङ्गातीरे तु पुरुषो नारी वा भक्तिभावतः॥
पुष्पैर्गन्धैश्च नैवेद्यैः फलैर्दशविधैस्तथा।
तथैव दीपैस्ताम्बूलैः पूजयेच्छ्रद्धयान्वितः॥
स्नात्वा भक्त्या तु जाह्नव्यां दशकृत्वो विधानतः।
दशप्रसृति कृष्णांश्च तिलान् सर्पींषि वै जले॥
शक्तुपिण्डान् + + + + प्रदद्याद्दशसंख्यया।
पूर्णकुम्भोपरि स्थाप्य हेमरौप्यादिनिर्म्मिताम्॥
गङ्गायाः प्रतिमां भक्त्या मन्त्रेणानेन पूजयेत्।
ॐ नमो नारायण्यै दशहरायै गङ्गायै नमो नमः॥
पश्चान्मृतेन च स्नानमर्च्चायास्तु विशिष्यते।
नारायणं महेशञ्च ब्रह्माणं भास्करं तथा॥
भगीरथञ्च नृपतिं हिमवन्तं नगेश्वरम्।
गन्धपुष्पादिभिश्चैव यथाशक्ति प्रपूजयेत्॥
दशप्रस्थतिलान् दद्यात् दशविप्रेभ्य एव हि।

दुर्गायाश्च यथा यात्रा तथा कुर्य्यात्सवाधनैः ॥
एवं कृत्वा विधानेन वित्तशाठ्यविवर्ज्जितः ।
सद्यो दग्रविधैः पापैः कोटिजन्मसमुद्भवैः ॥
मुच्यते नात्र सन्देहो ब्रह्मणो वचनं यथा ।

वाराहे,—

यस्तिष्ठत्येकपादेन कुरुक्षेत्रे महेश्वरि ।
वर्षाणामयुतं सप्त वायुभक्षो जितेन्द्रियः ॥
ज्यैष्ठे मासि सिते पक्षे द्वादश्यां समुपोषितः ।
पुरुषोत्तममालोक्य ततोऽधिकफलं लभेत् ॥

तत्रैकादश्यां उपवासो द्वादश्यां दर्शनमित्यर्थः ।

भविष्ये,—

यमुनासलिले स्नात्वा पुरुषो मुनिसत्तम ।
ज्यैष्ठे मासमले पक्षे द्वादश्यामुपवासकृत् ॥
समभ्यर्च्याच्युतं सम्यक् मथुरायां समाहितः ।
अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलम् ॥

अविकलं सम्पूर्णम् ।

ब्राह्मे,—

द्वादश्यां शुक्लपक्षस्य विशोका विष्णुना पुरा ।
विभूषिता शुभैर्माल्यैस्तस्मात्तां तत्र पूजयेत् ॥

विशोका लक्ष्मीः ।

तथा,—

ज्यैष्ठशुक्लचतुर्द्दश्यां पुष्पैश्चम्पकसम्भवैः ।

अर्चयित्वा महादेवं रुद्रलोके महीयते ॥

भविष्ये,—

ज्यैष्ठे मासि तिलान् दत्त्वा पौर्णमास्यां विशेषतः।

अश्वमेधस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ॥

विष्णुः,—

ज्यैष्ठी ज्येष्ठायुक्ता चेत्तस्यां छत्रोपानहानेन गाणपत्यमवाप्नोति।

स्कान्दे,—

पौर्णमासीषु चैतासु मासर्क्षसहितासु च।

अन्यदा स्नानदानाभ्यां फलं दशगुणं स्मृतम् ॥

एतच्च सकलपौर्णमासीसाधारणं महाज्यैष्ठ्यास्तु विशेषः प्रागुक्तस्तत्सर्वमोक्तमस्ति।

अथाषाढ़कृत्यम्।

गारुड़तन्त्रे,—

शिरीषसम्भवं मूलं पिष्ट्वा तण्डुलवारिणा।

यः पिबेन्मिथुनस्थेऽर्के तस्य सर्पभयं कुतः ॥

तथा,— आर्द्रायाः प्रथमे पादे क्षीरमश्नाति यो नरः।

अपि रोषान्वितस्तस्य तक्षकः किं करिष्यति ॥

सौराषाढ़स्य चत्वारिंशद्दण्डाधिकषड्दिवसादूर्द्ध्वं दशदिवसपर्य्यन्तमार्द्रायाः प्रथम पादे रविस्तिष्ठति। एतच्चाम्बुवाचीसंज्ञकम्।

यथा राजमार्त्तण्डे,—

चत्वारिंशत्कलाधिकषड्भागे रविर्यदा भवति।

शेषा तदाम्बुवाची शिवर्क्षमाश्रितो यावत् ॥

रवौ रौद्राद्यपादस्थे पृथिव्या जायते रजः ।
तस्माद्दिनत्रयं यावद्बीजवापं परित्यजेत् ॥
न स्वाध्यायं वषट्कारं न देवपितृतर्पणम् ।
वृक्षाणां वापनञ्चैव मङ्गल्यं नैव चाचरेत् ॥

शिवकर्म्मादौ स्वाधायोऽध्ययनं न तु ब्रह्मयज्ञनिषेधः वषट्कारः काम्यहोमारम्भः तर्पणं श्राद्धं । तत्र—

नवोदके नवान्ने च गृहप्रच्छादने तथा ।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥

इति शातातपेन वर्षोपक्रमे विहितमावश्यकं नवोदकश्राद्धमेव आर्द्रास्थे रवौ तस्य विधानात् ।

यथा रुद्रयामले,—

अश्विन्यादि तु मेषेषु विवाहे कृत्तिकादि तु ।
वर्षाकाले तथार्द्रादि नक्षत्रगणनं स्मृतम् ॥

तेनार्द्रायाः प्रथमपादं वर्ज्जयित्वा शेषपादत्रयस्थे रवौ नवोदकश्राद्धं कार्य्यमित्यायातम् । मङ्गल्यं विवाहादि ।

आधुनिकाः ।

द्वावेव वर्ज्जयेन्नित्यमनध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिञ्चाशुद्धामात्मानञ्चाशुचिं द्विजः ॥

इति मनुवचनात् पृथिव्या रजोयोगेनाशुद्धतया अध्ययनप्रतिषेध इति वदन्ति । तन्मन्दं भूमे रजोयोगासम्भवात् तदधिष्ठातृदेवताया रजोयोगे भूमेरशुद्धिः कुतः, अन्यथा भोजनदेवार्च्चनपञ्चमहायज्ञादीनामपि निषेधप्रसङ्गः ।

स्कान्दे,—

आषाढ़ञ्चापि यो मासमेकभक्तं समाचरेत् ।
राज्ञोऽसौ मान्यतां प्राप्य कामानाप्नोति पुष्कलान् ॥

अत्र सौराषाढ इति प्राञ्चः ।

भविष्ये,—

आषाढे मासि भूताहे शिवं सम्पूज्य यत्नतः ।
सर्व्वपापविनिर्मुक्तः शिवलोके महीयते ॥

भूताहः कृष्णचतुर्द्दशी ।

भविष्ये,—

मैत्राद्यपादे स्वपितीह विष्णु र्वैष्णाव्यमध्ये परिवर्त्तते च ।
पौष्णावसाने च सुरारिहन्ता विबुध्यते मासचतुष्टयेन ॥
निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत् ॥
मैत्रमनुराधा वैष्णवं श्रवणा पौष्णं रेवती ।

निशादेरन्यत्र काले उक्तनक्षत्रपादयोगो यदि स्यात् तथापि केवलायां द्वादश्यामेव निशासु शयनादिकं न तु नक्षत्रपादानुरोधादन्यत्र किन्तु नक्षत्रपादयोगे फलातिशय इत्यर्थः । अत्र द्वादश्यामेव शयनादिकमायातम् ।

यथा राजमार्त्तण्डे,—

दिवा स्वपिति नो विष्णु र्निशि न प्रतिबुध्यते ।
द्वादश्यामेव कर्त्तव्यं पादयोगो[1] न कारणम् ॥

---

१ क, पादयोगे ।

तथा तत्रैव प्रतिपदादिपञ्चदशतिथिषु क्रमेण देवानां शयनाभिधाने विष्णोर्द्वादश्यां शयनमुक्तं यथा,—

वह्निः स्कन्दपुरन्दरौ गणपतिर्लक्ष्मीर्यमो भास्करो
वायुः पर्व्वतकन्यका वसुमती तोयाधिपः केशवः ।
ब्रह्मा चैव महेश्वरो धनपतिः सर्व्वेऽप्यमी शेरते
उत्तिष्ठन्त्यमुना क्रमेण विबुधाः स्वे स्वे दिने पूजिताः ॥

यथा वाराहे,—

कृत्वा वै मम कर्म्माणि द्वादश्यां मत्परो नरः ।
ममैव बोधनार्थायेमं मन्त्रमुदीरयेत् ॥

ब्रह्मेन्द्ररुद्रैरभिष्टूयमानो
भवानृषिर्वन्दितवन्दनीयः ।
प्राप्ता तवेयं किल कौमुदाख्या
जागृष्व जागृष्व च लोकनाथ ॥

एवं कर्म्माणि कुर्व्वन्ति द्वादश्यां ये यशस्विनि ।
मम भक्त्या नरश्रेष्ठा यान्ति ते परमां गतिम् ॥

अत्र द्वादश्येव हरेः प्रबोधकाल उक्तः एवञ्च शयनकालोऽपि स एव शयनप्रबोधयोरेकतिथित्वनियमात् ।

तथा वामनपुराणे,—

एकादश्यां जगत्स्वामिशयनं परिकल्पयेत् ।
शेषाहिभोगपर्य्यङ्कं कृत्वा सम्पूज्य केशवम् ॥
अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः ।
लब्ध्वा पीताम्बरधरं देवं निद्रां समानयेत् ॥

अथ एकादशीसमये दिवाशयनीयपरिकल्पनं रात्रौ द्वादशी-समये निद्रेत्युक्तम्। एवञ्च द्वादश्यां शयननिर्णये सति।

एकादश्यान्तु शुक्लायामाषाढे भगवान् हरिः।
भुजङ्गशयने शेते यदा क्षीरार्णवान्तरे॥
तदा तत्प्रतिमा कार्य्या सर्व्वलक्षणसंयुता।
सुप्ता च शेषपर्य्यङ्के शैलन्द्रङ्गैश्च दारुभिः॥
नानाविधोपकरणैः पूज्या च विधिपूर्व्वकम्।
उपवासस्तु कर्त्तव्यो रात्रौ जागरणं तथा॥
ततो रात्र्यां व्यतीतायां द्वादश्यां पूजयेत् पुनः।

इति ब्रह्मपुराणवचनस्याप्ययमर्थः। एकादश्यां एकादश्युपवास-दिने द्वादशीक्षणे हरिः शेते इति।

अन्येतु,—एकादश्यान्तु शुक्लायां कार्त्तिके मासि केशवम्।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः॥

इति ब्रह्मपुराणदर्शनाच्छयनमप्येकादश्यामेव स्वापप्रबोधयोरेक तिथित्वनियमादित्याहुः। तन्न पूर्व्वानेकवचनैकवाक्यतया रात्रौ प्रसुप्तं केशवं एकादश्यां गतायां द्वादश्यां दिवा बोधयेदिति वच-नार्थः। एतेन एकादश्यां द्वादश्यां वेति विकल्पनापि निरस्ता वाक्यभेदप्रसङ्गात्। अन्येतु,—

क्षीराब्धौ शेषपर्य्यङ्के आषाढ्यां संविशेद्धरिः।
निद्रां त्यजति कार्त्तिक्यां तयोस्तं पूजयेत् सदा॥

इति यमवचने आषाढीकार्त्तिकीपदयोः पौर्णमास्यां योगरू-ढ़ित्वात् कल्पभेदव्यवस्थामाहुः। तन्नान्दनं,—

समुच्चयैकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात् पूर्व्वोक्तानेकवचनैक-वाक्यतया आषाढ़ीकार्त्तिकीपदयोर्योगानुबन्धात् द्वादशीपरत्वात् ततः सिद्धं द्वादश्यां शयनं प्रबोधश्चेति।

अथाषाढ़े दशम्यान्तु शुक्लायां लघुभुङ्नरः।

कृत्वा सायन्तनीं सन्ध्यां गृह्णीयान्नियमं बुधः॥

इति देवीपुराणाद्दशम्यां सायं सङ्कल्पयेत्।

तत्र सङ्कल्पवाक्यमुक्तं वराहपुराणे,—

एकादश्यां निराहारो भूत्वा चैवापरेऽहनि।

भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत॥

इत्युच्चार्य्य ततो विद्वान् पुष्पाञ्जलिमुपक्षिपेत्।

तत एकादश्यां पूर्व्वाह्णे पूर्व्वोक्तविधिना विष्णुमभ्यर्च्च्य दिवा शय्यादिकमुपकल्प्य रात्रौ द्वादशीसमये हरेः स्वापनं कार्य्यम्। यदि कदाचित् पूर्णैकादश्युपवासः स्यात् तदा परदिने रात्रौ शयनं कारयित्वा पारणा कार्य्येति। तत्र शयनमन्त्रो वराहपुराणोक्तो यथा,—

ॐ नमो नारायणाय इत्युक्त्वा

ॐ पश्यन्तु मेघान्यपि मेघश्यामं

शुभागतं सिच्यमानां महीमिमाम्।

निद्रां भगवान् गृह्णातु लोकनाथ

वर्षास्विमं पश्यतु मेघवृन्दम्॥

इति मन्त्रेण विष्णुं स्वापयित्वा,—

ॐ सुप्ते त्वयि जगन्नाथ जगत्सुप्तं भवेदिदम्।

विबुद्धे त्वयि बुध्येत जगत् सर्व्वं चराचरम्॥

इति मन्त्रेण पुष्पाञ्जलिना पूजयेत् ततः प्रातर्ब्राह्मणान् सम्पूज्य पारयेति ।

विष्णुधर्म्मोत्तरे,—

आस्तीर्णशयनं दत्त्वा शोभने ह्योगशायिनम् ।
आषाढ़शुक्लद्वादश्यां विष्णुलोके महीयते ॥

आस्तीर्णशयनं शोभनास्तरणयुक्तखट्वादि ।

ब्रह्मपुराणे,—

सुप्ते तु सर्व्वलोकेशे नक्तभोजी भवेन्नरः ।
सर्व्वपापविनिर्मुक्तः सर्व्वलोकेश्वरो भवेत् ॥

## अथ चातुर्मास्यव्रतानि ।

नारदीये,—

एकादश्यान्तु गृह्णीयात् संक्रान्तौ कर्कटस्य वा ।
आषाढ्यां वाथ दर्शे वा चातुर्मासीं व्रतक्रियाम् ॥
चातुर्मास्यव्रतं कुर्य्याद्यत्किञ्चिदवनीपते ।
नान्यथा वार्षिकं पापं विनिश्यत्यप्रयत्नतः ॥
चतुरो वार्षिकान् मासान् यो मांसं परिवर्ज्जयेत् ।
चत्वारि भद्राण्याप्नोति कीर्त्तिमायुर्यशोबलम् ॥

दर्शेति । आषाढ्याः पूर्व्वं दर्शे इत्यर्थः ।

मात्स्ये,—

आषाढ़ादि चतुर्मासं प्रातःस्नायी भवेन्नरः ।
विप्राय भोजनं दत्त्वा कार्त्तिक्यां गोप्रदो भवेत् ॥
स वैष्णवपुरं याति विष्णुव्रतमिदं महत् ।

अथ चातुर्मास्यारम्भः कर्त्तव्यां सङ्क्रान्तिः । अथ कर्मसु व्रतेषु पूर्व्वोक्तविधिना विष्णुमभ्यर्च्य तदग्रे सर्व्वं व्रतं गृह्णीयात् ।

ॐ इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्व्विघ्नां सिद्धिमाप्नोतु प्रसादात्तव केशव ॥
गृहीतेऽस्मिन् व्रते देव यद्यपूर्णे म्रियाम्यहम्[१] ।
तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्द्दन ॥

भविष्योत्तरे,—

चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि ।
स्त्री वा नरो वा मद्भक्तो गृह्णीयान्नियमानिमान् ।
मधुरस्वरो भवेन्नित्यं नरो गुड़विवर्ज्जनात् ॥
तैलस्य वर्ज्जनात् पार्थ सुन्दराङ्गः प्रजायते ।
कटुतैलपरित्यागाच्छत्रुनाशोऽभिजायते ॥
योगाभ्यासी भवेद्यस्तु स ब्रह्मपदमाप्नुयात् ।
ताम्बूलवर्ज्जनाद्भोगी रक्तकण्ठश्च जायते ॥
घृतत्यागात् सुलावण्यं[२] सर्व्वं स्निग्धवपुर्भवेत् ।
फलत्यागात्तु मतिमान् बहुपुत्रश्च जायते ।
पादाभ्यङ्गपरित्यागात् वपुःसौरभ्यमाप्नुयात् ॥
दधिदुग्धपरित्यागात् गोलोकं लभते नरः ।
लभते सन्ततिं दीर्घां स्थालीपाकमभक्षयन् ॥
भूमौ प्रस्तरशायी च विष्णोरनुचरो भवेत् ।

---

१ मूलपुस्तके, त्वहं म्रिये ।
२ ख पुस्तके, सलावण्यं ।

महामुनिः महायोगी मधुमांसविवर्ज्जनात् ॥
निराधिर्नीरुगोजस्वी विष्णुभक्तश्च जायते ।
एकान्तरोपवासेन विष्णुलोकमवाप्नुयात् ॥
धारणाजवलोयाच गङ्गास्नानं दिने दिने ।
मौनव्रती भवेद्यस्तु तस्याज्ञाऽस्खलिता भवेत् ॥
भूमौ भुङ्क्ते नरो यस्तु स पृथिव्याः पतिर्भवेत् ।
विष्णोर्यः सद्ने कुर्य्यादुपलेपनमार्ज्जने ॥
कल्पस्थायी भवेत्तत्र स नरो नात्र संशयः ।
प्रदक्षिणशतं यस्तु करोति स्तुतिपाठकः ॥
हंसयुक्तविमानेन स वैष्णवपुरं व्रजेत् ।
नक्तभोजी समयन्तु तीर्थयात्राफलं लभेत् ॥
एकभक्ताशनान्नित्यमग्निहोत्रफलं लभेत् ।
अयाचितेन चाप्नोति वापीकूपप्रपाफलम् ।
पत्रेषु यो नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् ॥
शिलायां भोजने नित्यं प्रयागस्नानजं फलम् ।
माषद्वयपरित्यागाञ्च [1]नरः परिभूयते ॥
एवमादिव्रतैः पार्थ तुष्टिमाप्नोति केशवः ।

स्तरं कटादि निराधिर्मानसपीडारहितः स्नामकृष्णभेदा-
न्मासकद्वयम् ।

मात्स्ये,— आषाढ़ादि चतुर्मासमभ्यङ्गं वर्ज्जयेद्बुधः ।
भोजनं पुष्पकं दद्यात् स याति भवनं हरेः ॥

---

१ मं पुस्तके, न रोगैः परिभूयते ।

आषाढ्यादिव्रतं यस्तु वर्ज्जयेन्नखकर्त्तनम् ।
वार्त्ताकुञ्च चतुर्मासं मधुसर्पिर्घटान्वितम् ॥
कार्त्तिक्यां तत्पुनर्हैमं ब्राह्मणाय निवेदयेत् ।

हेमनिर्मितं तत् वार्त्ताकुफलं घृतमधुघटान्वितं दद्यात् स च याति भवनं हरेरिति फलानुषङ्गः । एतेन वार्त्ताकुफलमभक्ष्य-मिति केषाञ्चिन्मतमिति निरस्तम् ।

भविष्ये,—

पौर्णमास्यामाषाढ़स्य शिवं सम्पूज्य यत्नतः ।
उपवीतं शिवे दद्याच्छिवभक्तांश्च पूजयेत् ॥
पुनरेव च कार्त्तिक्यां पूजयित्वा समापयेत् ।
यः कुर्य्याद्विधिवद्भक्त्या चातुर्मास्योपवीतकम् ॥
कल्पकोटिशतं साग्रं रुद्रलोके महीयते ।

विष्णुः,—

आषाढ्यामाषाढ़युक्तायां चत्रदानेन तदेवाक्षयमाप्नोति ।

भविष्ये,—

आषाढ़पौर्णमास्यां यो विधिवत् पूजयेच्छिवम् ।
सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥

## अथ श्रावणकृत्यम् ।

शातातपः,—

अयनादौ सदा देयं द्रव्यमिष्टं द्विजेषु च ।
यदा कर्कटकं याति भगवान् चण्डदीधितिः ॥

अथ विषजिघ्रायात् सर्गः स्मरणम् ।

छन्दोगपरिशिष्टम्,—

धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते ।

तासु स्नानं न कुर्व्वीत वर्ज्जयित्वा समुद्रगाः ॥

नद्यो माघ:, शौर एव,—

सिंहकर्क्कटयोर्मध्ये सर्व्वा नद्यो रजस्वलाः ।

न स्नानादीनि कर्म्माणि तासु कुर्व्वीत मानवः ॥

इत्यादिवचनात् ।

नदीलक्षणमुक्तं परिशिष्टे,—

धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते ।

न ता नदीशब्दवहा गर्त्तास्ते परिकीर्त्तिताः ॥

धनुर्हस्तचतुष्टयं तासित्यभिधानादुद्धृतोदके न दोष इति प्राञ्चः,

पठन्ति च,—

उद्धृतेषु च तोयेषु रजोदोषो न विद्यते ।

साक्षात् समुद्रगा न तु परम्परया, अन्यथा अव्यावर्त्तकत्वात् ।

निगमः,—

तपनस्य सुता गङ्गा गोमती च सरस्वती ।

रजसा न प्रदुष्यन्ति येचान्ये नदसंज्ञकाः ॥

वसु,—

आदौ कर्क्कटके देवी त्र्यहं यावद्रजस्वला ।

चतुर्थेऽहनि संप्राप्ते शुद्धा भवति जाह्नवी ॥

इति नाममूलं वचनं तद्रजोयोगमात्रं बोधयति न तु स्नाना-

दिनिषेधकम् ।

अपवादमाह परिशिष्टे,—

उपाकर्म्मणि चोत्सर्गे प्रेतश्राद्धे तथैव च ।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते ।

भारते,—

श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत् ।
यत्र तत्राभिषेकश्च प्राप्नोति ज्ञातिभिर्धनैः ॥

अत्रापि गौरो मासः ।

भविष्ये,—

अशून्यशयनां नाम द्वितीयां शृणु भारत ।
यामुपोष्य न वैधव्यं स्त्री न याति नरेश्वर ॥
पत्नीवियुक्तश्च नरो न कदाचित् प्रजायते ।
कृष्णपक्षे द्वितीयायां श्रावणे मासि भारत ।
अशून्यशयना प्रोक्ता श्रीहरेः शयनात् परम् ।

मात्स्ये,—

श्रावणस्य द्वितीयायां कृष्णायां मधुसूदनः ।
क्षीरार्णवे सलक्ष्मीकः सदा वसति केशवः ॥
तस्यां सम्पूज्य गोविन्दं सर्व्वान् कामानवाप्नुयात् ।
गोभूहिरण्यशय्यादि सप्तकल्पशतानुगम् ॥
अशून्यशयना नाम द्वितीया सा प्रकीर्त्तिता ।
न तस्य पत्न्या विरहः कदाचिदपि जायते ॥
नारी वा विधवा ब्रह्मन् यावच्चन्द्रार्कतारकम् ।

सलक्ष्मीकं गोविन्दं सम्पूज्य इत्यर्थः ।

भविष्ये,—

शुक्ले वनाईने कृष्णे पञ्चम्यां भवनाङ्गने।
पूजयेन्मनसादेवीं स्नुहीविटपसंस्थिताम्॥
करवीरैः शतपत्रैर्जातीपुष्पैः सचन्दनैः।
स्नापयेद्दुग्धपयसा तथा शीतोदकेन च॥
सघृतं पयसा पूपं दद्यात् धूपं सगुग्गुलुम्।
पूजयित्वा नरो देवीं न सर्पभयमाप्नुयात्॥

मनसादेवीत्येकपदमनुक्तमाषानुशासनात् सा च विषहरीति ख्याता, स्नुही सिजुः।

तथा,— श्रावणे मासि पञ्चम्यां कृष्णपक्षे नराधिप।
द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः॥
पूजयेद्दधिसद्वीर क्षीरदूर्व्वाङ्कुरैः कुशैः।
ये तस्यां पूजयन्तीह नागान् भक्तिपुरःसराः॥
न तेषां सर्पतो वीर भयं भवति कुत्रचित्।
पिचुमर्द्दस्य पत्राणि स्थापयेद्भवनोदरे।
स्वयञ्चापि तदश्नीयाद्भोजयेद् ब्राह्मणानपि॥

विषोल्बणा नागाः। ते चोक्ता गारुड़े,—

वासुकिस्तक्षकश्चैव कालियो मणिभद्रकः।
ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ॥

पिचुमर्द्दो निम्बः। उभयदिने लाभे युग्मादरात् परैव।

यत्तु,—

पञ्चमी च प्रकर्त्तव्या षष्ठ्यायुक्ता तु नारद॥

इति ब्रह्मवैवर्त्तवचनं, तत् भिन्नश्रुतिकल्पनाभयात् युग्मवचनावि-रोधाच तदेकवाक्यतयाऽयुक्तत्यकारप्रश्लेषेण व्याख्येयमिति प्रागुक्तम् ।

अथ पूजाविधिः ।

गृहाङ्गने गोमयेनोपलेपिते स्नुहीशाखामारोप्य तत्पार्श्वद्वये गोमयेनाष्टौ नागान् विलिख्य स्वस्ति वाच्य संकल्पं कृत्वा कृतभूत-शुद्धिप्राणायामो विघ्ननाशाय घटे गणेशं सम्पूज्य ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति मन्त्रैः षडङ्गन्यासं कृत्वा देवीं ध्यायेत् ।

हेमाम्भोजनिभां गरुद्विषधरालङ्कारसंशोभितां
सेरायां परितो महोरगगणैः संसेव्यमानां सदा ।
देवीमास्तिकमातरं शिवसुतामापीनतुङ्गस्तनीं
हस्ताम्भोजयुगेन नागयुगलं संबिभ्रतीमाश्रये ॥

इति ध्यात्वा मनसा सम्पूज्य पूर्व्ववदर्घ्यस्थापनं कृत्वा ह्रीं पद्मा-सनाय नम इति पुष्पाञ्जलिना आसनं दत्वा पूर्व्ववत् ध्यात्वा सो-ऽहमिति विभाव्य पुष्पाञ्जलिना नासारन्ध्रेण तेजो निर्गमय्य स्नुहीशाखायामावाहयेत् ।

आस्तिकस्य मुनेर्मातर्जगदानन्दकारिणि ।
एह्येहि मनसादेवि नागमातर्नमोऽस्तु ते ॥
आगच्छ वरदे देवि सर्व्वकल्याणकारिणि ।
स्नुहीशाखां समासाद्य तिष्ठ पूजां करोम्यहम् ॥

भगवति श्रीमनसादेवि इहागच्छागच्छ तिष्ठ तिष्ठ सन्निहिता भव सन्निरुद्धा भव प्रसन्ना भव इत्यावाहनस्थापनसन्निधापन-सन्निरोधनावगुण्ठनसकलीकरणामृतीकरणपरमीकरणमुद्राः प्रदर्श्य

प्राणप्रतिष्ठां कृत्वा मं मनसादेव्यै नम इति पुष्पाञ्जलिं दत्वा तेनैव मन्त्रेण पाद्यार्घ्याचमनीयानि दत्वा—

ॐ त्रैलोक्यपूजितां देवीं नागाभरणभूषिताम्।

स्नपयामि महाभागां पुत्रायुर्धनवृद्धये॥

इति मन्त्रेण दुग्धेन स्नपयित्वा—

ॐ गन्धचन्दनमिश्रेण तोयेन नागमातरम्।

स्नपयामि महाभागां सर्व्वसम्पत्तिहेतवे॥

इति शीतलोदकेन स्नापयेत्।

वस्त्रालङ्कारजातीकरवीरादिकुसुमैरभ्यर्च्य धूपगुग्गुलधूपदीप-नानाविधफल-सघृतपायसपिष्टक-दधि-दुग्ध-मोदकादीनि दत्वा पुनराचमनीयं माल्यं चन्दनं ताम्बूलञ्च निवेद्य शङ्खघण्टादिकं वादयेत्।

ततो वासुक्यादि अष्टनागानावाह्य पाद्यादिभिरभ्यर्च्य दूर्व्वाङ्कुरैः कुशैर्दुग्धेन च विशेषतः पूजयेत्।

ॐ वासुकये नमः ॐ तक्षकाय कालियाय मणिभद्राय ऐरावताय धृतराष्ट्राय कर्कोटकाय धनञ्जयाय इति सम्पूज्य—

नागराज नमस्तेऽस्तु पाहि मां शरणागतम्।

त्राहस्व सर्पभीतिभ्यः सर्व्वान् कामान् प्रयच्छ मे॥

इति प्रणमेत्। ततः पुष्पाञ्जलिना देवीं प्रणमेत्।

अयोनिसम्भवे मातर्महेश्वरसुते शुभे।

पद्मालये नमस्तुभ्यं रक्ष मां वृजिनार्णवात्॥

जरत्कारुमुनेः पत्नी भगिनी वासुकेः पुनः।

आस्तिकस्य मुनेर्माता वरदाऽस्तु सदा मम॥

ततो दक्षिणां दत्वा क्षमस्वेति देवीं नागांश्च विसर्जयेत्।

## अथ भाद्रकृत्यम् ।

वामनपुराणे,—

माषि भाद्रपदे दद्यात् पायसं मधुसर्पिषी ।
हृषीकेशप्रीणनार्थं काञ्जितं मणुडोदनम् ॥

काञ्जितं खाद्यविशेषः ।

स्कान्दे,—

यस्तु भाद्रपदे मासि एकभक्तं समाचरेत् ।
स तेन कर्मणा राजन् धनवानभिजायते ॥

इदं चौरकृत्यमिति प्राञ्चः ।

### अथ रोहिण्यष्टमी ।

ब्रह्माण्डे,—

रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी ।
अर्द्धरात्रादधश्चोर्द्धं कलयापि यदा भवेत् ॥
तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः ।
महापुण्यतमः कालो जयन्त्याख्यो हि स स्मृतः ॥
अर्द्धरात्रे तु योगोऽयं तारापत्युदये तथा ।
सोपवासो हरेः पूजां कृत्वा तत्र न सीदति ॥
जयन्त्यामुपवासन्तु कृत्वा योऽभ्यर्चयेद्धरिम् ।
तस्य जन्मशतोद्भूतं पापं नाशयतेऽच्युतः ॥
व्रतमेकादशीश्चैव एकत्र रोहिणीव्रतम् ।
एकादशीशताद्राजन्नधिकं रोहिणीव्रतम् ॥
ततोऽतितुर्लभां मत्वा तस्यां यत्नं समाचरेत् ।

अर्द्धरात्रेऽष्टमक्षर्त्तं रोहिणीसहिताष्टमी यदि लभ्यते तदैव जयन्तीयोग इत्यर्थः । न सीदतीत्यनेनास्य नित्यत्वं दर्शितम् । एकादश्यधिकतया यत्नान्तराभिधानाच्च ।

तथाच भविष्योत्तरे,—

जयन्त्यामुपवासस्तु महापातकनाशनः ।
सर्व्वैः कार्य्यो महाभक्त्या पूजनीयश्च केशवः ॥
अकुर्व्वन् निरयं याति यावदिन्द्राश्चतुर्द्दश ।

फलश्रवणात् काम्यत्वञ्चास्येत्यर्थः । एवञ्चोपवासासमर्थस्य एकादशीवदनुकल्पविधिर्द्रष्टव्यः । भाद्रमासोऽच पौर्णमास्यन्त एव सर्व्वत्र तथैव सकलतिथिकृत्याभिधानात् । अतएव मुख्यचान्द्राभिप्रायेण श्रावणेऽपि विष्णुपुराणे उक्तम्,—

प्रावृट्काले च नभसि कृष्णाष्टम्यामहं निशि ।
उत्पत्स्यामि[1] नवम्याञ्च प्रसूतिं त्वमवाप्स्यसि ॥

भविष्ये,—

अष्टमी कृष्णपक्षस्य रोहिण्या सह संयुता ।
भवेत् प्रौष्ठपदे मासि जयन्ती नाम सा स्मृता ॥
जयन्त्यामुपवासन्तु कृत्वा योऽभ्यर्च्चयेद्धरिम् ।
तस्य जन्मशतोद्भूतं पापं नाशयतेऽच्युतः ॥
शारीरं मानसं वाग्जं पापं यत्समुपार्ज्जितम् ।
कौमारे यौवने बाल्ये वार्द्धके च विशेषतः ॥

---

१ ख, ग, उत्पत्स्यामि ।

तत्पापं शमयेत् कृष्णस्तिथावस्यां सुपूजितः।
उपवासो जपो होमः स्वाध्यायोऽर्च्चनं हरेः॥
तत्सर्व्वमक्षयं प्रोक्तं जयन्त्यां यत्कृतं भवेत्।
धनधान्यप्रदा पुण्या सर्व्वपापहरा शुभा॥
समुपोष्या जनैर्यत्नाज्जयन्ती नाम चाष्टमी।
जयन्त्या उपवासस्तु महापातकनाशनः॥
स कार्य्यः परया भक्त्या पूजनीयश्च केशवः।

अत्र समुपोष्या जनैर्यत्नादित्यनेन च नित्यत्वं दर्शितम्।
भविष्योत्तरे,—

सिंहराशिगते सूर्य्ये गगने जलदाकुले।
मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके॥
शशाङ्के वृषराशिस्थे नक्षत्रे रोहिणीयुते।
वसुदेवेन देवक्यामहं जातो जनाः स्वयम्॥
मुहूर्त्तो विजयो नाम जयन्ती नाम शर्व्वरी।
एतेनैवोपवासेन कृतेन कुरुनन्दन॥
सप्तजन्मकृतात्पापात् मुच्यते नात्र संशयः।

सिंहराशिगते सूर्य्ये इत्यनेनैव प्राप्तौ मासि भाद्रपद इति चान्द्र-भाद्रपरम्। तेन कदाचित् सौरश्रावणेऽपि भवति। जयन्तीयोगस्तु सिंहराशिगते सूर्य्ये एव भवति न तु सौरश्रावणे विशेषविधानात् अन्यथा वैयर्थ्यात्। नक्षत्रे रोहिणीयुते इति, सप्तविंशतिं वा विभक्ताः ज्योतिश्चक्रस्य भागा नक्षत्राणि तन्मध्ये रोहिण्यधिष्ठितो यो भागस्तत्र गते शशाङ्के सतीत्यर्थः। सप्तजन्मकृतपापक्षयः पुनः

पूजनायामर्थात् केवलोपवासेनैवेत्यर्थः। यद्यपूजकोऽपि रात्रावर्चनं कृत्वा हविष्याशिकं करोति तथापि [1]बहुजन्मार्ज्जितपापं नाशयति।

यथा भविष्ये,—

रोहिण्यामर्द्धरात्रे च यदा कृष्णाष्टमी भवेत्।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मकम्॥

अतएव रात्रौ पूजा कार्य्या।

अर्द्धरात्रे तु योगोऽयं तारापत्युदये तथा।
सोपवासो हरेः पूजां कृत्वा तत्र न सीदति।

इति पूर्व्वोक्तवचनाच्च।

रात्रौ च जागरस्तत्र नृत्यगीतसमाकुलः।
कृष्णस्तत्र च संपूज्यो यशोदा देवकी[2] तथा॥

इति ब्रह्मपुराणवचनाच्च।

कृष्णाष्टम्यान्तु रोहिण्यामर्द्धरात्रेऽर्चनं हरेः।

इति गरुड़पुराणवचनाच्च।

जयन्तीयोगाभावे तु पूर्व्वोक्तः एवाष्टम्यां पूजेति। तत्र यदि पूर्व्वदिने जयन्तीयोगो लभ्यते तदा सप्तमीविद्धापि कार्य्या योगस्य बलीयस्त्वात्। यदि च दिनद्वये जयन्तीयोगस्तदा युग्मादरेण व्यवस्था। यदा तु एकस्मिन् दिने रात्रिमात्रे तिथियोगो नक्षत्रयोगश्च, परस्मिन् दिने रात्र्यर्द्धे तिथिमात्रयोगस्तदा वचनानुरोधात् रात्र्यर्द्धयोगं विहाय रात्रिमात्रयोगोऽभ्यर्हणीयः।

---

१ ख, ग, जन्मजन्मार्ज्जितम्।

२ ख, देवकी।

यथा भविष्ये,—

कार्य्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी।

तत्रोपवासं कुर्व्वीत तिथिभान्ते च पारणम्॥ इति।

तथा विष्णुधर्म्मे,—

मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तं प्रदृश्यते।

अष्टम्या रोहिणीऋक्षं तां सुपुण्यामुपोषयेत्॥

यदा चैकस्मिन् दिने रात्रौ नक्षत्रतिथियोगः अपरदिने दिवा नक्षत्रतिथियोगस्तदा रात्रौ नक्षत्रस्य वीर्य्यबलात् रात्रौ नक्षत्र-योगोऽभ्यर्हणीयः।

यत्र वा युज्यते राम निशीथे शशिना सह।

इति वक्ष्यमाणवचनात्।

यदि चोभयदिने रात्रौ नक्षत्रतिथियोगो नास्ति तदा यस्मिन् दिने दिवा नक्षत्रयोगस्तत्र नक्षत्रानुरोधात् निर्व्विवादैव व्यवस्था। यदा च दिनद्वये रात्रौ नक्षत्रयोगस्तदाऽस्तसम्बन्धेन व्यवस्था।

यथा विष्णुधर्म्मोत्तरे,—

उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः।

यत्र वा युज्यते राम निशीथे शशिना सह॥

यदा च दिनद्वय एवास्तसम्बन्धेन नक्षत्रयोग[1]स्तदा युग्मादरेण व्यवस्था एतन्मूलकमेव "सा सर्व्वापि न कर्त्तव्या सप्तमीसहिताष्टमी" इति मदनपारिजातलिखितपद्मपुराणवचनम्। यत्र च बुधवारे

---

१ ग, अस्तसम्बन्धेन नक्षत्रयोग इत्यंशो नास्ति।

प्रातः किञ्चिदष्टमी अनन्तरं नवमीचन्नः तिथिद्वयञ्च रोहिणीयुक्तं स्यात् तदा पूर्व्वामष्टमीं विहाय सैवाईणीया।

यथा स्कन्दपुराणे,—

उदये चाष्टमी किञ्चिन्नवमी सकला यदि।
भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता॥
अपि वर्षशतेनापि लभ्यते चाथवा न वा।

नवमीचन्नये चत्येव संयोगः, उदये किञ्चिदष्टमीति विशेषविधानात् सकला यदीत्यभिधानाच्च।

अतएव अपि वर्षशतेनैव लभ्यते इत्येतदप्युपपद्यते अन्यथा प्रायेण बुधवारो नवम्यां लभ्यत एवेति तत्त्वार्थः। जयन्तीति सर्व्वतो बलवती सर्व्वमुनिभिस्तत्र भगवज्जन्माभिधानात् सर्व्वतः फलाधिक्य-श्रवणाच्च।

प्रेतयोनिगतानाञ्च प्रेतत्वं नाशितञ्च तैः।
यैः कृता श्रावणे मासि रोहिणीसहिताष्टमी॥
किं पुनर्बुधवारेण सोमवारे विशेषतः।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा॥

इति पद्मपुराणवचनं, तस्यायमर्थः। श्रावणे मासीति मुख्य-चान्द्रापेक्षया, यैः कृतेति नायं विधिः। किन्तु।

अनुपोष्या जन्मर्क्षेण जयन्ती नाम शर्व्वरी।

इत्यादि श्रुतविधेरेव फलकथनं अतो यः-किं पुनरित्यनेन फलातिशय उक्तः, स च जयन्तीयोगस्यैव, पृथग्विधिकल्पनागौर-वात् अतएव वारयोगे फलातिशयमुक्ता पुनरपि किं पुनरित्यनेन

च नवमीयोगेऽपि पृथक् फलातिशय उक्तः। भविष्योत्तरेऽपि बुधवार-योगो पृथक्फलमित्युक्तम्।

अन्ये तु स्कन्दपुराणवचनैकवाक्यतया एतद्वचनमपि नवमीचय-विषयं पृथग्विधिकल्पनागौरवादिति वदन्ति।

उभयदिने नक्षत्रप्राप्तौ यस्मिन् दिने रात्रियोगस्तद्ग्रहणीयम्। आचाराः,—

नक्षत्रादिव्रतयोगे तु रात्रियोगो विशिष्यते। इति।

तथा ब्रह्मवैवर्त्ते,—

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्द्दशी।
एताः पूर्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत्॥

तथा विष्णुरहस्ये,—

अष्टमी शिवरात्रिश्च कार्य्या भद्रजयान्विते।
कृत्वोपवासं तिथ्यन्ते तदा कुर्य्याच्च पारणम्॥ इति।

यदि च नक्षत्राप्राप्तौ दिनद्वये एव रात्रौ तिथियोगस्तदाऽस्त-गमनेन व्यवस्था।

तथाच भविष्ये,—

अलाभे रोहिणीभस्य कार्य्याष्टम्यस्तगामिनी।
तत्रोपवासः कर्त्तव्यस्तिथ्यन्ते पारणं स्मृतम्॥ इति।

एतेन 'अयनादिर्योगोऽधिकतम इत्यर्थः। अत्र पारणा तिथि-भान्ते कार्य्या।

---

१ ख अयनस्या योगः।

यथा भविष्ये,—

कायेन मनसा वाचा यत्पुण्यं समुपार्ज्जितम्।
तिथिनक्षत्रयोर्दग्रं हन्ति नक्षत्रञ्च चतुर्द्दशम्॥
तस्मात् प्रयत्नतः कार्य्यं तिथिभान्ते च पारणम्।

चयोद्ग्रं चयोद्ग्रजन्महतमित्यर्थः।

ब्रह्माण्डे,—

अष्टम्यामथ रोहिण्यां यः कुर्य्यात् पारणं क्वचित्।
हन्यात् पुराकृतं पुण्यमुपवासार्ज्जितं पुनः॥
तस्मात् प्रयत्नतः कार्य्यं तिथिभान्ते च पारणम्।
रात्रौ न पारणं कुर्य्यात् ऋते वै रोहिणीव्रतात्॥
तत्र निश्यपि तत् कुर्य्याद्वर्ज्जयित्वा महानिशाम्।

क्वचित् कदाचिदित्यर्थः, अत्र अथेत्यनेन पृथक् पृथक् तिथिनक्षत्रयोर्निन्दार्थवादादुभयान्त एव पारणा न त्वेकस्यान्ते।

अयमर्थः, भोजनरूपायाः पारणाया रागप्राप्तत्वान्न तत्र विधिः किन्तु निन्दाश्रवणात् जन्माष्टम्यामुपोषितोऽष्टम्यां रोहिण्याञ्च पारणां न कुर्य्यादिति निषेधविधिद्वयम्।

* [१][न च रोहिणीयुक्ताष्टम्यां पारणं न कुर्य्यादित्येक एव विधिः केवलाष्टम्यामुपवासे तस्यां पारणाप्रसक्तात्।]

न च रोहिणीयुक्ताष्टम्यां केवलाष्टम्याञ्च न कुर्य्यादिति निषेधद्वयं, नक्षत्राधिकतिथौ भवदभिमतायाः पारणाया विरोधापत्तेः, किन्तु पृथगेव द्वयोर्निन्दाश्रवणात्तदनुरूपमेव निषेधद्वयं

१ ग पुस्तके, [ ] चिह्नितसन्दर्भो नास्ति।

न्याय्यं न तु विशिष्टयोर्निषेधकल्पना, अश्रुतत्वात् गौरवाच्च। भान्ते कुर्य्यादिति वचनन्तु यथावसरं व्याख्यास्यते। तस्मादुभयान्ते पारणेति।

तथा च हेमाद्रिलिखितं वचनम्,—

तिथ्यृक्षयोर्यदा छेदो नक्षत्रान्त एव वा।
अर्द्धरात्रे ततः कुर्य्यात् पारणं त्वपरेऽहनि॥

अर्द्धरात्रं महानिशा तत्र भोजननिषेधात्। यदा यस्मिन्नहनि अर्द्धरात्रे महानिशायामुभयोस्तिथ्यृक्षयोश्छेदोऽन्तः स्यात्, नक्षत्रे-त्युपलक्षणं द्वयोरेकस्यान्तो वा महानिशि स्यात्ततस्तस्माद्दिवसाद-परेऽहनि प्रातस्तृतीयेऽहनि पारणं कुर्य्यादित्यर्थः, यत्तदोरेकार्थ-प्रत्यायकत्वव्युत्पत्तेः। एतेनोपवासदिनादपरेऽहनीति यदाधुनिकेन व्याख्यातं तत्परास्तं अपरपदवैयर्थ्यापत्तेः।

यत्तु,—

भान्ते कुर्य्यात्तिथेर्वान्ते शस्तं भारत पारणम्।

इत्यग्निपुराणं, तन्नक्षत्रासम्बन्धे तिथ्यन्ते पारणविधायकम्।

अष्टमी शिवरात्रिश्च कार्य्ये भद्रजयान्विते।
कृत्वोपवासं तिथ्यन्ते तदा कुर्य्यात्तु पारणम्॥

इति विष्णुवचनसमानार्थं[1], अथवा वाशब्दस्यार्थे यदा पारणा-दिने द्वयोरन्यतरनिर्गमे कदाचिद्भान्ते कदाचित्तिथ्यन्ते च द्वयो-र्मध्ये यदधिकं तदन्ते पारणेति वचनार्थः।

---

१ क, ग, विष्णुरहस्यसमानार्थम्।

यत्तु,—

रोहिणीसहिता चेयं विद्वद्भिः समुपोषिता।
वियोगे पारणं कुर्य्युर्मुनयो ब्रह्मवादिनः॥
सांयोगिके व्रते प्राप्ते यद्येकोऽपि[1] वियुज्यते।
तत्रैव पारणं कुर्य्यादेवं वेदविदो विदुः॥

इति नामशून्यं वचनं, यदि साकरं स्यात्तदायमर्थः,— प्रकृतयो रोहिण्यष्टम्योर्द्वयोरेव वियोगे छेदेऽन्त एव पारणमिति ब्रह्मवादिनां मतं वेदवादिनान्तु मिलितयोर्द्वयोरेकस्यान्तेऽपि पारणमिति। एतच्चात्यन्ताशक्तविषयं मन्तव्यं मदार्णवोऽप्येवमिति।

भविष्योत्तरे,—

पार्थ तद्दिवसे प्राप्ते दन्तधावनपूर्व्वकम्।
उपवासस्य नियमं गृह्णीयाद्विधिपूर्व्वकम्॥
ॐ वासुदेवं समुद्दिश्य सर्व्वपापप्रशान्तये।
उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम्॥
अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीम्।
अर्च्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि॥
ततः स्नात्वा तु पूर्व्वाह्णे नद्यादौ विमले जले।
देव्याः सुशोभनं कुर्य्याद्देवक्याः सूतिकागृहम्॥
पटुमङ्गलसङ्गीतसङ्कुलं कलसान्वितम्।
[वह्नि-वारि-लौहखड्ग-यूप-च्छागसमन्वितम्[2]॥]

---

१ क, ग, पुस्तकद्वये, यद्येकोऽपि।
२ ग पुस्तके, चिह्नितचरणद्वयमास्ति।

द्वारि विन्यस्तमुषलं रक्षितं रक्षपालकैः ।
तन्मध्ये प्रतिमाः स्थाप्याः काञ्चनादिविनिर्मिताः ॥
प्रतप्तकाञ्चनाभासा देवकी च यशस्विनी ।
सा चापि बालकं सुप्तं प्रसूता स्तनपायिनम् ॥
यशोदा चापि तत्रैव प्रसूता वरकन्यकाम् ।
ताश्चापि पूजयेद्भक्त्या गन्धपुष्पाक्षतैः फलैः ॥
कुष्माण्डैर्नारिकेलैश्च खर्ज्जूरैर्दाड़िमीफलैः ।
बीजपूरैः पूगफलैर्लकुचैस्त्रपुषैस्तथा ॥
कालदेशोद्भवैर्मृष्टैः पुष्पैश्चापि युधिष्ठिर ।
स्थण्डिले स्थापयित्वा तु सचन्द्रां रोहिणीं तथा ॥
देवकीं वसुदेवञ्च यशोदां नन्दमेव च ।
चण्डिकां बलदेवञ्च पूज्य पापैः प्रमुच्यते ॥

ब्रह्मपुराणे,—

कृष्णस्तत्र च सम्पूज्यो यशोदा देवकी तथा ।
वसुदेवश्च नन्दश्च बलदेवश्च चण्डिका ॥
गन्धैः पुष्पैस्तथा पिष्टैर्यवगोधूमसम्भवैः ।
सगोरसैर्भक्ष्यभोज्यैः फलैर्नानाविधैरपि ॥

पूजामन्त्रस्तु गरुड़पुराणोक्तः प्रयोगे वक्ष्यते ।

भविष्ये,—

अर्द्धरात्रे वसोर्धारां पातयेद्गुड़सर्पिषा ।
चन्द्रोदये शशाङ्काय अर्घ्यं दद्याद्धरिं स्मरन् ॥
शङ्खे तोयं समादाय सपुष्पफलचन्दनम् ।

आत्तुभ्यामवनीकृत्वा चन्द्रायार्घं निवेदयेत् ॥
क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव।
गृहाणार्घं शशाङ्केमं रोहिण्या सहितो मम ॥
ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां पतये नमः।
नमस्ते रोहिणीकान्त सुधावास नमोऽस्तु ते ॥
एवं कृत्वा तथा रात्रौ प्रभाते नवमीदिने।
यथा मम तथा कार्य्यो भगवत्या महोत्सवः ॥
ब्राह्मणान् भोजयेत्कृत्वा तेभ्यो दद्याच्च दक्षिणाम्।
हिरण्यं काञ्चनं गावो वासांसि कुसुमानि च ॥
यद्यदिष्टतमं लोके कृष्णो मे प्रीयतामिति।
एवं यः कुरुते देव्या देवक्याः सुमहोत्सवम् ॥
नरो वा यदि वा नारी यथोक्तं फलमाप्नुयात्।
पुत्रसन्तानमारोग्यं धनधान्यर्द्धिमद्गृहम् ॥
पर्ज्जन्यः कामवर्षी स्यादीतीभ्यो न भयं भवेत्।
सम्पर्केणापि यः कश्चित् कुर्य्याज्जन्माष्टमीव्रतम् ॥
विष्णुलोकमवाप्नोति सोऽपि पार्थ न संशयः।

यथोक्तं व्रतजन्मपापक्षयादि।

अथ प्रयोगः।

प्रातर्द्दन्तधावनं कृत्वा वासः परिधाय हिराचम्य सङ्कल्पं कुर्य्यात्।

ॐ वासुदेवं समुद्दिश्य सर्व्वपापप्रशान्तये।
उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ॥
अद्य कृष्णाष्टमीं देवीं नभश्चन्द्ररोहिणीम्।

अर्चयित्वोपवासेन भोक्तव्योऽहमपरेऽहनि ॥

एवं सङ्कल्प्य यथाविधिकृतस्नानो देवक्याः सूतिकागृहं कृत्वा तत्र काञ्चनादिनिर्म्मितायां देवकीकृष्णयोर्यशोदायष्ठिकयोश्च प्रतिमायां सर्व्वतोभद्रमण्डले शालग्रामे वा पूजयेत्। तत्र प्रथमं भूतापसारणं कृत्वा आसने उपविश्य कृतभूतशुद्धिः प्राणायाम मातृकान्यास-केशवादिन्यासान् कृत्वा कराङ्गन्यासौ कुर्य्यात्।

आचक्राय स्वाहा अङ्गुष्ठाभ्यां नमः।
विचक्राय स्वाहा तर्ज्जनीभ्यां स्वाहा ॥
सुचक्राय स्वाहा मध्यमाभ्यां वषट्।
त्रैलोक्यरक्षणचक्राय स्वाहा अनामिकाभ्यां हुं।
असुरान्तकचक्राय स्वाहा कनिष्ठाभ्यां फट् ॥
आचक्राय स्वाहा हृदयाय नमः।
विचक्राय स्वाहा शिरसे स्वाहा ॥
सुचक्राय स्वाहा शिखायै वषट्।
त्रैलोक्यरक्षणचक्राय स्वाहा कवचाय हुं।
असुरान्तकचक्राय स्वाहा अस्त्राय फट् ॥
इति तालत्रयं दिग्बन्धनञ्च कुर्य्यात्।
अथ वा ॐकारेण कराङ्गन्यासौ कुर्य्यात्।
ततः पूर्व्ववत्पीठन्यासं कृत्वा देवं ध्यायेत्।
बालमिन्दीवरश्यामं पद्मपत्रायतेक्षणम्।
स्निग्धकुन्तलसम्भिन्नसौवर्णमुकुटोज्ज्वलम् ॥
चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम्।

श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥
काश्मीरकपिशोरस्कं पीतकौशेयवाससम् ।
हारकेयूरकटकवसनाद्यैरलङ्कृतम् ॥
शङ्खचक्रगदापद्मराजद्भुजचतुष्टयम् ।
ब्रह्मादिभिः सुरगणैः स्तूयमानपदाम्बुजम् ॥
देवक्या वसुदेवेन सम्भ्रमानवमूर्त्तिना ।
विस्मयोत्फुल्लनेत्राभ्यां वीक्ष्यमाणमुखाम्बुजम् ।
स्मरेत् स्मेरमुखं देवं गोविन्दमजमव्ययम् ॥

इति ध्यात्वा मनसा पाद्यादिभिरभ्यर्च्य आत्माभेदेन सञ्चिन्त्य पूर्व्ववदर्घ्यं संस्थाप्य पाद्यमाचमनीयञ्च स्थापयेत्। ततः प्रतिमायां मण्डले वा शालग्रामे वा पूर्व्ववत् पीठपूजां विधाय पुनर्देवं ध्यात्वा पुष्पाञ्जलिना वहन्नासापुटेन तेजोरूपं भगवन्तं प्रतिमादिष्वारोप्य "ॐ तद्विष्णोः परमं पदमिति मन्त्रं पठन्" भगवन् श्रीकृष्ण इहागच्छागच्छ तिष्ठ तिष्ठ सन्निहितो भव सन्निरुद्धो भव प्रसन्नो भवेति यथाक्रममावाहनस्थापनसन्निधापनसन्निरोधनसम्मुखीकरण-मुद्राः प्रदर्श्य देवताङ्गे षडङ्गन्यासं कृत्वा अवगुण्ठनामृतीकरणपरमीकरणमुद्राः प्रदर्श्य प्राणप्रतिष्ठां कृत्वा।

ॐ यज्ञाय यज्ञेश्वराय यज्ञपतये यज्ञसम्भवाय गोविन्दाय नमो नमः। इति मन्त्रेण पुष्पाञ्जलिं दद्यात् अनेनैव मन्त्रेणासनं दत्वा "स्वागतं ते" इति पृष्ट्वा तेनैव मन्त्रेण पाद्याचमनीयार्घ्यमधुपर्क पुनराचमनीयानि दत्वा। "ॐ योगाय योगेश्वराय योगपतये योगसम्भवाय गोविन्दाय नमो नमः" इति स्नानीयं दत्वा यज्ञाये-

त्यादि पूर्व्वोक्तमन्त्रेण वस्त्रालङ्कारगन्धपुष्पधूपदीपफलमूलदधिदुग्धा-
न्यव्यञ्जनपरमान्नपिष्टकमोदकादीनि नैवेद्यादीनि दत्त्वाचमनीयं
ताम्बूलं चन्दनञ्च दत्त्वा शङ्खघण्टादिकं वादयित्वा आवरणानि
पूजयेत् ।

अग्न्यादिकोणकेशरेषु ।

आचक्राय स्वाहा हृदयाय नमः ।

विचक्राय स्वाहा शिरसे स्वाहा शिरसे नमः ।

सुचक्राय स्वाहा शिखायै वषट् शिखायै नमः ।

त्रैलोक्यरक्षणचक्राय स्वाहा कवचाय ऊं कवचाय नमः ।

चतुर्दिक्षु,—

असुरान्तकचक्राय स्वाहा अस्त्राय फट् अस्त्राय नमः ।

ततः पूर्व्वाद्यष्टपत्रेषु,—

रोहिणीं चन्द्रं देवकीं वसुदेवं यशोदां नन्दं चण्डिकां बल-
देवञ्च गन्धपुष्पधूपदीपनैवेद्यैः पूजयेत् ।

ततः स्वस्वदिक्षु,—

इन्द्राय अग्नये यमाय नैर्ऋताय वरुणाय वायवे सोमाय
ईशानाय अनन्ताय ब्रह्मणे नमः ।

तदाह्ये,—

वज्राय शक्तये दण्डाय खड्गाय पाशाय गदायै शूलाय चक्राय
पद्माय नमः ।

ततोऽष्टादशाक्षरं दशाक्षरं वा गोपालमन्त्रं जपित्वा जपं समर्प्य
प्रणम्य स्तुयात् ।

गारुड़े,—

अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम् ।
वासुदेवं हृषीकेशं माधवं मधुसूदनम् ॥
वराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् ।
दामोदरं पद्मनाभं केशवं गरुड़ध्वजम् ॥
गोविन्दमच्युतं कृष्णमनन्तमपराजितम् ।
अधोक्षजं जगद्बीजं सृष्टिस्थित्यन्तकारिणम् ॥
अनादिनिधनं देवं त्रिलोकेशं त्रिविक्रमम् ।
नारायणं चतुर्बाहुं शङ्खचक्रगदाधरम् ॥
पीताम्बरधरं नित्यं वनमालाविभूषणम् ।
श्रीवत्साङ्कं जगत्सेतुं श्रीपतिं श्रीधरं हरिम् ॥
प्रपद्येऽहं सदा देवं सर्व्वकामप्रसिद्धये ।
यं देवं देवकी देवी वसुदेवादजीजनत् ॥
भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः ।
नामान्येतानि सङ्कीर्त्त्य गत्यर्थं प्रार्थयेत्ततः ॥
त्राहि मां देवदेवेश हरे संसारसागरात् ।
त्राहि मां सर्व्वपापघ्न दुःखशोकार्णवाद्धरे ॥
देवकीनन्दन श्रीश हरे संसारसागरात् ।
दुर्गतांस्त्रायसे[१] विष्णो ये स्मरन्ति सकृत्सराः ॥
सोऽहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात् ।

---

१ ग, दुर्वृत्तान् ।

दुष्कराय निमग्नोऽहं महत्यज्ञानसागरे ॥
त्राहि मां देव देवेश त्वामृतेऽन्यो न रक्षिता ।

इति स्तुत्वा,—

ॐ विश्वाय विश्वपतये विश्वसम्भवाय गोविन्दाय नमो नमः, इति मन्त्रेण देवं स्नापयित्वा ।

ॐ धर्माय धर्मेश्वराय धर्मपतये धर्मसम्भवाय गोविन्दाय नमो नमः इति मन्त्रेण यथाशक्ति होमं कृत्वा ॐ वसोः पवित्रमसीति मन्त्रेण घृतगुड़ाभ्यां वसोर्धारां दत्वा चन्द्रोदये प्रति—

शङ्खे तोयं समादाय सपुष्पफलचन्दनम् ।
जानुभ्यामवनीं गत्वा चन्द्रायार्घ्यं निवेदयेत् ॥
ॐ क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव ।
गृहाणार्घ्यं शशाङ्केमं रोहिण्या सहितो मम ॥
ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां पतये नमः ।
नमस्ते रोहिणीकान्त सुधावास नमोऽस्तु ते ॥

ततः प्रातरुत्थाय नवम्यां स्नात्वा भगवन्तं यथाविधि सम्पूज्य विशेषतश्चण्डिकां वस्त्रोपकरणैः पूजयित्वा "शान्तिरस्तु शिवञ्चास्तु" इति सर्व्वान् देवान् विसृज्य ब्राह्मणान् भोजयित्वा दक्षिणां दत्वा कृष्णो मे प्रीयतामिति काञ्चनवस्त्रादिकं तेभ्यो दत्वा ब्राह्मणैः सह "ॐ सर्व्वाय सर्व्वेश्वराय सर्व्वपतये सर्व्वसम्भवाय गोविन्दाय नमो नमः" इति मन्त्रेण पारणां कुर्य्यात् ।

इति जन्माष्टमीविधिः ।

नागरखण्डे,—

भाद्रे कृष्णचतुर्दश्यां युगादौ गाढ़ुजन्मः।

गङ्गायां पिण्डदानेन समं फलमवाप्नुयात्॥

भविष्ये,—

भाद्रे मास्यसिते पक्षे अघोराख्या चतुर्द्दशी।

तामुपोष्य नरो याति शिवलोकमयत्नतः॥

तस्यामनाहृते देशे जागरित्वा शिवार्चनम्।

ये कुर्व्वन्ति हरस्तेषां प्रीतये भुक्तिमुक्तिदः॥

अथ संवत्सरप्रदीपः,—

अयञ्च गौरो भाद्रः।

श्रावणे मासि या कृष्णा तिथिः स्यात्तु चतुर्द्दशी।

दयिता साघघोरस्य शिवस्य परमेष्ठिनः॥

इति शैवागमात्। यतो मुख्यचान्द्रश्रावणस्य कृष्णचतुर्द्दशी सिंहार्क एव लभ्यत इति।

तदयुक्तं यदा भाद्रो मलमासस्तदा कर्कटार्के कृष्णचतुर्द्दशी-सम्भवात्। वस्तुतस्तु शैवागमे श्रावणपदोपादानात् गौणभाद्र एव। मुख्यश्रावणकृष्णपक्षस्य गौणभाद्रीयत्वात् तेन कदाचित् कर्कटार्के-ऽप्यघोरचतुर्द्दशीति।

यत्तु,— सिंहराशिगते सूर्य्ये कृष्णपक्षे चतुर्द्दशी।

अघोरेति समाख्याता सर्व्वपापप्रणाशनी॥

इति भविष्योत्तरवचनं तत् प्रायिकसिंहार्कसम्बन्धादिति। अत्र तिथिद्वैधे व्यवस्था प्रागेवोक्ता।

मरीचिः,—

माघे नभस्यमावस्या तस्यां दर्भचयो मतः।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः॥

अयातयामा अजीर्णाः सर्व्वदा कर्म्मक्षमा इत्यर्थः। अत्र नभसीति मुख्यचान्द्रव्यवस्थया, मरीचिवचनस्य गौणश्रावणपरत्वे प्रमाणाभावात् स च कृष्णपक्षो गौणभाद्रीय एव। अतएव महार्णवे भाद्रकृत्ये रोहिण्यष्टम्यनन्तरं लिखितमिदं वचनम्। आधुनिकेन तु श्रवणानन्तरकृष्णपक्षे लिखितमशुद्धमेव। अत्रैवाशोकामावास्याव्रतमाचरन्ति पठन्ति च।

भाद्रे मासि समारभ्य यावद्वर्षचतुष्टयम्।
अमावस्यामभिव्याप्य दीपं दत्वा तु भक्तितः॥
प्रतिमासं सलक्ष्मीकं वासुदेवं समर्च्चयेत्।
नरकं सोऽन्धतामिस्रं त्यक्त्वा विष्णुपुरं व्रजेत्॥

भविष्ये,—

गुड़पूपास्तु दातव्या मासि भाद्रपदे सिते।
तृतीयायां पायसञ्च वासुदेवस्य तुष्टये॥

भविष्ये,—

शुक्लपक्षे चतुर्थ्यान्तु सिंहे चन्द्रस्य दर्शनम्।
मिथ्याभिशंसनं कुर्य्यात्तस्मात् पश्येन्न तं तदा॥

अत्र सिंह इत्युपादानात् सौरभाद्रकृत्यमिदम्।
तथा सिंहाकाधिकारे ब्रह्मपुराणे,—

वासुदेवोऽभिशस्तस्तु सुधाकरमरीचिषु।

छिन्नचतुर्थ्यामद्यापि मनुष्यानापतेत सः ॥
चतुर्थ्यामुदितं चन्द्रं प्रमादाद्दीक्ष्य मानवः ।
पठेद्धात्रेयिकावाक्यं प्राङ्मुखो वाप्युदङ्मुखः ॥
सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।
सुकुमारक मारोदीस्तव ह्येष स्यमन्तकः ॥

अद्यापि च प्रवादः मनुष्यानापतेत मनुष्यके प्रवर्त्तते इत्यर्थः । अथ चन्द्रकरस्पर्शेऽपि दोष उक्तः । धात्रेयिकावाक्यमाह सिंह इति । अनेन मन्त्रितं जलमपि पेयमित्याचारः ।

तथा संवत्सरप्रदीपे,—

पञ्चाननगते भानौ पक्षयोरुभयोरपि ।
चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन ॥

पञ्चाननः सिंहः । महार्णवेऽपि सौरकृत्यमिदमित्युक्तं । पूर्व्वोक्त ब्रह्मपुराणे चास्मिन् वचने च उदितपदाच्चतुर्थीसमये उदयाचलं प्राप्तश्चन्द्रः पञ्चम्यामपि नेक्षितव्यः तृतीयोदितस्तु चतुर्थ्यामपि द्रष्टव्य इत्यर्थः । अन्यथा वैयर्थ्यात् । न च चतुर्थ्यामुदितश्चन्द्रश्चतुर्थ्यां नेक्षितव्य इत्याद्यन्वितिश्च कल्पनीया अन्वितस्य पुनराकाङ्क्षा-विरहात् ।

तथा च शिष्टाः,—

हरिणा दीयते तास्रौ भाद्रे मासि सितासिते ।
चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन ॥

अत्र च वचनद्वये पक्षद्वयोक्तेर्भविष्यपुराणे शुक्लपक्ष इति निन्दातिशयपरम् ।

तथाच राजमार्त्तण्डे,—

भाद्रे मासि सिते पक्षे चतुर्थ्यां स्वातियोगतः ।
करोति किल्बिषं घोरं दृष्टश्चन्द्रो न संशयः ॥
करचित्राग्निऋक्षेषु हरौ सूर्य्ये चतुर्थिका ।
हरितालो समाख्याता रुद्राणीप्रीतिदा तिथिः ॥

अत्र घोरमित्यनेन शुक्ले निन्दातिशय उक्तः, अत्रापि भाद्र-मासोति सौरपरं हरौ सूर्य्ये इत्युपसंहारे संज्ञाभिधानात् । करो हस्ता, अग्निः स्वातो रुद्राणीप्रीतिदेत्यनेनाच पार्व्वतीं पूजये-दित्यर्थः । भाद्रशुक्लचतुर्थी तु शिवाख्या प्रागुक्ता ।

शुक्लपक्षमुपक्रम्य भविष्योत्तरे,—

तथा भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः ।
पञ्चालिख्य नरो नागान् कृष्णवर्णादिवर्णकैः ॥
पूजयेद्गन्धमाल्यैश्च सर्पिर्गुग्गुलुपायसैः ।
तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः ।
आसप्तमात् कुलात्तस्य न भयं नागतो भवेत् ।
तस्मात् सर्व्वप्रयत्नेन नागान् संपूजयेन्नरः ॥

तक्षकादयः प्रागुक्तनागाः । उभयदिनलाभे पञ्चमीयं षष्ठी-युतैव कार्य्या ।

पञ्चमी च प्रकर्त्तव्या षष्ठ्या युक्ता तु नारद ।

इति ब्रह्मवैवर्त्तवचनं नागपञ्चमीविषयमिति प्रागुक्तम् ।

तथा,— येयं भाद्रपदे शुक्ला षष्ठी भारतसत्तम ।

स्नानदानादिकं सर्व्वमस्यामक्षयमुच्यते ॥

भविष्ये,—

भाद्रे मासि सिते पक्षे सप्तम्यां नियमेन या।
स्नात्वा शिवं लेखयित्वा मण्डले तु यथाम्बिकाम्॥
पूजयेत्तु तदा तस्या दुष्प्रापं नैव विद्यते।

इदमेव कुक्कुटीमर्कटीव्रतमिति ख्यातम्।

भविष्ये रुद्र उवाच,—

मासि भाद्रपदेऽष्टम्यां शुक्लपक्षे नराधिप।
स्नापयित्वा तु मां भक्त्या पयसा च घृतेन च॥
अपामार्गे तु कृत्वा तु पूजां मम विधानतः।
हंसयानसमारूढ़ो मम लोकं व्रजेदिति॥

इयमेव दूर्व्वाष्टमी।

गारुड़े,—ब्रह्मन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः।
दूर्व्वां गौरीं गणेशञ्च फलाकारं शिवं यजेत्॥
फलपुष्पादिभिः सर्व्वैः शम्भुं नमः शिवाय च।
अनग्निपक्वमश्नीयान्मुच्यते ब्रह्महत्यया॥

अनग्निपक्वेन पारणमित्यर्थः।

भविष्ये,—

दूर्व्वाष्टमीव्रतं पुण्यं यः करोतीह मानवः।
न तस्य क्षयमायाति सन्तानं साप्तपौरुषम्॥
नन्दते वर्द्धते नित्यं यथा दूर्व्वा तथा कुलम्।

तस्यामष्टम्यामारभ्य कृष्णाष्टमीपर्य्यन्तं लक्ष्मीव्रतमाचरन्तीत्या-
चारः, मूलं न दृष्टमित्युपेक्षितम्।

मासि भाद्रपदे या स्यान्नवमी बहुलेतरा ।
तस्यां सम्पूज्य वै दुर्गामश्वमेधफलं लभेत् ॥

इयमेव तालनवमीति ख्याता ।

तथा,—

प्राप्ते भाद्रपदे मासि एकादश्यां सितेतरे ।
पार्श्वदानं भवेद्विष्णोर्महापूजा प्रवर्त्तते ॥

इयमेकादशी दशमीविद्धापि श्रवणायुक्ता चेदुपोष्या ।

यथाग्निपुराणे,—

दशम्येकादशी विद्धा नोपोष्या सा भवेत् क्वचित् ।
श्रवणेन तु संयुक्ता सा शुभा सर्व्वकामदा ॥

राजमार्त्तण्डे भविष्यपुराणवचनम्,—

श्रवणेन समायुक्ता मासि भाद्रपदे सिता ।
द्वादशी तु महापुण्या नाम्ना तु विजया स्मृता ॥
बुधवारेण संयुक्ता कीर्त्तिता सा महाफला ।
मध्यन्दिनगते भानौ मुहूर्त्तेऽभिजिति प्रभुः ।
यस्यां जातो दितेर्गर्भाद्विष्णुः कपटवामनः ॥
तस्यां स्नात्वा विधानेन सर्व्वतीर्थफलं लभेत् ।
अर्च्चयित्वाच्युतं भक्त्या लभेत् पुण्यं दशाब्दिकम् ॥
एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ।
न चात्र व्रतलोपः स्यादुभयोर्द्दैवता हरिः ॥

मध्यन्दिनगत इति चच दिने मध्याह्ने श्रवणायुक्तद्वादशीला-भस्तत्रैवोपवासः उभयदिने मध्याह्ने तल्लाभे वुद्धादरात् पूर्व्वदिन

एवेति। पूजापि मध्याह्न एव, बुधवारस्तु गुणफलं। दशाब्दिकमिति दशाब्दकृताच्युतार्च्चनफलं लभेत्, द्वादशीपारणलग्ने दोषमाशङ्क्याह न चेति ।

गारुड़े,—

माघि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥
कुम्भे सरत्ने सजले यजेत् सौवर्णवामनम् ।
सितवस्त्रयुगच्छन्नं छत्रोपानत्समन्वितम् ॥

तत्रायं विधिः,—

नद्यास्तीरे गृहे वा गोमयोपलिप्ते सर्व्वतोभद्रमण्डले जलपूर्ण-कुम्भं रत्नगर्भं निधाय तदुपरि सुवर्णनिर्म्मितं वामनं शालग्रामं वा संस्थाप्य नद्यादौ स्नात्वा आसने उपविश्य सङ्कल्पयेत् ।

अद्येत्यादि-दशाब्दकृताच्युतार्च्चनफलसमफलप्राप्तिकामः सर्व्व-कामावाप्तिकामो वा श्रवणद्वादशीव्रतमहं करिष्ये ।

ततो भूतशुद्धिप्राणायाम-मातृकान्यास-केशवादि-न्यासान् कृत्वा पूर्व्वोक्तविधिना द्वादशाक्षरवासुदेवमन्त्रस्य कराङ्गन्यासौ कृत्वा पीठन्यासञ्च विधाय देवं ध्यायेत् ।

पद्मश्यामः शुभ्रयज्ञोपवीती ।
सत्कौपीनः पीतकृष्णाजिनश्रीः ॥
छत्री दण्डी पुण्डरीकायताक्षः ।
पायाद्‌ध्यायावामनब्रह्मचारी ॥

इति ध्यात्वा मानसैरुपचारैरभ्यर्च्च्य अर्घ्यस्थापनं कृत्वा कुम्भे पीठ-

पूजां विधाय पुनर्ध्यात्वा आवाह्य पाद्यादिभिर्नैवेद्यान्तैरुपचारैरर्च्च-येत्। तत्र घृतपायसं सुवासितजलपूर्णान् चीन् कुम्भांश्च दद्यात्। ततः पुष्पैः प्रत्यङ्गं पूजयेत्।

यथा गारुडे,—

ॐ नमो भगवते वासुदेवाय शिरः संपूजयेत्ततः।
श्रीधराय मुखं तद्वत् कण्ठं कृष्णाय वै नमः॥
नमः श्रीपतये वक्षो भुजौ सर्व्वास्त्रधारिणे।
व्यापकाय नमः कुक्षौ केशवायोदरं बुधः॥
त्रैलोक्यपतये मेढ्रं जङ्घे सर्व्वपतये नमः।
सर्व्वात्मने नमः पादौ नैवेद्यं घृतपायसम्॥
कुम्भांश्च सोदकान् दद्यात्सागरं कारयेत्प्रिये।
एवमभ्यर्च्य देवेशं कृत्वा पुष्पाञ्जलिं वदेत्॥
नमो नमस्ते गोविन्द बुधश्रवणसंज्ञक।
अघौघसंक्षयं(?) कृत्वा सर्व्वसौख्यप्रदो भव॥
प्रीयतां विष्णुरित्युक्त्वा विप्रेभ्यः कलशान् ददेत्।
एवं संपूज्य गोविन्दं सर्व्वान् कामानवाप्नुयात्॥

ततोऽष्टाङ्गं प्रणम्य स्तुत्वा विसर्ज्जयेत्। तत्रामेव द्वादश्यां शक्र-ध्वजोत्थानम्।

भविष्ये,—

द्वादश्यान्तु सिते पक्षे मासि भाद्रपदे तथा।
शक्रमुत्थापयेद्राजा विश्वश्रवणवासवैः॥
ॐ-इन्द्रः सुरपतिः शक्रो वज्रहस्तो महाबलः।

मनवन्नाभिनो देवचक्रे प्रकाय वै नमः ॥
चन्द्रच सुरारिघ्न वज्रेण पुरन्दर।
क्षेमार्थं सर्व्वलोकानां पूजेयं प्रतिगृह्यताम् ॥
श्रवणाद्भरणीं यावत् पूजां कृत्वा समाहितः।
रात्रौ विसर्ज्जयेच्छक्रं मन्त्रेणानेन पाण्डव ॥
सार्द्धं सुरासुरगणैः पुरन्दर शतक्रतो।
उपहारं गृहीत्वेमं महेन्द्रध्वज गम्यताम् ॥
इन्द्रध्वजसमुत्थानं प्रमादाच्च कृतं यदि।
ततो द्वादशमे वर्षे कर्त्तव्यं नान्तरा पुनः।
विश्वमुत्तराषाढ़ा, वासवो धनिष्ठा ॥
राजमार्त्तण्डे,—
नवमे दिवसे दृष्टो राज्ञां शक्रो भयप्रदः।
ततोऽपाहृत्य भरणीमध्यां निशि पातयेत् ॥

## अथानन्तव्रतम्।

भाग्नेये,—
आराधिते महेन्द्रे च ध्वजाकारासु यष्टिषु।
ततः शुक्लचतुर्द्दश्यामनन्तं पूजयेद्धरिम् ॥
कृत्वा दर्भमयं देवं वारिधानीसमन्वितम्।
गन्धपुष्पादिभिर्द्देवमनन्तं काममाप्नुयात् ॥
वारुणेन समायुक्ता स्यादनन्तचतुर्द्दशी।
तदाक्षयफलं प्रोक्तमनन्तार्च्चनसम्भवम् ॥
वारुणं शतभिषा। अक्षयं कल्पान्तस्थायीति पाश्चात्याः। इदञ्च

गुणफलं, अतो दिनद्वये पूर्व्वाह्णे व्रतयोग्यकाले यत्र नक्षत्रलाभ-स्तत्रैव दिने व्रतं उभयदिने पूर्व्वाह्णे नक्षत्रलाभेऽलाभे वा युग्मा-दरेण व्यवस्था।

भविष्योत्तरे,—

अनन्तव्रतमस्त्यन्यत् सर्व्वपापहरं शुभम्।
सर्व्वकामप्रदं नृणां स्त्रीणाञ्चैव विशेषतः॥
शुक्लपक्षे चतुर्द्दश्यां मासि भाद्रपदे शुभे।
तस्यानुष्ठानमात्रेण सर्व्वपापैः प्रमुच्यते॥

अथ प्राचामनुसारतो भविष्यपुराणोक्तानन्तव्रतविधिः।

नदीतीरे गोमयेनोपलिप्ते पूर्णघटोपरि दर्भमयं देवं स्थापयित्वा स्वगृहेऽपि शालग्रामशिलायां वा सर्व्वतोभद्रमण्डले वा अनन्तं पूजयेत्।

तत्र कृतनित्यक्रियः प्रक्षालितपाणिपाद आचान्तः प्राङ्मुख उदङ्मुखो वा उपविश्य स्वस्ति वाच्य सङ्कल्पं कुर्य्यात्।

ॐ अद्येत्याद्यमुकगोत्रः श्रीअमुकदेवशर्म्माहं सर्व्वपापप्रमोचन-दारिद्र्यनाशनसर्व्वकामोपभोगतदुत्तरविष्णुलोकावाप्तिकामश्चतुर्द्दश-वर्षसमाप्यं श्रीमदनन्तव्रतं करिष्ये। इति सङ्कल्प्य भूतशुद्धिप्राणायाम मातृकान्यासान् कृत्वा सामान्यार्घ्यं विधाय गणेशं पूजयेत्।

यथा अस्त्राय फडिति ताम्रपात्रं प्रक्षाल्य नमः इति पूजयित्वा गन्धपुष्पाक्षतानि प्रणवेन दत्वा गमिति मन्त्रमष्टधा जपेत्।

ततो गणेशं ध्यायेत्।

खर्व्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं
प्रस्यन्दन्मदगन्धलुब्धमधुपव्यालोलगण्डस्थलम्।

दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरं
वन्दे शैलसुतासुतं गणपतिं सिद्धिप्रदं कर्म्मसु ॥

इति ध्यात्वा मनसा पाद्यादिभिरभ्यर्च्य गणानान्त्वेति मन्त्रेण घटे गणेशमावाहयेत् ।

भगवन् गणेश इहागच्छागच्छ तिष्ठ तिष्ठ[१] सन्निहितो भव सन्निरुद्धो भव प्रसन्नो भवेत्यावाह्य पाद्यादिभिः सम्पूज्य स्तुत्वा प्रणमेत् ।

एकदन्तं महाकायं लम्बोदरगजाननम् ।
विघ्ननाशकरं देवं हेरम्बं प्रणमाम्यहम् ॥

ततो ध्वजमारोप्य तत्रेन्द्रमावाह्य विशेषतः पाद्यादिभिरभ्यर्चयेत् ।

ॐ चतुर्दन्तगजारूढ़ो वज्रहस्तो पुरन्दरः ।
शचीपतिश्च ध्यातव्यो नानाभरणभूषितः ॥

इत्यादिपुराणीयं ध्यात्वा,

ॐ इन्द्रस्तु महसा दीप्तः सर्व्वदेवाधिपो महान् ।
वज्रहस्तो महाबाहुस्तस्मै नित्यं नमो नमः ॥

एतत्पाद्यं ॐ इन्द्राय नम एवमर्घ्यादिना पूजयेत् ।

ॐ विचित्रैरावतस्थाय भास्वत्कुलिशपाणये ।
पौलोम्यालिङ्गिताङ्गाय सहस्राक्षाय ते नमः ॥

इत्यनेन पुष्पाञ्जलित्रयं दत्वा प्रणमेत् ।

ततः कराङ्गन्यासौ कुर्य्यात् । आं अङ्गुष्ठाभ्यां नमः ईं तर्ज्जनीभ्यां

---

१ म, पुस्तके आगच्छतिष्ठेति पदयोः सकृदुक्तिः ।

स्वाहा। ऊं मध्यमाभ्यां वषट्। ऐं अनामिकाभ्यां हुं। औं कनिष्ठाभ्यां वौषट्। अः करतलपृष्ठाभ्यां फट्। आं हृदयाय नमः। ईं शिरसे स्वाहा। ऊं शिखायै वषट्। ऐं कवचाय हुं। औं नेत्राभ्यां वौषट्। अः अस्त्राय फट् इति तालत्रयं दिग्बन्धनञ्च कृत्वा अनन्तं ध्यायेत्।

पद्मासनस्थितं[1] देवं चतुर्बाहुं किरीटिनम्।
नवाम्रपल्लवाकारं पिङ्गश्मश्रुविलोचनम्॥
पीताम्बरधरं देवं शङ्खचक्रगदाधरम्।
कराग्रे दक्षिणे पद्मं शङ्खं तस्याप्यधः करे॥
चक्रमूर्द्ध्वे करे वामे गदां तस्याप्यधः करे।
दधानं सर्व्वलोकेशं सर्व्वाभरणभूषितम्॥
क्षीराब्धिमध्ये श्रीमन्तमनन्तं चिन्तयेत्ततः।

इति ध्यात्वा मनसा पाद्यादिभिः सम्पूज्य सोऽहमिति विभाव्यात्मशिरसि पुष्पं दत्त्वा अर्घ्यस्थापनं कुर्य्यात्। अस्त्राय फडिति भूमिं प्रोक्ष्य तत्र त्रिकोणमण्डलं कृत्वा तत्राधारं विन्यस्य दशकलाव्याप्तवह्निमण्डलाय नम इति सम्पूज्य तत्र शङ्खं निधाय तत्र द्वादशकलाव्याप्तसूर्य्यमण्डलाय नम इति सम्पूज्य प्रणवेन शुद्धजलेनापूर्य्य गन्धपुष्पाक्षतादीनि प्रणवेन विन्यस्य षोडशकलाव्याप्तचन्द्रमण्डलाय नम इति सम्पूज्य ऊमित्यवगुण्ठ्य अस्त्राय फडिति तालत्रयं दिग्बन्धनञ्च कृत्वा धेनुमुद्रया अमृतीकृत्य प्रणवमष्टधा जपेत्। ततः पाद्याचमनीयप्रोक्षणीपात्राणि सामान्यार्घ्यविधिना संस्थाप्य

---

१ ग, पद्मस्था०।

मर्घ्यजलं किञ्चित्तेषु दत्वा प्रोक्षणीजलेनात्मानं पूजोपकरणञ्च निरभुक्ष्य कूर्म्मे मण्डले वा पीठपूजां कुर्य्यात्।

ॐ आधारशक्तये नमः।

[1][एवं प्रणवादिनमोऽन्तेन सर्व्वेष पूजयेत्।]

एवं कूर्म्माय अनन्ताय पृथिव्यै क्षीरसागराय श्वेतद्वीपाय रत्नद्वीपाय कल्पवृक्षाय।

अग्न्यादिकोणचतुष्टये,—

धर्म्माय ज्ञानाय वैराग्याय ऐश्वर्य्याय।

चतुर्दिक्षु,—

अधर्म्माय अज्ञानाय अवैराग्याय अनैश्वर्य्याय।

मध्ये,—

शेषाय पद्माय अं सूर्य्यमण्डलाय उं सोममण्डलाय मं वह्निमण्डलाय सं सत्वाय रं रजसे तं तमसे आं आत्मने अं अन्तरात्मने पं परमात्मने ह्रीं ज्ञानात्मने नमः।

पूर्व्वादिकेशरेषु,—

विमलायै उत्कर्षिण्यै ज्ञानायै क्रियायै योगायै प्रह्व्यै सत्यायै ईशानायै। मध्ये अनुग्रहायै। ॐ नमो भगवते विष्णवे सर्व्वभूतात्मने वासुदेवाय सर्व्वात्मसंयोगयोगपद्मपीठात्मने नमः। इति पुष्पाञ्जलिना आसनं दत्वा तत्र दर्भमयमनन्तं शालग्रामं वा निधाय पुष्पाञ्जलिं गृहीत्वा पूर्व्ववदनन्तं ध्यात्वा शङ्खजलापुटेन

---

1 ग, पुस्तके [ ] चिह्नितांशो नास्ति।

तेजोरूपं स्थापयित्वा प्रणवेन मूर्त्तिं सङ्कल्प्य भगवन् श्रीमदनन्त इहागच्छागच्छ तिष्ठ तिष्ठ सन्निहितो भव सन्निरुद्धो भव प्रसन्नो भवेत्यावाहन्यादि मुद्राः प्रदर्श्य ।

ॐ आगच्छानन्त देवेश तेजोराशे जगत्पते ।
क्रियमाणां मया पूजां गृहाण सुरसत्तम ॥

इत्यावाह्य,

तस्याग्रतो दृढं सूत्रं कुङ्कुमाक्तं सुडोरकम् ।
चतुर्द्दशग्रन्थियुक्तमुपकल्प्य प्रपूजयेत् ॥
ॐ अनन्तसंसारमहासमुद्रे मग्नान् समभ्युद्धर वासुदेव ।
अनन्तरूपे विनियोजयस्व अनन्तरूपाय नमो नमस्ते ॥

इति मन्त्रेण पुष्पाञ्जलिं दत्त्वा ॐ नमोऽनन्ताय नम इति मन्त्रेण षोड़शोपचारैरर्चयेत् ।

अनन्ताय नमस्तुभ्यं सहस्रशिरसे नमः ।
नमोऽस्तु पद्मनाभाय नागाधिपतये नमः ॥ इत्यासनम् ।
पाद्यं गृहाण देवेश शङ्खचक्रगदाधर ।
सृष्टिस्थित्यन्तभूताय अनन्ताय नमोऽस्तुते ॥ इति पाद्यम् ।
सर्व्वात्मन् सर्व्वदेवेश सर्व्वव्यापिन् सनातन ।
अर्घ्यं गृहाण भगवन् कालरूपिन् नमोऽस्तुते ॥ इत्यर्घ्यम् ।
दामोदराय सर्व्वेषामाराध्याय तनूभृताम् ।
वाञ्छितार्थप्रदायेदं गृहाणाचमनं नमः ॥ इत्याचमनीयं ।
सहस्रबाहवे चैव सहस्रचरणाय च ।
सहस्रशिरसे चैव सहस्राक्षाय ते नमः ॥ स्नानीयम् ।

नारायण नमस्तेऽस्तु नरकार्णवतारण।
त्रैलोक्यव्यापकानन्त पाहि मां मधुसूदन॥ इति वस्त्रम्।
दामोदर नमस्तेऽस्तु पाहि मां भवसागरात्।
ब्रह्मसूत्रं यज्ञोपवीतं गृहाण पुरुषोत्तम॥ इति यज्ञोपवीतम्।
पूर्ववदाचमनीयम्। ॐ अनन्तसंसारेत्यलङ्करणम्।
श्रीगन्धं कुङ्कुमं दिव्यं चन्दनादिमनोहरम्।
विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम्॥ इति गन्धम्।
मल्लिकाम्भोजकह्लारकुन्दपुन्नागपाटलैः।
केतकीयूथिकापुष्पैस्तुलसीदलमिश्रितैः॥
करवीरैर्जातिपुष्पैश्चम्पकैर्वकुलैः शुभैः।
शतपत्रैश्च देवेश प्रीतो भव जनार्द्दन॥ इति पुष्पं माल्यञ्च।
वनस्पतिरसैर्दिव्यैर्गन्धाढ्यैर्गन्धवत्तमः।
आघ्रेयः सर्व्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥ इति धूपम्।
आज्यवर्त्तिसमायुक्तं वह्निना योजितं शुभम्।
गृहाण दीपकं विष्णो त्रैलोक्यध्वान्तनाशक॥ इति दीपम्।
अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम्।
मया निवेदितं तुभ्यमनन्ताय नमो नमः॥
पायसं कृशरं कौल्यं मुद्गाकञ्च तथैव च।
अपूपानि निवेद्यानि भक्ष्याणि विविधानि च॥
मया कृतानि सर्व्वाणि भगवन् प्रतिगृह्यताम्।
इति नैवेद्यम्।
ततश्चतुर्द्दशफलानि अनन्तसंसारेति मन्त्रेणोत्सृज्य दद्यात्।

पूर्व्ववत् पुनराचमनीयम्,—

पूगफलं नागपत्रं भक्त्या विरचितं विभो ।
कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम्॥ इति ताम्बूलम्।

ततो दूर्व्वाक्षतं दत्वा ।

अनन्त कामदेवेश सर्व्वकामफलप्रद ।
अनन्तडोररूपेण पुत्रपौत्रान् विवर्द्धय ॥

इति गन्धादिना डोरं पूजयेत् ।

अनन्तगुणरत्नाय विश्वरूपधराय च ।
सूत्रग्रन्थिसुसंस्थाय कामरूप नमोऽस्तु ते ॥

इति डोराभिमर्षणं कृत्वा ।

ॐ अनन्तसंसारमहासमुद्रे
मग्नान् समभ्युद्धर वासुदेव ।
अनन्तरूपे विनियोजयस्व
अनन्तरूपाय नमो नमस्ते ॥

मन्त्रेणानेन वै कुर्य्यात् सुडोरं दक्षिणे करे ।
पुमान् नारी तु बध्नीयात् डोरं वामकरे तथा ।
दारिद्र्यनाशनार्थाय पुत्रपौत्रविवृद्धये ॥
अनन्ताय इति तुभ्यं धारयाम्यहमच्युत ।

इति डोरधारणम् ।

नमोऽस्तु देवदेवाय विश्वरूपधराय च ।
सृष्टिस्थित्यन्तहेताय विश्वरूप नमोऽस्तु ते ॥

पूर्व्वडोरविमोचनम् ।

मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥

इति पूजां समर्प्य अनन्तसंसारेति मन्त्रेण नमस्कुर्य्यात् ।

अथ कथा ।

अरण्ये वर्त्तमानास्ते पाण्डवा दुःखकर्षिताः ।
कृष्णं दृष्ट्वा यथान्यायं प्रतिपूज्येदमब्रुवन् ॥

पाण्डवा ऊचुः,—

वयं दुःखाय सञ्जाताः पृथिव्यां पुरुषोत्तम ।
कथं मुक्तिर्भवेदस्माकमनन्तदुःखसागरात् ॥

श्रीकृष्ण उवाच,—

अनन्तव्रतमस्त्यन्यत् सर्व्वपापहरं शुभम् ।
सर्व्वकामप्रदं नृणां स्त्रीणाञ्चैव युधिष्ठिर ॥
शुक्लपक्षे चतुर्द्दश्यां मासि भाद्रपदे तथा ।
तस्यानुष्ठानमात्रेण सर्व्वपापैः प्रमुच्यते ॥

युधिष्ठिर उवाच,—

कृष्ण कोऽयं त्वयाख्यातो योऽनन्त इति विश्रुतः ।
किं शेषो नागराजो वा अनन्तस्तक्षकोऽपि वा ॥
वासुकिर्वाथ पद्मश्च महापद्मश्च विश्रुतः ।
परमात्माथवाऽनन्त उताहो ब्रह्म उच्यते ॥
क एषोऽनन्तसंज्ञो वै तथ्यं मे ब्रूहि केशव ।

श्रीभगवानुवाच,—

अनन्त इत्यहं पार्थ मम रूपं निबोध वै ।

आदित्यादिप्रचारेण यः काल उपपद्यते ॥
कलाकाष्ठामुहूर्त्तादि-दिनरात्रि-शरीरवान् ।
पक्षमासर्त्तुवर्षादियुगकल्पव्यवस्थया ॥
सोऽयं कालो मयाख्यातः सोऽनन्त इति विश्रुतः ।
सोऽहं कालोऽवतीर्णोऽस्मि भुवो भारावतारणात् ॥
दानवानां विनाशाय वसुदेवकुलोद्भवम् ।
अनन्तं विद्धि मां पार्थ कृष्णं विष्णुं शिवं परम् ॥
ब्रह्माणं भास्करं शेषं सर्व्वव्यापिनमीश्वरम् ।
विश्वरूपं महात्मानं सृष्टिसंहारकारणम् ॥
विष्णुरूपोह्यनन्तोऽस्मि यस्मिन्निन्द्राश्चतुर्द्दश ।
वसवोऽष्टौ द्वादशादित्या रुद्रा एकादश स्मृताः ॥
सप्तर्षयः समुद्राश्च पर्व्वताः सरितो द्रुमाः ।
नक्षत्राणि दिशो भूमिः पातालं भूर्भुवादिकम् ॥
मा कुरुष्वात्र सन्देहं सोऽहं पार्थ न संशयः ।

युधिष्ठिर उवाच,—

अनन्तव्रतमाहात्म्यं वद वेदविदाम्बर ।
किं पुण्यं किं फलं तस्य किं दानं किञ्च पूजनम् ॥
केन चादौ पुरा चीर्णं मर्त्त्यलोके प्रकाशितम् ।
एतत् समस्तं विस्तार्य्य ब्रूह्यनन्तव्रतं हरे ॥

श्रीभगवानुवाच,—

आसीत् पुरा कृतयुगे सुमन्तुर्नाम वै द्विजः ।
वशिष्ठगोत्रे चोत्पन्नः सुरूपाञ्च भृगोः सुताम् ॥

दीक्षां नामोपयेमे तां वेदोक्तविधिना ततः।
तस्याः कालेन संजाता दुहितानन्तसम्पदा ॥
ग्रीवा नाम सुग्रीवा सा वर्द्धते पितृवेश्मनि।
माता च तस्याः कालेन ज्वरदाहेन पीड़िता ॥
प्रविश्य तु नदीतोये मृता स्वर्गपुरं ययौ।
कृत्वौर्द्धदेहिकं तस्या धर्म्मोपार्ज्जनकारणात् ॥
सुमन्तुश्च ततोऽन्यां वै धर्म्मपुंसः सुतां पुनः।
उपयेमे च दुहितां कर्क्कशां नामतः सुधीः ॥
कर्क्कशा सा च दुःशीला नित्यं कलहकारिणी।
अत्यन्तमभवच्चण्डी सदा परुषभाषिणी ॥
सापि ग्रीवा पितुर्गेहे गृहार्च्चनरता बभौ।
कुड्यस्तम्भ-गृहद्वार-देहली-तोरणादिषु ॥
चतुर्विधैस्ततो वर्णैर्नीलपीतसिताश्रितैः।
स्वस्तिकैः शङ्खपद्मैश्च मार्च्चयन्ती मुहुर्मुहुः ॥
दृष्टा सुमन्तुना ग्रीवा कदाचित् प्राप्तयौवना
तां दृष्ट्वा चिन्तयामास वरान् विगणयन् श्रुति
ऋषिवर्गैः परिवृतः सुमन्तुः प्रत्यभाषत।
कन्यार्थमागतः श्रीमान् कौण्डिन्यमुनिसत्तमः
ग्रीवां ददौ सुमन्तुश्च कौण्डिन्याय शुभे दि
गृह्योक्तवेदविधिना विवाहमकरोच्च सः।
निर्वर्त्योद्वाहिकं कर्म्म प्रोक्तवान् कर्क्कशां स्त्रि
किञ्चिद्गृहे धनं देयं जामातुः पारितोषिकम्

तच्छ्रुत्वा कर्कशा क्रुद्धा प्रोत्साद्य गृहमण्डनम्[1] ॥
कवाटं सुस्थिरं कृत्वा पापत्यमवदद्‌ दृशम् ।
होमावशिष्टचूर्णेन पाथेयमकरोद्‌द्विजः ॥
कौण्डिन्योऽपि विवाहेनागमत् प्रातरेव तु ।
शीलां सुशीलामादाय गोयानेन स्वमन्दिरम् ॥
ततो मध्याह्नसमये संप्राप्तः सरितस्तटम् ।
अवतीर्य्य द्विजस्तत्र स्नानं चक्रे नृपोत्तम ॥
तस्यास्तु सरितस्तीरे गोमयेनोपलेपिते ।
ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम् ॥
चतुर्द्दश्यामर्च्चयन्तं भक्त्यानन्तं पृथक् पृथक् ।
उपगम्य शनैः शीला पप्रच्छ स्त्रीकदम्बकम् ॥
नार्य्यः किमेतन्मे ब्रूहि कस्येतद्‌ व्रतमीदृशम् ।
ता ऊचुर्योषितः सर्व्वा अनन्त इति विश्रुतः ॥
तस्यैव देवदेवस्य सर्व्वकामप्रदं व्रतम् ।
साब्रवीदहमप्येतं करिष्ये व्रतमुत्तमम् ॥
विधानं कीदृशं चास्य किन्दानं किञ्च पूजनम् ॥

नार्य्य ऊचुः,—

शुक्लपक्षे चतुर्द्दश्यां मासि भाद्रपदे व्रतम् ।
कर्त्तव्यं सरितस्तीरे तड़ागे वा सुशोभने ॥
स्नात्वानन्तं नमस्कृत्य नववस्त्रधरः शुचिः ।
शुचौ देशे समालिप्य गोमयेन विचक्षणः ॥

---

१ ख,—मङ्गलम् ।

मण्डलं कारयेत्तत्र सर्व्वतोभद्रसंज्ञकम्।
कृत्वा दर्भमयं देवं वारिधानीसमन्वितम्॥
पुष्पधूपादिभिर्देवमनन्तं पूजयेद्धरिम्।
ध्यात्वा नारायणं देवमनन्तं विश्वरूपिणम्॥

अनन्तसंसारमहासमुद्रे
मग्नान् समभ्युद्धर वासुदेव।
अनन्तरूपे विनियोजयस्व
अनन्तरूपाय नमो नमस्ते॥

मन्त्रेणानेनार्चयित्वा फलानि च चतुर्द्दश।
पूपमस्यद्दयञ्चैव घृतपक्कं निवेदयेत्॥
अर्द्धं विप्राय दातव्यमर्द्धमात्मनि योजयेत्।
चतुर्द्दशग्रन्थियुक्तं पूजयित्वा सुडोरकम्॥
अनन्तसंसारमन्त्रेण नारी वामकरे पुनः।
दक्षिणे च पुमान् कुर्य्यात् ध्यात्वानन्तं सनातनम्॥
दक्षिणां विधिवद्दत्वा विप्रान् सन्तोषयेत्तृणम्।
योऽनन्तस्य व्रतं कुर्य्याद्वर्षाणि नवपञ्च च॥
सर्व्वान् कामानवाप्यान्ते विष्णुलोकं स गच्छति।
सापि तासां कथां श्रुत्वा प्रीता बद्धा सुडोरकम्॥
व्रतञ्चक्रे तथा ताभिर्दत्तैर्गन्धादिभिस्ततः।
पाथेयशेषं विप्राय दत्वा भुक्त्वा तथैव च॥
आजगामाथ संहृष्टा गोयानेन स्वमाश्रमम्।
तेनानन्तप्रभावेन बहुगोधनसङ्कुलम्॥

गृहं तस्याः श्रिया युक्तं धनधान्यसमाकुलम्।
मित्रवर्गैः परिवृतं सर्व्वञ्चातिथिसङ्कुलम्॥
शीला माणिक्यकाञ्चीभिर्मुक्ताहारैर्विभूषिता।
दिव्यवस्त्रसमाच्छन्ना साविचीप्रतिमाऽभवत्॥
कदाचिदुपविष्टस्तु कौण्डिन्यो वह्निसन्निधौ।
शीलाया वामहस्ते तु दृष्ट्वा बद्धं सुडोरकम्॥
किमिदं डोरकं हस्ते मम वश्याय कल्पितम्।
तामपृच्छत्ततः सा तु भर्त्तारं पुनरब्रवीत्॥
जगत्पतेरनन्तस्य प्रताङ्कं सूत्रडोरकम्।
यस्य प्रसादाद्भूयिष्ठ धनधान्यं गृहे तव॥
इति शीलावचः श्रुत्वा मुनिः क्रोधपरायणः।
कोऽनन्त इति जल्पेत द्रुपदा तेन मे धनम्॥
इत्युक्त्वा चिप्रवान् वह्नौ डोरं हाहेति धावती।
शीला गृहीत्वा तच्छीघ्रं क्षीरमध्ये समाक्षिपत्॥
तेन कर्म्मविपाकेन तस्य सा श्रीः क्षयङ्गता।
गोधनं तस्करैर्नीतं गृहञ्चाग्निप्रदीपितम्॥
यच ये वै गता गेहात्ते तथैव च संस्थिताः।
स्वजनैः कलहो नित्यं वर्ज्जनं तर्ज्जनं तथा॥
अनन्ताक्षेपदोषेण दारिद्र्यं पतितं गृहे।
ततः सञ्चिन्त्य मनसा कौण्डिन्यो मुनिसत्तमः॥
अनन्ताक्षेपदोषेण मम दुर्गतिरीदृशी।
मतं नियममस्थैव ब्रह्मचर्य्यं चरन् द्विजः॥

विकल्पः प्रययौ पार्थ सोऽरण्यं जनवर्ज्जितम्।
तत्रापश्यन् महाचूतं फलितं पुष्पितं तथा॥
वर्ज्जितं पक्षिसङ्घेन कीटकैश्च विशेषतः।
तमपृच्छद्द्विजोऽनन्तः कच्चिद्दृष्टस्त्वया द्रुम॥
चूतद्रुमोऽप्युवाचैनं नानन्तो वीक्षितो मया।
एवं निराकृतस्तेन गां ददर्श सवत्सिकाम्॥
तृणमध्ये प्रधावन्तीमितश्चेतश्च पाण्डव।
सोऽब्रवीद्धेनु मे ब्रूहि किमनन्तस्त्वयेक्षितः॥
गौरप्युवाच कौण्डिन्यं नानन्तो वीक्षितो मया।
ततो व्रजन् ददर्शाग्रे गोवृषं शाद्वले स्थितम्॥
दृष्ट्वा पप्रच्छ गोस्वामिन् किमनन्तस्त्वयेक्षितः।
गोवृषस्तमुवाचैनं नानन्तो वीक्षितो मया॥
ततो व्रजन् ददर्शाग्रे रम्यं पुष्करिणीद्वयम्।
छन्नं कुमुदकह्लारैः कमलोत्पलमण्डितम्॥
एकन्तु भ्रमरैर्हंसैश्चक्रवाकैश्च सेवितम्।
अन्यं पक्षिगणैर्हीनं पद्मसौगन्धिवर्ज्जितम्॥
पुष्करिण्यौ च पप्रच्छ किमनन्तः समीक्षितः।
आवाभ्यां वीक्षितो विप्र नानन्तस्तौ समूचतुः॥
ततो व्रजन् ददर्शाग्रे गर्द्दभं कुञ्जरं तथा।
खरश्च कुञ्जरः पृष्टः किमनन्तस्त्वयेक्षितः॥
तमूचतुस्तावावाभ्यां नानन्तो वीक्षितः क्वचित्।
तस्मिन् चीर्णेऽथ निर्विण्णे कौण्डिन्ये मुनिसत्तमे॥

तपयानन्तदेवोऽपि प्रत्यक्षं समुपेत्य तम्।
वृद्धब्राह्मणरूपेण इत एहीत्युवाच ह ॥
प्रवेशयित्वा स्वपुरं गृहीत्वा दक्षिणे करे।
स्वरूपं दर्शयामास दिव्यनारीगणैर्वृतम् ॥
सिंहासने सुखासीनं शङ्खचक्रादिशोभितम्।
गदया गरुडेनापि सेवितं विश्वरूपिणम् ॥
[१][तं दृष्ट्वा स द्विजो भूमौ दण्डवन्निपपात ह।
पापोऽहं पापकर्म्माहं पापात्मा पापसम्भवः ॥
त्राहि मां पुण्डरीकाक्ष सर्व्वपापहरो भव।
अद्य मे सफलं जन्म जीवितञ्च सुजीवितम्] ॥
भक्तवाङ्मयुगाजाये मन्मूर्द्धा भ्रमरायते।
तच्छ्रुत्वानन्तदेवोऽपि ददौ तस्मै वरत्रयम् ॥
दारिद्र्यनाशनं धर्म्मं विष्णुलोकमथाक्षयम्।
प्रतिगृह्य द्विजोऽप्याह भगवन् किं मयेक्षितम् ॥
स चूतवृक्षो धेनुश्च वृषः पुष्करिणीद्वयम्।
कः खरः कुञ्जरो वापि तन्मे ब्रूहि जनार्द्दन ॥

श्रीभगवानुवाच,—

स चूतवृक्षो विप्रोऽसौ विद्वान् वै वेदगर्व्वितः।
शिष्येभ्यो नाददद्विद्यां तेनासौ तरुताङ्गतः ॥
सा गौ वसुन्धरा या तु निष्फला प्रतिपादिता।

---

१ म पुस्तके, [ ] चिह्नितसन्दर्भो नास्ति।

स इक्षुस्तव विप्रेन्द्र गोवृषो धर्म्मयेषितः॥
धर्म्माधर्म्मव्यवस्थेयं यच्च पुष्करिणीद्वयम्।
खरः क्रोधस्तथा दृष्टः कुञ्जरो धर्म्मविक्रयी॥
ब्राह्मणोऽहमनन्तोऽस्मि वनं संसारसागरः।
इत्युक्कान्तर्दधे देवः सोऽपि गत्वा स्वमाश्रमम्॥
शीलया सह धर्म्मात्मा भुक्त्वा भोगान् यथेप्सितान्।
अन्ते जगाम च मुनिर्विष्णुलोकमथाव्ययम्॥
एवं मया ते कथितं व्रतानां व्रतमुत्तमम्।
चरानन्तव्रतं तच्च वर्षाणि नव पञ्च च॥
सर्व्वदुःखानि निस्तीर्य्य मामन्ते समवाप्स्यसि।

ततो दक्षिणां दत्त्वा देवं विसृज्य ब्राह्मणाय पूपं फलानि च दत्त्वा स्वयमपि पूपं भक्षयेत्।

इति भविष्यपुराणोक्तानन्तव्रतं समाप्तम्।

---

दुर्गापूजामधिकृत्य देवीपुराणे,—

प्रौष्ठपद्याञ्च कर्त्तव्या पूजा जागरणं निशि।
महोत्सवविधानेन सौत्रामणिफलं लभेत्॥

सौत्रामणिर्यागभेदः।

भविष्ये,—

पौर्णमास्यां नभस्यस्य लोकपालान् समर्च्चयेत्।
पृथिव्या रक्षणार्थाय सर्व्वकामप्रसिद्धये॥

## अथागस्त्यार्घ्यः ।

एतच्च सौरभाद्रकृत्यम् ।

भविष्योत्तरे,—

अप्राप्ते तु रवौ कन्यां सत्रिभागैस्त्रिभिर्द्दिनैः ।
अर्घ्यं दद्युरगस्त्याय ये वसन्ति महोदये ॥
अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्द्दिनैः ।
अर्घ्यं दद्युरगस्त्याय गौड़देशनिवासिनः ॥
कन्यायामगते सूर्य्ये शेषसप्तदिनेषु च ।
अर्घ्यं दद्युरगस्त्याय यावत्कन्यां रविर्व्रजेत् ॥

दिनस्य त्रिभागो विंशतिदण्डास्तत्सहितेन दिनत्रयेण इत्यर्थः । आधुनिकैस्तु दिनत्रयस्य त्रिभागो दिनमेकं तेन चतुर्भिर्द्दिनैरित्युक्तं तन्मन्दं विशेष्यस्य दिनस्यैव त्रिभागप्रतीतेः न तु विशेषणान्तर-विशिष्टस्य गौरवात् सार्द्धप्रहरत्रयादिवत् ।

अतएव सर्व्वत्रैव तथा प्रयोगः ।

यथा— स चाधिमासकः प्रोक्तः सार्द्धसंवत्सरद्वये ।
तथा— मृगमेषा भवेच्छेषैः पादोनैः सप्तभिर्द्दिनैः ॥

महोदये उज्जयिन्यां सत्रिभागदिनत्रयमध्ये, गौड़े तु शेषदि-नत्रयमध्ये, एतदन्येषु देशेषु शेषसप्तदिनमध्येऽर्घ्यदानमित्यर्थः ।

तथाच मत्स्यपुराणम्,—

आसप्तरात्रादुदयेऽर्घ्यमस्य
दातव्यमेतत् सकलं नरेण ।

अर्घ्यदानविधिमाह राजमार्त्तण्डे,—

अप्राप्ते भास्करे कन्यां सच्छिभागे त्रिभिर्दिनैः ।
अर्घ्यं दद्यादगस्त्याय यावत् कन्यां रविर्व्रजेत् ॥
काशपुष्पमयीं रम्यां कृत्वा तु प्रतिमां मुनेः ।
प्रदोषे विन्यसेत्तान्तु पूर्णकुम्भे सुसंस्कृते ॥
कुम्भस्थां पूजयेत्तान्तु पुष्पधूपविलेपनैः ।
दध्यक्षतं बलिं दद्याद्रात्रौ कुर्य्यात् प्रजागरम् ॥
प्रभाते तां समादाय यायात् पुण्यजलाश्रये ।
निशावसाने तां न्यस्य जलान्ते प्रतिमां मुनेः ॥
अर्घ्यं दद्यादगस्त्याय अर्घ्यं दद्युर्द्दिजातयः ।
अगस्त्यः खनमानेति पठेयु र्मन्त्रमुत्तमम् ॥
यथालाभं कृतार्घ्याश्च सर्व्वे वर्णाश्च भक्तितः ।
अर्घ्यं दद्युरगस्त्याय शूद्रे मन्त्रविधिस्त्वयम् ॥
काशपुष्पप्रतीकाश अग्निमारुतसम्भव ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥
पुष्पाञ्जलिमुपादाय देवर्षिं प्रणमेत्ततः ।
वातापिर्भक्षितो येन शोषितो येन सागरः ।
लोपामुद्रापतिः श्रीमान् योऽसौ तस्मै नमोऽस्तु ते ॥
येनोदितेन पापानि प्रशमं यान्ति साधवः ।
तस्मै नमोऽस्त्वगस्त्याय विन्ध्यदर्पापहारिणे ॥
अर्घ्यं दत्त्वा विधानेन नरः कुम्भोद्भवाय च ।
त्यजेदगस्त्यमुद्दिश्य फलमेकं मनोहरम् ॥

बीजपूरं नारिकेलं रम्भां जातीफलं तथा ।
खर्ज्जूरं दाड़ीमं विल्वं फलान्येतानि वर्ज्जयेत् ॥
ततोऽन्नं भोजयेद्विप्रान्[१] घृतपायसमोदकैः ।
गां सुवर्णञ्च वासांसि तेभ्यो दद्याच्च दक्षिणाम् ॥
सप्तवर्षाणि दत्वार्घ्यं विधानेन द्विजातयः ।
वेदान्नारीं पशून् पुत्रान् धर्म्मारोग्यमवाप्नुयुः ॥
"विप्रो यथालाभमुपाकृतार्घ्यः
प्राप्नोति वेदान् प्रमदाञ्च पुत्रान् ।
क्षत्रो महीं भूमिधनञ्च[२] वैश्यः
शूद्रः सुखं धर्म्मफलञ्च सर्व्वे ॥

मात्स्ये,—

अनेन विधिना यस्तु अगस्त्यार्घ्यं प्रदीयते ।
इन्द्रलोकमवाप्नोति रूपारोग्यसमन्वितः ॥
यावदायुश्च यः कुर्य्यात् स परं ब्रह्म गच्छति ।

जलान्ते जलमध्ये तां काशपुष्पमयीं प्रतिमां निम्नावधाने उपरि न्यस्य प्रक्षिप्य इत्यर्थः । द्विजातयो ब्राह्मणक्षत्रियवैश्याः । ॐ अगस्त्यः खनमानेति मन्त्रेणार्घ्यं दद्युः स्त्रीशूद्रौ तु काशपुष्पप्रतीकाशेत्यादि मन्त्रेणेति ।

मन्त्रो यथा,—

ॐ अगस्त्यः खनमानः खनित्रैः
प्रजा मपत्यं बलमीहमानः ।

१ ख पुस्तके, विप्रान् । १ ग पुस्तके, भूरिधनञ्च ।

उभौ वर्णाद्युषिद्युतेजाः
पुपोष देवेष्वाग्निशो जगाम ॥

बीजपूरादिफलत्यागस्तु यथाक्रममेकैकं वत्सरं वर्षमित्यर्थः ।

## अथाश्विनकृत्यम् ।

देवीपुराणे,—

एकाहमपि यो भक्त्या कन्यासंस्थे दिवाकरे ।
पूजयित्वा शिवाचक्रं दीपानुद्दीपयन्ति च ॥
ते लभन्ते शुभान् भोगानायुरारोग्यसम्पदः ।

शिवाचक्रं दुर्गासमूहं नवदुर्गा इत्यर्थः ।

तथा,—

घृताभिषेकं यः कुर्य्यादहोरात्रं नराधिप ।
सहस्रधारेण भाण्डेन भगवत्या विचक्षणः ॥
मासि चाश्वयुजे वीर सर्व्वपापैः प्रमुच्यते ।

विष्णुधर्म्मे,—

आश्विने घृतदानेन रूपवानभिजायते ।

स्कन्दपुराणे,—

योऽपि चाश्वयुजं मासमेकभक्तेन तिष्ठति ।
वाणिज्यन्तु भवेत्तस्य कृषिः पशुगणास्तथा ।

भविष्यपुराणे,—

कन्यां गते सवितरि कृष्णपक्षेऽष्टमी च या ।
तस्यां हरं समभ्यर्च्य सर्व्वान् कामानवाप्नुयात् ॥

सर्व्वमिदं सौरकृत्यम् । तथा,—

आश्विने कृष्णपक्षस्य चतुर्थ्यां रात्रियोगतः।
तुगाय संस्थितः पूज्यो राजा दशरथः स्त्रिया॥
तत्र दुर्गा च संपूज्या सर्व्वसौभाग्यवृद्धये।

अत्र मासः पौर्णमास्यन्त एव तिथिकृत्यत्वात्।

## अथाश्वयुक् कृष्णपक्षः।

ब्रह्मपुराणे,—

अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्य्याद्दिने दिने।
त्रिभागहीनं पक्षं वा त्रिभागन्त्वर्द्धमेव वा॥
न सन्ति पितरश्चेति कृत्वा मनसि यो नरः।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिवन्ति ते॥
यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः।
तावत् श्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तदा॥

अत्राश्वयुक् शब्दः पौर्णमास्यन्तमासपरः न तु मुख्यचान्द्रपरः, ब्रह्मपुराणे पौर्णमास्यन्तमासेन समस्ततिथिकृत्याभिधानात्। निर्णीतञ्च

आश्वयुज्याञ्च कृष्णायां त्रयोदश्यां मघासु च।

इति ब्रह्मपुराणे एवाश्वयुक् पौर्णमास्यन्तपरत्वम्। दर्शान्ताश्विने मघायोगासम्भवात् प्रौष्ठपद्यूर्द्धं कृष्णत्रयोदशीत्यादिवचनाच्च।

तथा विष्णुधर्म्मोत्तरे,—

उत्तरादयनाच्छ्राद्धं श्रेष्ठं स्याद्दक्षिणायने।
चातुर्मास्यञ्च तत्रापि प्रसुप्ते केशवे हितम्॥
प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः।
पञ्चम्यूर्द्धञ्च तत्रापि दशम्यूर्द्धं ततोऽप्यति॥

इत्यत्र प्रौष्ठपद्याः परः पक्ष इत्यनेन पौर्णमास्यन्तमासविवक्षावोध-नस्यापयपक्षं व्यक्तमुक्तं एतेन सौरवादिनोऽपि निरस्ताः।
तथाच कार्ष्णाजिनिः,—

शक्रध्वजनिपाताद्धो यः स्यात् पक्षस्तु पञ्चमः।
आषाढ्याः सोऽपरः पक्षस्तत्र श्राद्धं विधीयते॥
पुत्त्रमायुर्धनं धान्यमारोग्यं भूतिमेव च।
प्राप्नोति पञ्चमे दत्त्वा श्राद्धं कामांस्तथापरान्॥
एतानेव हि हिंसन्ति पञ्चमं यो व्यतिक्रमेत्।
तस्मान्नातिक्रमेद्विद्वान् पञ्चमे पैतृकं विधिम्॥

भाद्रशुक्लद्वादश्यां शक्रध्वजोत्थानं तदनन्तरकृष्णचतुर्थ्यां शक्र-ध्वजनिपात इति प्रागुक्तम्। एतानेव हीत्यनेन नित्यत्वं दर्शितं हिंसन्ति पितर इति शेषः।
जावालः,—

अगतेऽपि रवौ कन्यां श्राद्धं कुर्व्वीत यत्नतः।
आषाढ्याः पञ्चमः पक्षः प्रशस्तः पितृकर्म्मसु॥

जातूकर्णः,—

आषाढीमवधिं कृत्वा यः स्यात् पक्षस्तु पञ्चमः।
श्राद्धं तत्र प्रकुर्व्वीत कन्यां गच्छतु वा नवा॥

अत्र मध्येऽधिमासपातेऽपि तस्याधिकत्वाच्छ्राद्धानर्हत्वाच्च तं मासं विहाय पंञ्चमः पक्षो मन्तव्यः। कन्यां न वा गच्छत्विति यदुक्तं पक्षस्य कन्यासम्बन्धेऽपि श्राद्धयोग्यकालस्य कन्यायामसम्भवे सत्येव मन्तव्यम्। अन्यथा सिंहे सकलपक्षसमाप्तौ तस्य मलमासा-

न्तःपातादश्वयुक् कृष्णपक्षलाभावः स्यात्। तेन कन्यां गच्छतु वा नवेत्यनेन कन्यागतरविसम्बन्धेन पञ्चमपक्षस्य प्राशस्त्यं ध्वनितम्। यथा भविष्यपुराणवचनम्,—

कन्यां गते सवितरि पितृराजानुशासनात्।
तावत् प्रेतपुरी शून्या यावद्वृश्चिकदर्शनम्॥
ततो वृश्चिकमायाते निराशाः पितरो नृप।
पुनः स्वभवनं यान्ति शापं दत्वा सुदारुणम्॥
हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन्।
पञ्चम्या उत्तरे दद्यादुभयो र्वंशयो र्जलम्॥

हंसे सूर्य्ये वर्षास्विति व्यृतुमतेन स्वर्णमिव स्वर्णम् पितृमातृकुलस्यावश्यं परिशोध्यमित्यर्थः।

अयञ्च श्राद्धान्तरकल्पने विधिगौरवभिया अश्वयुक्कृष्ण-पक्षेत्यादिना ब्रह्मपुराणोक्तपक्षश्राद्धे कन्यासम्बन्धेन गुणफल-विधिः।

कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा।
नवम्यां बोधयेद्देवीं गीतवादित्रनिस्वनैः॥

इति देवीपुराणवचनाद्देवीबोधने कन्यासम्बन्धवदिति। नचा-वैपरीत्याशङ्का भविष्यपुराणे कन्याविधौ पक्षश्राद्धादिकल्पानामनु-भेदात् कन्यां गच्छतु वा नवेत्यादिवचनाच्च। न च पृथक् प्रत्यवा-योक्तेः पृथग्विधिरिति वाच्यं, पुराणभेदेन प्रत्यवायस्य पृथगुक्तेरौचि-त्यात् न तु वास्तव्यं पृथक्त्वं।

दिने दिने इति दिनपदमत्र तिथिपरं नक्तघोरात्रपरं

चान्द्रमासावयवस्य कृष्णपक्षस्य पञ्चदशतिथ्यात्मकत्वेन तत्सम्बन्धितयो-पन्यस्तस्य दिनपदस्य तिथिपरत्वनियमात्।

यथा विष्णुधर्मे,—

तिथिनैकेन दिवसश्चान्द्रमाने प्रकीर्त्तितः।
तथान्यमुनीनां परिभाषाविधानमनर्थकं स्यात्॥

अतएव,—

सौरसंवत्सरस्यान्ते मानेन[1] शशिजेन तु।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन॥

इत्यादयः प्रयोगाः।

षष्ठ्येकादशीत्रयोदशीभिः पक्षस्य विभजनेन तिथिपर्य्यवसानाच्च। अतएव "पञ्चम्यूर्द्धञ्च तत्रापि दशम्यूर्द्धं ततोऽप्यति" इति विष्णुधर्मे तिथिमादाय कल्पे व्यवस्थोक्ता अन्यथा अम्बुघटश्राद्धवद्वत्सरञ्च क्रियमाणतया नित्यत्वादर्घ्यावाहनादिवर्ज्जनप्रसङ्गः स्यात्।

एतेन तिथिह्रासादेकस्मिन् पक्षे चतुर्द्दशत्वादह्नां चतुर्द्दशश्राद्धानि तिथिवृद्धावहर्वृद्धौ षोड़श स्युः, तत्र कदाचित् एकस्यान्तिथौ श्राद्धद्वयं कदाचिच्च श्राद्धाभावः इति श्रीदत्तादीनां मतमपास्तं। ततश्च वीप्सायाः पञ्चदशतिथिष्वेव पञ्चदशश्राद्धानि।

अत्र चैकस्मिन् दिने तिथिद्वयलाभे श्राद्धद्वयं कदाचिद्दिनद्वये ऽप्येकतिथिलाभे एकदिने श्राद्धाभाव इति। अतएव वीप्सावलाच्च-तुर्द्दशीश्राद्धमप्यत्र कार्य्यम्।

---

[1] ग, मासेन।

अथ केचित्,—

सामान्यकृष्णपक्षप्राप्तं श्राद्धं अनूद्य ब्रह्मपुराणे तदेव श्राद्धमत्र-युक्तकृष्णपक्षगोचरतया दिने दिने विधीयते न तु विशिष्टविध्यन्तरं मुख्यविध्यन्तरकल्पनागौरवात्। ततश्च,— "कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्द्दशीं" इति मनुवचनाच्चतुर्द्दशीवर्ज्जनमप्यत्र सिद्धं तदनुवादकत्वादश्वयुक्विधेरित्याहुः।

तन्मन्दम्। प्रकरणभेदेन विधिभेदादनुवादाविषयत्वात्।

किञ्च,—

अथ श्राद्धममावास्यायां पितृभ्यो दद्यात् पञ्चमीप्रभृति वा कृष्णपक्षस्य यदहः सम्पद्यते तदहः पूर्व्वेद्युर्ब्राह्मणानामन्त्र्येति गोभिलाद्यनेकमुनिवचनादमावास्यायामेव मुख्यविधिः तत्राशक्तिसम्भावनायामानुकल्पिकः कृष्णपक्षविधिरिति प्रपञ्चितं श्राद्धकौमुद्याम्।

ततश्चानुकल्पस्यानुवादायोग्यत्वात् प्रधानस्याश्वयुग्विधेरनुकल्पत्वप्रसङ्गाच्चाश्वयुक्कृष्णपक्षे पृथगेव विधिरिति सिद्धं चतुर्द्दशीश्राद्धम्।

यत्तु,—

विषशापद्रव्याद्धितिर्य्यक्ब्राह्मणघातिनाम्।
चतुर्द्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता॥

इति मरीचिवचनं तत् सामान्यकृष्णपक्षप्रकरणपाठादाश्वयुक्कृष्णपक्षश्राद्धविषयम्। अन्यथा चतुर्द्दश्यां संक्रान्त्यादिश्राद्धमपि न स्यात्। यथाच श्राद्धचिन्तामणावुक्तं,—

आश्विनचतुर्द्दश्यां प्रश्नस्तथापि श्राद्धप्राप्तौ।
आहवेषु विपन्नानां ब्रह्मविद्युत्पातिनाम्।

चतुर्द्दश्यां भवेत् पूजा अमावस्यान्तु कामिकी ॥

'इत्याश्विनापरपक्षप्रकरणस्थदेवीपुराणवचने अत्तत्र पुनः श्राद्ध-विधानं तदाश्विनचतुर्द्दश्यां शस्त्रहतानामेव श्राद्धं नाशस्त्रहताना-मिति परिसंख्यार्थं अन्यथा वैयर्थ्यादिति।

तदप्ययुक्तं अशक्त्या पञ्चादिकल्पानामकरणे आश्विनचतुर्द्दश्यां शस्त्रहतश्राद्धमशक्तेनाप्यवश्यं कर्त्तव्यमिति विधिरेव न तु दोषत्रय-दुष्टा परिसंख्येति। अथवा अन्यत्र चतुर्द्दश्यां शस्त्रहतश्राद्धस्य प्राशस्त्यमुक्तं आश्विने तु नित्यविधिरिति अतएव अमावस्यान्तु कामिकीत्युक्तं। आश्विनचतुर्द्दश्यामकरणे प्रत्यवायतादवस्थ्यादिति सिद्धं पक्षदशश्राद्धम्।

यत्तु,—

दिव्यभौमान्तरीक्षाणि चराणि स्थावराणि च।
पिण्डमिच्छन्ति पितरः कन्याराशिगते रवौ॥
कन्यां गते सवितरि यान्यहानि तु षोड़श।
क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत्॥
राजसूयाश्वमेधाभ्यां यदीच्छेत् सदृशं फलम्।
अप्यम्बुमूलशाकाद्यैः पितॄन् कन्यागतेऽर्चयेत्॥

इति ब्रह्माण्डपुराणवचनं, तत् सूर्य्यसिद्धान्तवचनैकवाक्यतया कन्यायाश्चतुर्द्दशदिनादूर्द्धं शेषेषु षोरषोड़शदिनेषु शुक्लकृष्णपक्षसाधा-रणेषु काम्यश्राद्धान्तरविधायकं नित्यत्वे प्रमाणाभावात् फलश्रुतेश्च।

---

१ ख, ग, इत्यादिनापर।

यथा सूर्य्यसिद्धान्ते,—

तुलादिषडशीत्यह्नां षडशीतिमुखं क्रमात् ।
तच्चतुष्टयमेव स्यात् द्विस्वभावेषु राशिषु ।
षड्विंशे धनुषो भागे द्वाविंशेऽनिमिषस्य च ॥
मिथुनेऽष्टादशे भागे कन्यायास्तु चतुर्द्दशे ।
अत ऊर्द्धन्तु कन्याया यान्यहानि तु षोड़श ॥
क्रतुभिस्तानि तुल्यानि पितृभ्यो दत्तमक्षयम् ।
एकस्मिन्नब्दे षष्ठ्यधिकशतत्रयमंशका भवन्ति ॥

तत्र तुलासंक्रममारभ्य षड़शीतिगणनयांशचतुष्टयमापूर्य्य कन्या-शेषषोड़शांशा अवशिष्यन्ते, द्विस्वभावेषु द्व्यात्मकेषु तत्र चतसृणां षड़शीतीनां पूरणस्थानमाह षड्विंशे इति, अनिमिषो मीनः।

त्रिभागहीनमिति तृतीयो भागस्त्रिभागः त्रिभागहीनं षष्ठ्यादिकस्यः त्रिभागमेकादश्यादिः, अत्र कालात्यन्तसंयोगे द्वितीया तेन प्रतितिथौ श्राद्धम् ।

अत्र केचित्,—

पञ्चमीप्रभृति वा कृष्णपक्षस्येति गोतमवचनात् ।
कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्द्दशीम् ।

इति मनुवचनाच्च ।

किञ्चिन्न्यूनाधिके त्रिभागपदात् पञ्चम्यादिदशम्यादिकल्पावाहुः। तत्र गोतममनुवचनयोः सामान्यकृष्णपक्षोपक्रमान्नाश्वयुक्कृष्णपक्ष-परत्वं ततश्च बीजाभावेन लक्षणाभावात् पञ्चम्यादेस्त्रिभागहीनादि-पदार्थत्वानुपपत्तिरिति ।

अतएव विष्णुधर्मे,—

प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः ।

पञ्चम्यूर्द्धञ्च तत्रापि दशम्यूर्द्धं ततोऽप्यति ॥ इत्युक्तं ।

यच्च,—

भौमर्क्षीं तिथिमासाद्य यावच्चन्द्रार्कसङ्गमः ।

इति देवीपुराणवचनं तदश्वयुक्कृष्णपक्षे पञ्चम्यादिषु कन्यासम्बन्धेन श्राद्धस्य प्राशस्त्यकथनमात्रपरं न तु कल्पविधायकं पक्षादिकल्पान्तराणामनुक्तत्वात् ।

अर्द्धमेववेति त्रिभागार्द्धं त्रयोदश्यादिकल्पः, न तु पक्षार्द्धमष्टम्यादीति केषाञ्चिद्व्याख्यानं युक्तं सन्निधानेन त्रिभागस्य बुद्धिस्थत्वात् । न च विभज्यमानतया बुद्धिस्थीकृतस्य पक्षस्य परित्यागे को हेतुरिति वाच्यं, उत्तरोत्तरलघुकालोपदेशस्य हेतुत्वात् अतएव एवेत्यनेनास्यात्यन्ताशक्तकल्पत्वं सूचितम् ।

अतएव विष्णुधर्मे,—

पञ्चम्यूर्द्धञ्च तत्रापि दशम्यूर्द्धं ततोऽप्यति ।

इति मध्येऽष्टम्यादिकल्पो नोक्तः ।

एवञ्च एतेषां कल्पानां दर्शनात् केषाञ्चिदमावास्यामात्रकरणपक्षो निरस्तः किन्तु तत्र प्रतिमासविहितं पार्व्वणं कर्त्तव्यमेव प्रतिमासविधेरश्वयुक्विधिभिन्नत्वात् न चोक्तिबाधाशङ्का सम्भूयसमुच्चरणाभावात् ।

न च पदाहवनीयवत् विशेषदर्शनात् सामान्यशास्त्रस्य तदितरपरत्वमस्त्विति वाच्यं प्रतिमासविधेरमावस्याविषयकत्वेनाश्वयुग्विधेस्तु

पञ्चविषयकत्वेन भिन्नविषयत्वात् सामान्यविशेषाभावात्, अमावास्या-विधिस्तु श्राद्धकौमुद्यां निरूपित एव ।

किञ्च प्रकरणभेदेन विधिभेदादुपजीव्योपजीवकभावाभावाच्चि-न्नविषयता अन्यथा पौषादिमासत्रयेऽष्टकाविधानात् प्रतिमासविधे-स्तदितरत्वप्रसङ्गः ।

एवञ्च पञ्चश्राद्धे कृते प्रतिमासविहितं पार्व्वणमनुषङ्गेन गतार्थं तत्रैवामावास्यायां कर्त्तव्यमिति ध्येयम् । न सन्तीति प्रकरणे प्रत्यवायाभिधानं दर्शितम् । अत्र सम्भवति लघूपाये गुरूपायस्या-नुष्ठानलक्षणाप्रामाण्यभिया पञ्चश्राद्धादिकल्पानामिच्छाविकल्पास-म्भवात् शक्तितारतम्येन व्यवस्थितो विकल्पः । शक्तस्य समस्तः पञ्चः अशक्तस्य त्रिभागहीनः पञ्चः अशक्ततरस्य त्रिभागः अशक्ततमस्य त्रिभागार्द्धमिति । एतेन शक्तिभेदात् समस्तपञ्चाकरणेऽपि प्रत्यवा-याभावो वचनादिति ध्येयम् ।

शक्तिस्तु शरीरपाटवश्राद्धोचितद्रव्यसम्पदादिः । एवञ्च यो यत्र शक्तस्तदकरणे तस्य प्रत्यवाय एव । यथा मनुः,—

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ॥

साम्परायिकं पारलौकिकं । न चात्र फलभ्रमकल्पनया कल्प-व्यवस्था पञ्चविधिमुपजीव्यैव त्रिभागहीनादिकल्पविधिप्रवृत्तेः ।

एतानेव हि हिंसन्ति पञ्चमं यो व्यतिक्रमेत् ।

इत्यादिवचनैः पञ्चश्राद्धाकरणे प्रत्यवायश्रवणाच्च । तस्माच्छक्ति-तारतम्येन व्यवस्थेति ।

अत्र केचित्,—

आरब्धे पञ्चश्राद्धे कुत्रचिद्दिने श्राद्धविघ्ने सति पञ्चश्राद्धा-निष्पत्त्या अन्तेऽपि कल्पा न कर्त्तव्या विकल्पवशेनैकतरनिश्चया-दन्यनैराश्येन पुरुषप्रवृत्तेरित्याहुः।

तदन्ये न सहन्ते उभयोर्युगपदुपस्थितत्वादिच्छाविकल्प एवान्य-नैराश्येनैकतरनिश्चयः प्रवृत्तौ हेतुः, व्यवस्थितविकल्पे तु न तथा व्यवस्थावशेनोभयोर्युगपदुपस्थितत्वाभावात्। किन्तु शक्तितार-तम्यान्मुख्यकल्पानुकल्प[1]भावेन व्यवस्था तस्याश्च क्रमिकत्वान्मुख्यकल्पा-सम्भवे स्वयमेवानुकल्पो व्यवतिष्ठते अतो मुख्यकल्पविघ्ने कल्पान्तरं कर्त्तव्यमेवेति।

अभियुक्तास्तु,—

दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वेति मनूक्तनित्यश्राद्धवत् दिने दिन इति वीप्साश्रुत्या प्रतितिथावेव पृथक् पृथक् श्राद्धावग-मात् प्रतितिथौ श्राद्धाकरणे "श्राद्धं न कुरुते तत्र" इति वचनेन पृथक् प्रत्यवायावगमाच्च अनुज्ञावाहनदक्षिणाविसर्ज्जनादीनां पृथक् पृथक्त्वाच्च पञ्चदशश्राद्धानां स्वातन्त्र्ये सिद्धे आरब्धपञ्चश्राद्धेन पुंसा कदाचिन्मध्येऽशौचज्वरादिना विघ्ने सत्यधिकाराभावादकरणेऽप्य-जातप्रत्यवायेन तदितरदिनेषु कृतेषु श्राद्धेषु यावज्जीवनित्यश्राद्ध-वत् पञ्चश्राद्धमप्यविरुद्धं, न च पृथक् कल्पविधानं तर्हि व्यर्थं इति वाच्यं, द्रव्याद्यसम्पत्त्या सकलपञ्चश्राद्धाशक्तौ प्रत्यवायपरीहारार्थं

---

[1] ग, ०कल्पे।

कल्पान्तरविधानमिति। युक्तं चैतत्। अश्वयुक्कृष्णपक्षे एकस्य कल्पस्याप्यसत्त्वौ किं स्यादित्यत आह यावच्च कन्यातुलयोरिति। अत्र विध्यन्तरकल्पनभिया कन्यादिवाकरस्थित्या तत्सम्बन्धस्यावश्यकत्वेनाश्वयुक्कृष्णपक्षानुकल्पतया तत्प्राप्तकृष्णपक्षविधानौचित्यात्[1]।

प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः।
मधुप्लुतेन यः श्राद्धं पायसेन समाचरेत्॥

इति पूर्व्ववचने कृष्णपक्षश्रवणाच्च।

अत्र[2] कन्यातुलयोर्दिवाकरस्थितेः क्रमबिल्लात् क्रमाच्छ्राद्धस्य काल इत्यन्वयादश्वयुक्कृष्णपक्षे श्राद्धाकरणे कार्त्तिककृष्णपक्षे यस्यां कस्याञ्चित्तिथौ श्राद्धं कार्य्यं, नचात्रापि कल्पव्यवस्था प्रमाणाभावात्। त्रयोदश्यादिकल्पस्याप्यसत्त्वावत्यन्तापत्कल्पतया कार्त्तिकविधिश्चेति। अत एवामावास्यायामतिप्राशस्त्यमुक्तं भविष्यपुराणे,—

येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि।
तस्यां दद्यान्न चेद्दत्तं पितॄणाञ्च महालये॥

पितॄणां महस्य उत्सवस्यालयो महालयोऽश्वयुक्कृष्णपक्षः, पञ्चदशी अमावास्या न तु पौर्णमासी, भुवि पृथिव्यां दीपान्वितेति कृत्वा ख्यातिकथनात्।

तथाचामावस्यामधिकृत्य ब्रह्मपुराणे,—

दीपमालाश्च कर्त्तव्याः शक्त्या देवगृहेषु च।
रथ्यापणश्मशानेषु नदीपर्व्वतधातुषु॥

---

१ ग पुस्तके, बाधानौचित्यात्। २ ख, तत्र।

तथा,—

यमलोकं परित्यज्य आगता ये महालयम्[१]।
उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते॥

इति कार्त्तिकामावास्यायामुल्कादानमन्त्रलिङ्गाच्च। अथच प्रतिमासपार्व्वणस्य प्राप्तलेऽप्यस्वयुक्कृष्णापचाकरणे अग्रकस्यावश्यानुष्ठानार्थं पुनः कार्त्तिकविधिः। अथवा तन्त्रेण श्राद्धद्वयविधानार्थं पुनर्विधिः। इति।

## अथ मघात्रयोदशी।

अथ केचित्,— केवलत्रयोदश्यां विधिः, मघायोगः फलातिशयार्थः, मनुविष्णुभ्यां केवलत्रयोदशीविधानात्।

यथा मनुः,—

अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम्।
पायसं दधिसर्पिर्भ्यां प्राक्च्छाये कुञ्जरस्य च॥

दद्यात् ददातीत्यर्थः।

विष्णुः,—

अपि जायेत योऽस्माकं कुले कश्चिन्नरोत्तमः।
प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः॥
मधुप्लुतेन यः श्राद्धं पायसेन समाचरेत्।

तन्न, एतयोर्मनुविष्णुवचनयोः पितृगाथात्वेनानुवादतया स्वतः प्रामाण्याभावात्, अनुवादस्य हि विध्येकवाक्यतया प्रामाण्यमित्युक्त

---

१ ख, महालये।

मनुवाद्दाधिकरणे तत्र कृप्त[1][विधिग्रेषत्वे सम्भवति कस्य]विधि-ग्रेषत्वमन्याय्यं अतः कृप्तविध्यनुरूपैर्वस्तुभिरनेन क्रियते। विधौ च मघायोगः श्रूयते ।

यथा शङ्खः,—

प्रौष्ठपद्यामतीतायां मघायुक्तां चयोदशीम् ।
प्राप्य श्राद्धन्तु कर्त्तव्यं मधुना पायसेन च ॥

ब्रह्मपुराणे,—

श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः ।
चयोदश्यां प्रयत्नेन वर्षासु च मघासु च ॥

वर्षामघाशब्दौ नित्यबहुवचनान्तौ ।

मनुः,—

यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु चयोदशीम् ।
तदप्यक्षयमेव स्याद्वर्षासु च मघासु च ॥

वर्षासु मघासु च चयोदशीकाले यत्किञ्चिदल्पमपि मधुना मिश्रं दद्यात्, हेतुमाह तदप्यक्षयमेवेति। अन्यथा मनुवचने चयो-दशीमात्रश्रवणात् प्रावृट्कालोऽपि फलातिशयार्थः स्यात् तथा विष्णुवचने प्रावृट्मात्रश्रुतेः प्रौष्ठपद्यनन्तरत्वमपि फलार्थं स्यात् ।

तथा,—

पिता पितामहश्चैव तथैव प्रपितामहः ।
उपासते सुतं जातं शकुन्ता इव पिप्पलम् ॥
मधुमांसैश्च शाकैश्च पयसा पायसेन च ।

---

१ ख पुस्तके, [ ] चिह्नितांशो नास्ति ।

एष नो दास्यति श्राद्धं वर्षासु च मघासु च ॥

वशिष्ठवचनाद्वर्षासु मघामात्रेऽपि श्राद्धं स्यात्।

न च विष्णुधर्म्मोत्तरे,—

प्रौष्ठपद्यामतीतायां तथा कृष्णात्रयोदशीम्।

एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ॥

इति नित्यकालविधायकवाक्ये केवलत्रयोदशीविधानमिति वाच्यम्।

उपदेशविधिमुपजीव्यैवाङ्गविधिप्रवृत्तेः शङ्खाद्युक्तमघाविशिष्टोपदेशविध्यनुरूपमेव कालरूपमङ्गमनूद्य तस्य नित्यता अनेन वचनेन विधीयते इत्यत्रापि मघाविशिष्टत्वमूहनीयम्।

न च,— त्रयोदशी नभस्ये या कृष्णा तस्यां समर्च्चयेत्।

पितॄण् पायसदानेन मधुना सर्पिषा तथा ॥

इति संवत्सरप्रदीपलिखितवचने केवलत्रयोदश्यामपि विधिः श्रूयते इति वाच्यं, एतस्य वचनस्यामूलत्वात् समूलत्वेऽपि त्रयोदश्यां श्राद्धमेको विधिरपरस्य मघायोगे फलातिशयार्थ इति कल्पनागौरवात् बहुवाक्यादराच्च एकदेशकीर्त्तनपरमेव वचनं मन्तव्यम्। तस्मान्नानामुनिवचनैकवाक्यतया मघायुक्तायां पौष्ठपद्यनन्तरितकृष्णात्रयोदश्यां पायसादिद्रव्येण श्राद्धं कुर्य्यादित्येक एव शङ्खोक्तविधिः। तथा महाभारतादिवचनेष्वनुवादरूपेष्वपि मघायोगः श्रूयते।

यथा महाभारते,—

अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम्।

मघासु सर्पिषा युक्तं पायसं दक्षिणायने ॥

याज्ञवल्क्यः,— यद्ददाति गयास्थश्च सर्व्वमानन्त्यमश्नुते ।
तथा मघात्रयोदश्यां वर्षासु च न संशयः ॥

कुञ्जरच्छायायोगस्तु फलातिशयार्थं एव यथा ब्रह्मपुराणे,—

योगो मघात्रयोदश्यां कुञ्जरच्छायसंज्ञितः ।
भवेन्मघायां संस्थे च शशिन्यर्कें करे स्थिते ॥
आश्वयुज्याश्च कृष्णायां त्रयोदश्यां मघासु च ।
प्रावृट्कृतौ यमः प्रेतान् पितृंश्चाथ यमालयात् ॥
विसर्ज्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम् ।
क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतञ्च स्वकं कृतम् ॥
काङ्क्षन्तः पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् ।
तस्मात्तान् सूत्रविधिना तर्पयेत् पायसेन च ॥
मध्वाज्यतिलमिश्रेण तथा शीतेन वाम्भसा ।
ग्रासमात्रं परगृहाद्धान्यं यः प्राप्नुयान्नरः ॥
भिक्षामात्रेण यः प्राणान् सन्धारयति वान्वहम् ।
यो वा सम्बर्द्धयेद्देहं प्रत्यहं स्वार्थविक्रयात् ॥
श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः ।
नास्मात् परतरः कालः श्राद्धेष्वन्यत्र विद्यते ॥
यत्र साक्षात्तु पितरो गृह्णन्त्यमृतमुत्तमम् ।

मघात्रयोदश्यामित्यत्र मघाग्रहणं ख्यातिसूचकम् । आश्वयुज्याश्च कृष्णायामित्यनेन वक्ष्यमाणमघात्रयोदशीलेन ख्याते काले कुञ्जरच्छायसंज्ञितोऽपरो योगः पितृप्रीत्यतिशयसाधनोपायः करे हस्तानक्षत्रे स्थितेऽर्के शशिनि मघर्क्षे स्थिते सति भवेदित्यन्वयः ।

ततश्च मघात्रयोदश्यां पृथगेवायं कुञ्जरच्छायाख्यो गुणफल-विधिर्न तु कुञ्जरच्छायामात्रविधिरित्यायातम्। मघायामित्येक-वचनमार्षं पुनर्मघोपादानं रोहिण्यष्टम्यादिवन्मघर्क्षोपलक्षणत्वशङ्का-निरासार्थम्। कन्याया दशदिवसोपरि विंशतिदण्डाधिकपञ्च-विंशतिदिनपर्य्यन्तं हस्तावस्थानमर्कस्येति।

मघात्रयोदशीं विवृणोति आश्वयुज्यामिति—आश्वयुजी आश्विन-त्रयोदशी पौर्णमास्यन्तमासेन प्रौष्ठपद्यामतीतायामिति शङ्खवच-नात्। प्रावृट्ऋतुरत्र ऋतुः संवत्सर इति मतेन मन्तव्यः। कन्यास्थे रवौ मघात्रयोदशीकुञ्जरच्छाययोगयोः[1] प्रतिपादनात्। ऋतु-व्यवस्था तु सौरमानेनैव इति शुद्धिकौमुद्यां प्रागपि प्रपञ्चितमस्ति। प्रेतान् विकरणभागिनः। तानाह मनुः,—

असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम्।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः॥

यमालयादिति यम्यन्ते नियम्यन्ते पापिनोऽत्रेति यमालयः कारागारं कीर्त्तयन्तो मनुष्यलोकमायान्तीति शेषः, तस्मान्मघा-त्रयोदश्यां सूत्रविधिना गृह्योक्तविधिना श्राद्धेन तर्पयेदित्यर्थः। श्राद्धेनापि कर्त्तव्यमिति पुनर्मघात्रयोदशीविधानं श्राद्धस्यावश्यकत्वविधानार्थम्[2]। पिण्डदानञ्चात्र ज्येष्ठपुत्रेण न कार्य्यम्।

यथा देवीपुराणे,—

कन्यास्थे च रवाविष्टे पूजनीया यथाविधि।

---

१ ग •कुञ्जरच्छाययोः।

२ ख, ग पुस्तके, •प्रदर्शनाय।

भौजङ्गीं तिथिमासाद्य यावच्चन्द्रार्कसङ्गमम्॥
तत्रापि महती पूजा कर्त्तव्या पितृदैवते।
तत्रैव पिण्डप्रदानन्तु ज्येष्ठपुत्त्री विवर्ज्जयेत्॥

इये पौर्णमास्यन्ताश्विने तत्रैव मघायुक्तत्रयोदशीसम्भवात्। न तु मुख्याश्विने न वा सौराश्विनपरत्वमिषय्यद्भस्य वैयर्थ्यात्। ततश्च कन्यास्थे रवाविति कन्यासम्बन्धेनाश्विनकृष्णपक्षस्य प्राप्तस्यकथनं भौजङ्गी पञ्चमी चन्द्रार्कसङ्गमोऽमावस्या पूजनीयाः पितर इति शेषः। यथाविधि गृह्योक्तविधिनेत्यर्थः। तत्राश्विनमध्ये पितृदैवते मघानक्षत्रे। पृथक् श्रुतिकल्पनाभिया पूर्व्वोक्तगङ्गादिवचनैकवाक्यतया मघायुक्तत्रयोदश्यामित्यर्थः। महती पूजा मधुपायसादिद्रव्यैः पक्षश्राद्धात् पृथगेव श्राद्धं कुर्य्यादित्यर्थः[१]।

अथ मैथिलाः,— भौजङ्गीमित्यादेः परेण सहान्वयं कृत्वा पञ्चम्यादिषु महती पूजा तत्रैव पक्षश्राद्धे यस्यां कस्याञ्चित्तिथौ मघानक्षत्रेऽपि पिण्डदानं ज्येष्ठपुत्त्री विवर्ज्जयेदित्याहुः।

अत्राधुनिकाः,— एकवचनोपात्तप्रत्यासत्तेरङ्गत्वात् पूर्व्वेणैवान्वय इति वदन्ति। वस्तुतस्तु पूजामहत्त्वविधौ श्रुत्यन्तरकल्पनापत्तिर्दोषः।

अस्मन्मते तु मघात्रयोदश्यां महती पूजा वचनान्तरेणैव क्लृप्तेति किञ्च पिण्डदाननिषेधोऽयं पक्षश्राद्ध एवावश्यं वाच्यः प्रस्तुतत्वात् अन्यथा सांवत्सरिकेऽपि पिण्डदाननिषेधप्रसङ्गः।

तदा च प्रपक्षश्राद्धादधिके मघात्रयोदशीश्राद्धेऽपि पिण्डदानप्रसङ्गो दुर्निवारः।

---

१ ख, कार्य्यमित्यर्थः।

अन्ये तु पृथक्श्रुतिकल्पनाभिया पक्षश्राद्धान्तर्गतत्रयोदशीश्राद्धमेव मघायोगे प्रशस्तं न तु पृथक् श्राद्धान्तरमित्याहुः, तदपि मन्दं शङ्खादिनानामुनिवचनानां पक्षश्राद्धमनपेक्ष्य चतुर्थ्यष्टकावत् स्वातन्त्र्येण प्रवृत्तेः पक्षान्तर्गतत्रयोदशीश्राद्धमनूद्य मघानक्षत्ररूपकालपायसादिद्रव्यरूपगुणद्वयविधानेन उपसद्भिश्चरिलेतिवत् वाक्यभेदापत्तेश्च।

यत्तु,— उत्तरादयनाच्छ्राद्धे श्रेष्ठं स्याद्दक्षिणायनम्।
चातुर्मास्यञ्च तत्रापि प्रसुप्ते केशवे हितम्॥
प्रौष्ठपद्याः परः पक्षः तत्रापि च विशेषतः।
पञ्चम्यूर्द्धञ्च तत्रापि दशम्यूर्द्धं ततोऽप्यति॥
मघायुक्ता च तत्रापि शस्ता राजंस्त्रयोदशी।
सर्व्वस्वेनापि कर्त्तव्यं श्राद्धमत्र नराधिप॥
परान्नभोजी त्वपचः श्राद्धमत्र तु कारयेत्॥

इति विष्णुधर्म्मोत्तरवचनं तत् सजातीयविजातीयानां तत्तद्विधिबोधितश्राद्धकालानामेकस्यापेक्षया पितृतृप्तिविशेषजनकत्वेन प्राशस्त्यकथनमात्रपरं न तु श्राद्धविधायकम्।

अतएव,—

उत्तरादयनाच्छ्राद्धे श्रेष्ठं स्याद्दक्षिणायनम्।

इति प्रथमत एवोक्तं ततश्च दशम्यूर्द्धन्ततोऽप्यधिकमुक्ता तस्मादपि तत्तद्विधिबोधितस्यापृथक्श्राद्धस्य मघात्रयोदशीकालः प्रशस्यते इति न कश्चिद्दोषः। अतएव तत्र विध्यपेक्षायां सर्व्वस्वेनापि कर्त्तव्यमित्यनेन पृथक्विधिरुक्तः अन्यथा पुनर्विधानवैफल्यं स्यादिति।

ज्येष्ठपुत्रीति मतुपो विद्यमानार्थत्वेन ज्येष्ठपुत्रस्यैव एव पिण्डदान-निषेधादन्येषामप्रतिषेधात् पिण्डदानं कर्त्तव्यमेव । अन्यथा ज्येष्ठ-पुत्रीति विशेषणं व्यर्थं स्यादव्यावर्त्तकत्वात्, अत्र च पिण्डस्थानकर-णादि सर्व्वमेव पिण्डोपकरणं न कार्य्यं शिवा आपः सन्त्वित्यादि तु कार्य्यमेव। अयञ्च निषेधो मघात्रयोदशीविहितश्राद्ध एव न तु पक्षान्तर्गतत्रयोदशीश्राद्धे तद्दिनविहितसांवत्सरिकश्राद्धवदिति ध्येयम् ।

यदा तु पूर्व्वदिनेऽपराह्णे तिथिलाभः परदिने च पूर्व्वाह्णे मघायुक्ततिथिलाभस्तदा पूर्व्वदिने पक्षश्राद्धं विधाय परदिने मघात्रयोदशीश्राद्धं पूर्व्वाह्णे कार्य्यं रात्र्यादिनिषिद्धेतरस्यैव श्राद्ध-कालत्वात् । एवञ्चैकदिने पूर्व्वाह्ण एव मघात्रयोदशीलाभे ज्येष्ठपुत्रि-णाऽपिण्डकं मघाश्राद्धं विधायापराह्णे त्रयोदशीमात्रे सपिण्डकं पक्षश्राद्धं कर्त्तव्यं यदात्वपराह्णे मघात्रयोदशीयोगस्तदा तन्त्रेणैकश्राद्धं तच्चापिण्डकमेव मघाश्राद्धे पिण्डनिषेधात् पक्षश्राद्धे तु "नित्येऽपि किञ्चिदङ्गहानिः शक्या न तु काम्येऽपीति न्यायात्" पिण्डाभाव-स्याकिञ्चित्करत्वात् दोषगौरवाच्चेति बहवः ।

अन्ये तु,—

समानाङ्गकयोरेव तन्त्रतानियमात् पक्षश्राद्धमेव सपिण्डकं कार्य्यं मघाश्राद्धन्तु प्रसङ्गेन गतार्थमित्याहुः ।

एवञ्च पूर्व्वदिनेऽपराह्णे मघातिथिलाभेऽपि परदिने पूर्व्वाह्णे प्राप्तस्य कुञ्जरच्छायायोगस्य फलातिशयहेतुत्वात्तत्रैव पूर्व्वाह्णेऽप्य-पिण्डकं तच्छ्राद्धमिति ।

संवत्सरप्रदीपे,—

आश्वयुज्याममावास्यां तीर्थप्राप्तौ तथा नृप।
कृत्वा श्राद्धं विधानेन दद्यात् षोड़शपिण्डकम्॥

तथाग्निपुराणनाम्ना वचनं पठन्ति।

पञ्चश्राद्धं विधायाथ दद्यात् षोड़शपिण्डकान्।
अकृते पिण्डदाने तु तच्छ्राद्धं विफलं भवेत्॥

गयामधिकृत्य गरुड़पुराणे,—

पिण्डान् दद्यादिमैर्मन्त्रैरावाह्य च पितॄन् परान्।
अस्मत्कुले मृता ये च गतिर्येषां न विद्यते।
तेषामावाहयिष्यामि दर्भपृष्ठे तिलोदकैः॥

तेषामिति द्वितीयार्थे षष्ठी आवाहयामीत्यर्थः। लिखन्नीति मण्डलं रेखाञ्च कृत्वा दक्षिणाग्रान् कुशान् निपात्य तत्र तिलोदकैरावाह्य वक्ष्यमाणमन्त्रैः पिण्डान् दद्यात्।

मन्त्रास्तोक्तास्तत्रैव।

पितृवंशे मृता ये च मातृवंशे च ये मृताः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥१॥
मातामहकुले ये च गतिर्येषां न विद्यते।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥२॥
बन्धुवर्गाश्च ये केचिन्नामगोत्रविवर्जिताः।
स्वगोत्रे परगोत्रे वा तेभ्यः पिण्डं ददाम्यहम्॥३॥
अजातदन्ता ये केचिद्ये च गर्भप्रपीड़िताः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥४॥

उद्बन्धनमृता ये च विषशस्त्रहताश्च ये ।
आत्मोपघातिनो ये च तेभ्यः पिण्डं ददाम्यहम् ॥५॥
अग्निदाहे मृता ये च सिंहव्याघ्रहताश्च ये ।
दंष्ट्रिभिः शृङ्गिभिर्वापि तेभ्यः पिण्डं ददाम्यहम् ॥६॥
अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथा परे ।
विद्युच्चौरहता ये च तेभ्यः पिण्डं ददाम्यहम् ॥७॥
रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥८॥
असिपत्रवने घोरे कुम्भीपाके च ये गताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥९॥
असंख्ययातनासंस्था ये नीता यमशासने ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥१०॥
पशुयोनिगता ये च पक्षिकीटसरीसृपाः ।
अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम् ॥११॥
जात्यन्तरसहस्राणि भ्रमन्ते स्वेन कर्म्मणा ।
मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम् ॥१२॥
येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते सर्व्वे तृप्तिमायान्तु पिण्डदानेन सर्व्वदा ॥१३॥
ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम ।
ते सर्व्वे तृप्तिमायान्तु पिण्डेनानेन सर्व्वदा ॥१४॥
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥१५॥

ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्ज्जिताः।
क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा॥
विरूपा आमगर्भा ये ज्ञाताज्ञाताः कुले मम।
तेषां पिण्डं मया दत्तमक्षय्यमुपतिष्ठताम्॥१६॥

ततः पिण्डान् सम्पूज्य जले क्षिपेत्।

## अथ दुर्गोत्सवः।

नत्वा ज्ञानमयीं देवीं दुर्गां दुर्गतिहारिणीम्।
श्रीकालिकापुराणोक्ता श्रीदुर्गार्च्चा विविच्यते॥

कालिकापुराणे। श्रीभगवानुवाच,—

दुर्गातन्त्रेण मन्त्रेण कुर्य्यात् दुर्गामहोत्सवम्।
महानवम्यां शरदि बलिदानं नृपादयः॥
आश्विनस्य तु या शुक्ला भवेद्दत्साष्टमी तिथिः।
मूर्त्तिभेदे महादेवी पूजां गृह्णाति भूतये॥
कन्यासंस्थे रवौ वत्स शुक्लामारभ्य नन्दकाम्।
अयाची त्वथ नक्ताशी एकाशी त्वथवाऽब्दः॥
प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः।
बोधयेद्बिल्वशाखासु षष्ठ्यां देवीं फलेषु च॥
सप्तम्यां बिल्वशाखान्तामाहृत्य प्रतिपूजयेत्।
पुनः पूजां तथाष्टम्यां विशेषेण समाचरेत्॥
जागरञ्च स्वयं कुर्य्याद्बलिदानं महानिशि।
प्रभूतबलिदानञ्च नवम्यां विधिवच्चरेत्॥
जपहोमसमायुक्तो भोजयेद्वै कुमारिकाः।

ध्यायेद्दशभुजां देवीं दुर्गातन्त्रेण पूजयेत् ॥
विसर्ज्जनं दशम्यान्तु कुर्य्याद्वै शारदोत्सवैः ।
कृत्वा विसर्ज्जनं तस्यां तथा मङ्गलमाचरेत् ॥

दुर्गातन्त्रसंज्ञकेन प्रणवादिस्वाहान्तेन दशाक्षरजपदुर्गामन्त्रेणे-त्यर्थः । दुर्गामहोत्सवं विभवविस्तरैर्दुर्गापूजनमित्यर्थः ।

महानवम्यामिति यदुक्तं देवीपुराणे,—

आश्विने शुक्लपक्षे तु सप्तम्यादितिथित्रये ।
महाशब्दः प्रयोक्तव्यो नान्यत्रेति विनिश्चयः ॥

बलिदानं प्रभूतं कुर्य्युरिति शेषः, नृपादय इति प्रभूतबलि-दानापेक्षया न तु ब्राह्मणगोचरो निषेधः ।

सिंहव्याघ्रनरान् दत्वा ब्राह्मणो नरकं व्रजेत् ।
इहापि स्यात् स हीनायुः सुखसौभाग्यवर्ज्जितः ॥

इति कालिकापुराणे सिंहमात्रपर्य्युदासात् । आश्विनस्येति चान्द्राश्विनपरं मुख्यत्वात् चान्द्रमासं प्रकृत्यैव सर्व्वत्र तिथिकृत्याभि-धानाच्च । कन्यासंस्थे रवावित्यादौ तु कन्यासम्बन्धः प्राशस्त्यपरो मन्तव्यः । वत्सेति भैरवसम्बोधनं, तस्यां वैष्णव्यादिमूर्त्तिभेदे यथा पूजां प्रकरोति तथा वक्ष्यते इति शेषः । कन्यासंस्थे रवावारभ्यां शुक्लां नन्दां प्रतिपदमारभ्येत्यर्थः कन्यासम्बन्धः प्राशस्त्यपरो वा । भवानीत्यादि अप्रकाशुक्लरोत्तरलघुकल्पः, अन्नदो ब्राह्मणभोजयि-तेत्यर्थः । एतेन वाय्वदो वायुभक्ष इति कस्यचिद्व्याख्यानं निरस्तं जितद्वन्द्वः त्यक्तस्त्रीसम्बन्धः । बोधयेदिति फलेषु फलयुक्तासु बिल्व-शाखास्वित्यर्थः । षष्ठ्यां सन्ध्यासमये बोधनं कार्य्यम् ।

यथा भविष्ये,—

षष्ठ्यां बिल्वतरौ बोधं सायं सन्ध्यासु कारयेत्।

एवञ्च यस्मिन् दिने षष्ठीलाभस्तत्रैव बोधनं उभयदिने सन्ध्यायां षष्ठीलाभे युग्मादरेण व्यवस्था उभयदिने तदलाभे प्रदोषे षष्ठ्यां कार्य्यम्।

यथा कालिकापुराणे,—

[1][रात्रावेव महादेवी ब्रह्मणा बोधिता पुरा।

अथ षष्ठ्यां ज्येष्ठानक्षत्रयोगे फलातिशयः॥

देवीपुराणे,—

ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम्।

सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम्॥

तथा नन्दिकेश्वरपुराणे,—]

आर्द्रायां बोधयेद्देवीं मूलेनैव प्रवेशयेत्।

पूर्व्वोत्तराभ्यां सम्पूज्य श्रवणेन विसर्ज्जयेत्॥

मूलाभावेऽपि सप्तम्यां केवलायां प्रवेशयेत्।

दशम्यां श्रवणालाभे शुभयोगे विसर्ज्जयेत्॥

कृष्णनवम्यामार्द्रायां बोधनमष्टादशभुजायस्तत्रैवेति वक्ष्यते। मूलेन युक्तायां सप्तम्यामित्यर्थः। एवं पूर्व्वोत्तराभ्यां युक्तयोरष्टमीनवम्योरित्यर्थः। अथ मूलाभावेऽपीत्यनेन सर्व्वत्रार्द्रादिनक्षत्रयोगस्य फलातिशयत्वमुक्त्वा तिथीनामावश्यकत्वमुक्तम्।

---

१ ख पुस्तके, [ ] चिह्नितांशो नास्ति।

तथा लिङ्गपुराणे,—

मूलाभावेऽपि सप्तम्यां केवलायां प्रवेशयेत् ।
तथा तिथ्यन्तरेष्वेवमृक्षेषु च फलोदयः ॥

एतेन पूर्व्वाह्णो वै देवानामपराह्णः पितॄणामिति श्रुतेरावश्यकः पूर्व्वाह्णादरः, नक्षत्रयोगस्तु गुण एवेत्युक्तम् । एतच्च षष्ठ्यां बोधनं दशभुजापक्ष एव ध्यायेद्दशभुजां देवीमिति वक्ष्यमाणोपसंहारात् । अतएव तत्र मूर्त्तिभेदे कालभेद उक्तो यथा ।

यदा तु वैष्णवीं देवीं महामायां जगन्मयीम् ।
पूजयेत्तत्र च तदा विशेषं शृणु भैरव ॥
रामस्यानुग्रहार्थाय रावणस्य वधाय च ।
रात्रावेव महादेवी ब्रह्मणा बोधिता पुरा ॥
ततः सन्त्यक्तनिद्रा सा नन्दायामाश्विने सिते ।
जगाम नगरीं लङ्कां यत्रासीद्राघवः पुरा ॥
तत्र गत्वा महादेवी तदा तौ रामरावणौ ।
युद्धे नियोजयामास स्वयमन्तर्हिताम्बिका ॥
यावत्तयोः स्वयं देवी युद्धकेलिमुदैक्षत ।
तावत्तु सप्तरात्राणि सर्व्वदेवैः सुपूजिता ॥
निहते रावणे वीरे नवम्यां सकलैः सुरैः ।
विशेषपूजां दुर्गायाश्चक्रे लोकपितामहः ॥
ततः संप्रेषिता देवी दशम्यां शारदोत्सवैः ।
यदा तु षोडशभुजां महामायां प्रपूजयेत् ॥
दुर्गातन्त्रेण मन्त्रेण विशेषं तत्र वै शृणु ।

कन्यायां कृष्णपक्षे तु एकादश्यामुपोषितः ॥
द्वादश्यामेकभक्तञ्च नक्तं कुर्य्यात् परेऽहनि ।
चतुर्द्दश्यां महामायां बोधयित्वा विधानतः ॥
गीतवादित्रनिर्घोषैर्नानानैवेद्यवेदनैः ।
अयाचितं बुधः कुर्य्यादुपवासं परेऽहनि ॥
एवमेव व्रतं कुर्य्याद्यावद्वै नवमी भवेत् ।
ज्येष्ठायाञ्च समभ्यर्च्च्य मूलेन प्रतिपूजयेत् ॥
उत्तराखर्षनं कृत्वा श्रवणान्ते विसर्ज्जयेत् ।
यदा त्वष्टादशभुजां महामायां प्रपूजयेत् ॥
कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा ।
नवम्यां बोधयेद्देवीं गीतवादित्रनिस्वनैः ॥
शुक्लपक्षे चतुर्थ्यान्तु देवीकेशविमोचनम् ।
प्रातरेव तु पञ्चम्यां स्नपयेत् सुशुभैर्जलैः ॥
सप्तम्यां पत्त्रिकापूजा अष्टम्यां चाप्युपोषणम् ।
पूजा च जागरा चैव नवम्यां विधिवद्बलिः ॥
संप्रेषणं दशम्यान्तु क्रीड़ाकौतुकमङ्गलैः ।
नीराजनं दशम्यान्तु बलपुष्टिकरं महत् ॥

महामाया चतुर्भुजा रक्तगौराङ्गी रात्रावेव प्रदोष एवेत्यर्थः । नन्दायां शुक्लप्रतिपदि न तु षष्ठ्यां वक्ष्यमाणवचराचाणीत्युक्तः अतः शुक्लप्रतिपदि महामायाबोधनम् । कन्यायामिति पौर्णमास्यन्ताश्विनकृष्णपक्षस्य कन्याप्रमन्नव्यभिचारात् कन्यासम्बन्धप्राप्ते आश्विनकृष्णपक्षे इत्यर्थः। मुख्याश्विनशुक्लाष्टम्यां पूजाविधानात्तत् पूर्व्वत एव बोधनात् कन्यासम्बन्धेन प्राशस्त्यं वा । अन्यथा देवीपुराणे,—

इषे मास्यसिते पक्षे कन्याराशिगते रवौ ।
नवम्यां बोधयेद्देवीं क्रीड़ाकौतुकमङ्गलैः ॥

इत्यत्र सौरपरत्वे कन्याराशिगत इत्यनेनैव प्राप्तौ इषे मासीति व्यर्थं स्यात् । आर्द्रायोगस्तु फलातिशयार्थः उक्तयुक्तेः । अतएव यस्मिन् दिने नवम्यां दिवार्द्रालाभस्तत्रैव बोधनम् । उभयदिने नवम्यां दिवार्द्रालाभे युग्मादरेण व्यवस्था । आर्द्राया अलाभे तु नवम्यां युग्मादरः ।

अथ दिवाबोधने विशेषमाह तत्रैव ।

आदिपादो निशाभागे श्रवणस्य यदा भवेत् ।
तदा देव्याः समुत्थानं नवम्यां न पुनर्दिवा ॥
[१]अन्तपादो निशाभागे श्रवणस्य यदा भवेत् ।
तदा देव्याः समुत्थानं नवम्यां दिनभागतः ॥

मौराजनदशमीदिने निशाभागे यदा श्रवणादिपादो भवेत् तदा नवम्यां बोधनवम्यां समुत्थानं प्रबोधनं कार्य्यं किन्तु रात्रावेवेत्यर्थः । यदा तु श्रवणान्तपादो निशाभागे स्यात् तत्रैव बोधनवम्यां दिवा बोधनमित्यर्थः । ततः शुक्लचतुर्थ्यां पूजापूर्व्वकं केशोद्वर्त्तनयामपीकङ्गतिकादिदानं प्रातः नवम्यां स्नानीयसुगन्धिअलदानम् । पत्रीप्रवेशपूर्व्वदिनेऽधिवास आचारप्राप्त एव सोऽपि गन्धपुष्पाद्यैः पत्रीभूषारूप एव, दर्शपौर्णमासातिदिष्टस्य पूर्व्वदिनदेवतावाहनरूपस्य पक्षविशेष एव प्राप्तत्वात् सप्तम्यां प्रवेशानन्तरं देवतावाहनविधानाच्च ।

---

१ ख पुस्तके, वचनमेतन्नास्ति ।

यत्तु,—

षष्ठ्यां सायं प्रकुर्व्वीत बिल्ववृक्षेऽधिवासनम्।

इति नामग्रन्थवचनं केनचिल्लिखितं तन्मैथिलादिनिबन्धेष्वदृष्ट-नाम्निर्मूलमेव। शिष्टाचारोपष्टम्भकसमूलत्वाभिमाने तु अधिवासपदो-पादानादव्यवहितपूर्व्वदिनकर्त्तव्यतानियमात् प्रवेशपूर्व्वदिने साय-ङ्काले षष्ठ्यलाभेऽप्यधिवासः कार्य्यः षष्ठीलाभे तु फलातिशयः, न च वैपरीत्याशङ्का यदा तु वर्द्धमाना षष्ठी परदिने दण्डार्द्धं दण्डमेकं वा निर्गता तत्परदिने सप्तमी पत्रीप्रवेशार्था तदा प्रवेशपूर्व्वदिने षष्ठ्याः कर्म्मायोग्यतया सप्तमीयुत एवाधिवासात् षष्ठी गुण एवावश्यं वाच्यः, अन्यथा कर्म्मलोपापत्तेः, सायङ्कालस्य अव्यभिचारात्[1] तस्यैव प्राधान्यमिति, प्राचीनाचारोऽपीदृश एव।

सप्तम्यां बिल्वशाखान्तामिति यत्र देवी बोधिता तां फलयुगल-शालिनीं शाखामाहृत्य गृहं प्रविश्य संस्थाप्य[2] वास्य पूजयेदित्यर्थः।

तथाच कल्पतरुलिखितदेवीपुराणे,—

मृण्मयीं प्रतिमां कृत्वा बिल्वे यस्तु प्रपूजयेत्।

आत्मवित्तानुसारेण स लभेन्मौक्तिकं फलम्॥

बिल्वे शाखायां मौक्तिकं साक्षाद्भगवतीपूजाजन्यम्। बिल्व-शाखामिति नवपत्रिकोपलक्षकम्।

यथा कालिकापुराणे,—

सप्तम्यां पत्रिकापूजा अष्टम्याञ्चाप्युपोषणम्।

पूजा च जागरा चैव नवम्यां विधिवद्बलिः॥

---

१ ख, त्वव्यभिचारात्। २ ख, ग, संप्राप्य।

तथा तत्रैव,—

> शिलस्थां पूजयेद्देवीं पुस्तकस्थां तथैव च।
> मण्डलस्थां महामायां पत्रिकाप्रतिमासु च॥
> चित्रे च त्रिशिखे खड्गे पूर्णे कुम्भे जलेऽपि वा।

त्रिशिखे त्रिशूले।

पत्रिकाश्चोक्ता भविष्ये,—

> रम्भा कच्वी हरिद्रा च जयन्ती बिल्वदाड़िमौ।
> अशोको मानकश्चैव धान्यादिनवपत्रिकाः॥

पुनः पूजा तथाष्टम्यामिति,—

विशेषेणेत्यनेन सर्वांसं सविशेष षोड़शोपचारपूजामाचरेदित्युक्तं, पुनः पूजेत्यनेन सप्तम्यामपि पूजा आक्षिप्यते। प्रागपि

> सप्तम्यां बिल्वशाखान्तामाहृत्य प्रतिपूजयेत् इत्युक्तम्।

तात्र देवीमावाह्य षोड़शोपचारैरभ्यर्च्य नवपत्रिकार्च्चनरूपा अष्टम्यामेव सविशेषपूजाभिधानात्[1] तथा सप्तम्यां पत्रिकापूजेति प्रागुक्तम्।

यत्तु पूर्व्वोत्तराभ्यां संपूजेति वचनं तत् विशेषपूजाभिप्रायम्। स्वयं कुर्य्यादिति अष्टम्यां महानिशि स्वयं बलिदानं कुर्य्यात्। तथाच योगिनीतन्त्रे,—

> स्वयं वा भ्रातृपुत्रैर्वा भ्राता वा सुहृदेव वा।
> सपिण्डेनाथ वा च्छेद्यो नामगोत्रं नियोजयेत्॥

बलिदानमित्युपलक्षणं पूजापि कार्य्या।

---

१ म, —पूजाविधानात्।

यथा तत्रैव,—

कन्यासंस्थे रवौ वत्स या शुक्ला तिथिरष्टमी।
तस्यां रात्रौ पूजितव्या महाविभवविस्तरैः॥

देवीपुराणे,—

कन्यासंस्थे रवाविषे शुक्लाष्टम्यां प्रपूजयेत्।
सोपवासो निशार्द्धे तु महाविभवविस्तरैः॥
पशुघातश्च कर्त्तव्यो गवलाजवधस्तथा।

गवलो महिषः अजश्छागः, अनयोः प्राशस्त्यम्। पूजा चाष्टमी-विधिनैव। यस्मिन् दिने निशार्द्धे अष्टमी तत्रैव पूजा उभयदिने निशार्द्धेऽष्टमीलाभे युग्मादरेण व्यवस्था।

गौड़ीयास्तु,—

अष्टमीनवमीसन्धौ चामुण्डारूपं ध्यात्वा उपचारैरभ्यर्च्य[1] बलि-दानं कुर्व्वन्तीति देशाचारः। प्रभूतबलिदानञ्च नवम्यां विधिवच्चरे-दिति नवम्यां प्रभूतबलिदानमित्यनेनाष्टम्यादौ पूजाङ्गकं बलिदान-मायाति।

तथा कालिकापुराणे,—

अष्टम्यां रुधिरैर्मांसै मेहामांसैः सुगन्धिभिः।
सिन्दूरैः पटवासैश्च नानाविध[2]विलेपनैः॥
पुष्पैरनेकजातीयैः फलैर्बहुविधैरपि।

यत्तु,— अष्टम्यां बलिदानेन पुत्रनाशो भवेद् ध्रुवम्।

---

१ ख पुस्तके, चतुःषष्टियोगिनीभ्यश्चार्घं इत्यधिकः पाठः।
२ ख, नानागन्ध०।

इति नामशून्यं वचनं केनापि लिखितं तदमूलम्। समूलत्वेपि प्रभृतबलिदाननिषेधकं मन्तव्यम्। प्रभूतबलिदानञ्चेति चकारात् पूजनमपि तथा।

तत्रैव,—

अष्टम्यां सततं देवीपूजकः स्याद्व्रती नरः।
नवम्यान्तु तथा पूजा कर्त्तव्या संयतात्मभिः॥

तथाष्टमीविधिनेत्यर्थः।

तत्र गत्वा महादेवी तदा तौ रामरावणौ।
युद्धे नियोजयामास स्वयमन्तर्हिताम्बिका॥
यावत्तयोः स्वयं देवी युद्धकेलिमुदैक्षत।
तावत्तु सप्तरात्राणि सर्व्वदेवैः सुपूजिता॥
निहते रावणे वीरे नवम्यां सकलैः सुरैः।
विशेषपूजां दुर्गायाश्चक्रे लोकपितामहः॥
ततः संप्रेषिता देवी दशम्यां शारदोत्सवैः।

तथा तत्रैव,—

ज्येष्ठायाञ्च समभ्यर्च्च्य मूलेन प्रतिपूजयेत्।
उत्तरास्वर्चनं कृत्वा श्रवणान्ते विसर्ज्जयेत्॥

तथा तत्रैव,—

नवम्यां बलिदानञ्च कर्त्तव्यं वै यथाविधि।
जपपूजादिकं सर्व्वं कुर्य्यात्तत्र विभूतये॥

पूजापि विधिनैव यथा देवीपुराणे,—

अष्टम्याञ्च नवम्याञ्च जगन्मातरमम्बिकाम्।

पूजयित्वाश्विने मासि विशोको जयति द्विषः ॥

नन्दिकेश्वरपुराणे,—

आर्द्रायां बोधयेद्देवीं मूलेनैव प्रवेशयेत् ।
पूर्व्वोत्तराभ्यां संपूज्य श्रवणेन विसर्ज्जयेत् ॥

एतेन नवम्यां पूजने कार्य्ये बलिदानमात्रं कर्त्तव्यमिति यदुक्तं तन्निरस्तम् ।

सप्तम्यां पत्रिकापूजा अष्टम्यां चाप्युपोषणम् ।
पूजा च जागरा चैव नवम्यां विधिवद्बलिः ।
संप्रेषणं दशम्यान्तु क्रीडाकौतुकमङ्गलैः ॥

इत्यादिवचनं तत् पूर्व्ववचनैकवाक्यतया प्रभूतबलिदानविधायकं न तु पूजानिषेधनं तच्च विधिवदित्यनेन बलीनां प्रभूतत्वेऽपि विधिनैव बलयो देया न कदाचिदपि आलस्यादिवशादविधिनेति मन्तव्यम्। अत्र चैतेषु पूर्व्वोक्तेषु अनेकवचनेषु प्रवेशनादिविसर्ज्जनान्तमेकं कर्म्म प्रतीयते एकप्रयोगोपसंहारात् ।

तथाच शारदीयपूजामभिधाय[२] कालिकापुराणे,—

कृत्वैवं परमामापुर्निर्वृतिं च दिवौकसः ।
एवमन्यैरपि सदा कार्य्यं देव्याः प्रपूजनम् ॥
विभूतिमतुलां लब्धुं चतुर्वर्गप्रदायकम् ।
यो मोहादथवालस्याद्देवीं दुर्गां महोत्सवे ।
न पूजयति दम्भाद्वा द्वेषाद्वाप्यथ भैरव ॥

---

१ ग, विशेषः ।

२ ग, पत्रिकापूजामभिधाय ।

क्रुद्धा भगवती तस्य सर्व्वान् कामान् निहन्ति च ।
परत्र च महामायावजिर्भूत्वा स जायते ॥

अत्र फलैक्यात् कर्म्मणोऽप्यैक्यं कर्म्मभेदे हि सङ्कल्पावाहन-विसर्ज्जनदक्षिणा अपि प्रतिकर्म्म स्युः। निन्दाश्रवणाच्चावश्यकतया पुत्रादिद्वारापि कर्त्तव्यताऽस्येति। ततश्च कर्म्मादौ पत्रीस्थापनानन्तर-मावाहनात् प्रागेव सङ्कल्पः सप्तम्यां कार्य्यः नत्वष्टम्यादौ प्रतिपूजासु प्रत्येकं सङ्कल्पः, न च सप्तम्यामारभ्य अरत्कालीनपूजामहं करिष्ये इत्येवं रूपः अरत्कालीनपूजालावाहनादि विसर्ज्जनान्ता ।

अन्ये तु अष्टम्यामेकं सङ्कल्पमाचरन्ति तन्मते सप्तमीपूजायास्त-टस्थता स्यादिति।

भविष्येऽपि फलान्तरमुक्तम्,—

अनेन विधिना देवीं पूजयेद्यो हि मानवः ।
मर्त्त्ये च श्रेष्ठतां याति धनधान्यसुतान्वितः ॥
नीचो वा निर्गुणो वापि सत्याचारविवर्ज्जितः ।
नरः स्वर्गमवाप्नोति विधिना पूजयेद्यदि ॥

भोजयेद्वै कुमारिका इति।

तथाच देवीपुराणे,—

न तथा तुष्यति शिवा होमदानजपेन तु ।
कुमारीभोजनेनाच यथा देवी प्रसीदति ॥

पूजनीयादेवीरूपमाह ध्यायेद्दशभुजामिति। दुर्गातन्त्रं दशा-क्षरजपदुर्गामन्त्रः। विसर्ज्जनं दशम्यामिति राज्यादौ विसर्ज्जनं न कार्य्यम् ।

देवीपुराणे,—

पत्रीविसर्ज्जनं रात्रौ प्रवेशं वा करोति यः ।

तस्य राष्ट्रविनाशः स्यात् पूजा च विफला भवेत् ॥

रात्राविति शाखाश्चादिनिषिद्धकालोपलक्षणं दैवकृत्ये दृष्टौ प्राशस्त्यात् ।

तथा देवीपुराणे,—

द्विशरीरे चरे चापि लग्ने चेत्रागते रवौ ।

वर्षे वर्षे च कर्त्तव्यं स्थापनञ्च विसर्ज्जनम् ॥

ज्योतिषे,—

धनं धान्यं चरे लग्ने द्विशरीरे च पूजिता ।

राज्ञो विनाशनं कुर्य्यात् स्थिरलग्ने शिवार्पिता ॥

अथ श्रवणायां विसर्ज्जने गुणातिशयः श्रवणान्तपादे तु फलातिशयः ।

यथा कालिकापुराणे,—

अन्त्यपादे दिवाभागे श्रवणा च यदा भवेत् ।

तदा संप्रेषणं देव्या दशम्यां शारदोत्सवैः ॥

श्रवणान्ते विसर्ज्जयेदिति प्रागप्युक्तम् ।

शारदोत्सवमाह तत्रैव,—

शङ्खतूर्य्यनिनादैश्च मृदङ्गैः पटहैस्तथा ।

धूलिकर्द्दमविक्षेपैः क्रीडाकौतुकमङ्गलैः ॥

भगलिङ्गाभिधानैश्च भगलिङ्गप्रगीतकैः ।

भगलिङ्गक्रियाशब्दैः क्रीडयेयुरलं जनाः ।

दिनत्रये सप्तम्यादितिथित्रयविहितं पूजात्रयं प्राप्तं कदाचि-त्तिथिह्रासवशाद्दिनाभ्यामपि वा पूजात्रयं कदाचित्तिथिवृद्धिवशाच्चतु-र्भिरहोभिः पूजात्रयमित्यर्थः । अत्रैवं व्यवस्था दैववशात् पूर्व्वाह्णे दिनत्रये तिथित्रयलाभे निर्व्विवादैव व्यवस्था ।

अतएव विश्वरूपनिबन्धे,—

विद्धां त्यक्त्वा महाष्टम्यां यः पूजां कुरुते मम ।
तस्य पूजां न गृह्णामि तेनाहमपराजिता ॥

इति वचनात् विद्धायामपि पूर्व्वाह्णानुरोधात् पूजोक्ता एवञ्च नवम्यादरोऽपि पूर्व्वाह्णलाभ एवेति ।

यदा तु दिनद्वये पूर्व्वाह्णे कर्म्मयोग्या सप्तमी लभ्यते तदा युग्मादरमपि विहाय उदयगामिन्यामेव परदिने कर्त्तव्यम् ।

युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥

इति देवीपुराणवचनात् । यदा तु उदयगामिनी सप्तमी कर्म्मानर्हा तदा पूर्व्वदिने उदयगामित्वाभावेऽपि सप्तमीकृत्यं । एवं दिनद्वये पूर्व्वाह्णे नवमीलाभे कर्म्मयोग्याष्टमीक्षणे अष्टमीपूजां विधाय तत्परतो नवमीक्षणे युग्मादरान्नवमीकृत्यम् । तत्परदिने तु उदयगामिन्यां नवम्यां पञ्चोपचारैरभ्यर्च्य पुष्पाञ्जलिदानमात्रम् ।

न च तद्दिने पुनरपि सकलं नवमीकृत्यं कथं न क्रियते इति वाच्यम् । सप्तम्यां पत्रिकापूजेत्यादिविधिवाक्यैः "सकृत्कृते कृतः शास्त्रार्थः" इति न्यायसचिवैः सप्तम्यादितिथित्रये पूजात्रयमेव विहितम् । अतएव दिनक्षये तिथिवृद्धौ पक्षान्तरं [illegible]

अपूजयेद्देवीमित्यत्र पूजयेद्दिवेति वचनमात्राभिप्रायं, अन्यथा चतुरच:-पूजापक्षे द्विवचनात् परदिने निर्गतायाः कन्यायोग्यनवम्याः पर-दिने दशमीपक्षे कीदृशी पूजा स्यात् ।

किञ्च दशमीविद्धनवम्या निन्दापि श्रूयते ।

पद्मपुराणे,—

एकादशी च नवमी दशाविद्धा यदा भवेत् ।
तदा वर्ज्या विशेषेण गङ्गाम्भः सुरया यथा ॥

शिवरहस्ये,—

अष्टम्येकादशी षष्ठी द्वितीया च चतुर्द्दशी ।
कर्त्तव्याः परसंयुक्ता पराः पूर्व्वेण मिश्रिताः ॥

स्कान्दे,—

अष्टम्या नवमी मिश्रा नवम्या चाष्टमी युता ।
अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥

तथा तत्रैव,—

श्रावणी दौर्गनवमी तथा दूर्व्वाष्टमी तिथिः ।
पूर्व्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्द्दिनम् ॥

बलेर्द्दिनं द्यूतप्रतिपत् तत्र बलिपूजाविधानात् ।

ग्रन्थपरिशिष्टे पञ्चम्योर्व्वत्सरत्रयोरित्याद्यभिधाय,—

एतद्व्रतं महाघोरं हन्ति पुण्यं पुराकृतमित्युक्तम् ।

एतेन दिनद्वये पूजाद्वयप्राप्तौ एकस्मिन् दिने पूजाद्वयमनुष्ठि-मिति निर्णयो निरस्तः ।

न च तद्दिने यथोपचारैः पूजापि न स्यादिति वाच्यं

तथा तत्रैव,—

सम्यक् सम्पादिता पूजा यदि कर्तुं न शक्यते ।
उपचारांस्तथा सम्यक् मन्त्रैस्तान् विनिर्दिशेत् ॥
गन्धं पुष्पञ्च धूपञ्च दीपं नैवेद्यमेव च ।
अभावे पुष्पतोयाभ्यां तदभावेन भक्तितः ।

तथा तत्रैव,—

आसनं प्रथमं दद्यात् पौष्पं दारवमेव वा ।
वास्त्रं वा चार्म्मणं कौशं मण्डपस्योत्तरे सृजेत् ॥
आसनञ्चार्घ्यपाद्यञ्च अग्रमासादयेच्च तु ॥

शारदातिलके,—

पाद्यं श्यामाकदूर्व्वाब्जविष्णुक्रान्ताभिरीरितम् ।

विष्णुक्रान्ता अपराजिता ।

तथा,—

अर्घ्यं क्षिपेत्ततो मूर्द्ध्नि स्वाहामन्त्रेण देशिकः ।
गन्धपुष्पाक्षत यव कुशाग्र तिल सर्षपैः ।
सदूर्व्वैः सर्व्वदेवानामेतदर्घ्यमुदीरितम् ॥
स्वधामन्त्रेण वदने दद्यादाचमनीयकम् ।
जातीलवङ्गकक्कोलैस्तदुक्तं तन्त्रवेदिभिः ॥
स्वधापदेन दद्याच्च मधुपर्कं मुखाम्बुजे ।
आज्यं दधिमधून्मिश्रमेतदुक्तं मनीषिभिः ॥

स्वाहापदेनार्घ्यं, आचमनीयमधुपर्कौ तु स्वधापदेन, सर्व्वमन्त्र-नमः पठेत् ।

एवां पापप्रभावलात् भविष्ये,—

ब्रह्मशुक्लविहीनन्तु न पापं कारयेत् क्वचित्।
सर्व्वत्र सर्व्वस्य पापनाशने ततोऽधिकम्॥

ज्ञानजन्ममार्गामगच्छे,—

अन्यानिवेदितं तोयं प्रकृतिस्थं सुशीतलम्।
हेमादिकलशान्तःस्थं पूजासाधनमिष्यते॥

निषिद्धवस्त्रमाह कालिकापुराणे,—

निर्दग्धं मलिनं जीर्णं तथा नाषावशान्वितम्।
परकीयं ह्यग्निदग्धं सूचीविद्धं तथाऽसितम्॥
उपकेशमधौतञ्च श्लेष्मरक्तादिदूषितम्।
नीलक्षीरक्तमाक्षुजग्धं देवे पैत्रे च वर्ज्जयेत्॥
भूषणं स्वर्णरौप्यादिनिर्मितमङ्गुरीयादि।

तत्रैव,—

सर्व्वेषु गन्धजातेषु प्रशस्तो मलयोद्भवः।
तस्मात् सर्व्वप्रयत्नेन दद्यान्मलयजं सदा॥

शारदातिलके,—

गन्धश्चन्दनकर्पूरकालागुरुभिरीरितः॥

कालिकापुराणे,—

बकुलैश्चैव मन्दारैः कुन्दपुष्पैः कुरण्टकैः।
लताभिर्मल्लिकायाश्च दूर्वाङ्कुरैश्च कोमलैः॥

इत्यादिना पुष्पाण्यभिधाय "सर्व्वतो बिल्वपत्रन्तु देव्याः प्रीतिकरं परमित्युक्तं। मल्लिकाः पत्राग्रः, लता कोमलशाखा॥

तथा,— यक्षधूपः पविवाह: पिण्डधूपः कुमीलकः।
कृष्णागुरुः सकर्पूरो महामायाप्रिया इमे॥
यक्षधूपः सर्ज्जरसः, पविवाहादयो धूपभेदाः।
भविष्यपुराणे,—
अगुरुं धूपमावेद्य वाजपेयफलं लभेत्।
सितागुरुं नरो दग्ध्वा गोमेधफलं लभेत्॥
महिषाख्यं घृताक्तञ्च दग्ध्वा विल्वमथापि वा।
वाजपेयफलं प्राप्य दुर्गालोके महीयते॥
महिषाख्यं गुग्गुलुः।
तथा,—
घृतप्रदीपः प्रथमस्तिलतैलोद्भवस्ततः।
नेत्राह्लादकरः स्वर्चिर्दूरतापविवर्ज्जितः॥
सुशिखः शब्दरहितो निर्धूमो नातिह्रस्वकः।
दक्षिणे दीपवृक्षस्थः प्रदीपः श्रीविवृद्धये॥
वृक्षेषु दीपो दातव्यो न तु भूमौ कदाचन।
दीपवृक्षाश्च कर्त्तव्यास्तैजसाद्यैः प्रयत्नतः॥
न निर्व्वापय दद्यात्तु दीपवेरान् घृतादिकान्।
दत्वा निर्व्वापनं यस्य तामिस्रं नरकं व्रजेत्॥
प्रथमो मुख्यः।
दूरतापं विवृणोति तत्रैव,—
लभते यस्य तापस्तु दीपस्य चतुरङ्गुलात्।
न च दीप इति ख्यातो ओघवह्निरिति स्मृतः॥

तत्रैव,—

ग्राम्यं वाहरजं वाथ्यं जीवं मधिजमेव वा।

उपयुञ्जन्तु गादयादृ वर्त्तिकार्थे कथञ्चन ॥

ग्राम्यं ग्रामक्षूयं, वाहरजं वज्रादग्राम्।

मन्नुः— दग्धां विवर्ज्जयेत् प्राज्ञो यद्यप्यासवकाजाम् ॥

उपयुक्तं पूर्व्वकृतोपयोगम्।

तत्रैव,—

तैजसं दारवं चौहं मार्त्तिकं नारिकेलजम्।

तृणराजोद्भवं वापि दीपपात्रं प्रशस्यते ॥

तृणराजोद्भवं तालफलाखिमयम् ॥

भारते,—

नैव निर्व्वापयेद्दीपं देवार्थमुपकल्पितम्।

दीपहर्त्ता भवेदन्धः काणो निर्व्वापको भवेत् ॥

कालिकापुराणे,—

सौवीरं माञ्जनं तथ्यं मयूरग्रीकरं तथा।

दर्भिका नेत्रजौका च मञ्जनानि भवन्ति षट् ॥

एषा निपात्य चैतानि त्रिवाया तैजसेऽपि वा।

प्रदद्यात् सर्व्वदेवेभ्यो देवीभ्यश्चापि पुत्रक ॥

सौवीरादिषखाञ्जनानि प्रस्तररूपाणि बहीव देयानि। निपात्य

च दर्भिकाञ्जनं देयम्।

तद्वाच तत्रैव,—

एतैकाणिकोषेन नाथादौ यात्य-पत्रिणा।

यद्दानं जायते तद्द्विका परिकीर्त्तिता ॥
विधवा नाञ्जनं कुर्य्यात्—महामायार्थमुत्तमम् ।
न मृत्पात्रे योजयेत्तु साधको नैवरञ्जनम् ॥

नैवेद्यन्तु फलपायससन्देशादि बहुविधम् ।

तदुक्तं तत्रैव,—

भक्ष्यं भोज्यञ्च लेह्यञ्च चर्व्यं चोष्यञ्च पञ्चमम् ।
भक्ष्यादिपञ्चकैर्द्देवी दत्तैरेवाशु तुष्यति ॥
नादत्ते विधिवत् किञ्चिद् दत्तं भवति न क्वचित् ।
हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम् ॥
निवेदयेन्महादेव्यै सर्व्वाणि व्यञ्जनानि च ।
उपस्कृतानि मांसानि मत्स्यानि विविधानि च ॥
पूजासु नाममांसानि योजयेत्तु कदाचन ।
क्षीरादीन्यथ गव्यानि माहिष्याणि च सर्व्वशः ॥
परमान्नं पिष्टकञ्च यावकं कृशरं दधि ।
मोदकं पृथुकादीनि कन्दुपक्वानि चोत्सृजेत् ॥
नारिकेलं कपित्थञ्च द्राक्षां क्रमुकमेव च ।
दाडिमं श्रीफलं कोलं कुष्माण्डं पनसन्तथा ॥
बकुलञ्च मधूकञ्च रसालाम्रातके उडुम् ।
कदलीं चोरसञ्चोत्थं करुणं कर्कटीफलम् ॥
आम्लवं पिण्डखर्ज्जूरं बीजपूरञ्च जम्बुकम् ।
हरीतकीमामलकं चिञ्चां नागरङ्गकम् ॥
मातुलुङ्गञ्च लकुचं लवलीं करमर्द्दकम् ।

शृङ्गाटकं कशेरुञ्च शालूकञ्च मृणालकम् ॥
कुमुदानां पङ्कजानां फलानि च निवेदयेत् ।
यानि लोके प्रशस्तानि स्वादूनि च मृदूनि च ॥

तथा,—

बालप्रियैश्च नैवेद्यैर्लाजाक्षतफलादिभिः ।
इक्षुदण्डैस्तद्विकारैस्तथा गुड़सितादिभिः ॥
पूजयेज्जगतां धात्रीं सर्व्वकामार्थसिद्धये ॥

यत्किञ्चिद्विधिवद्दत्तं न भवति तद्देवी नादत्त इत्यर्थः । क्रमुकं गुवाकं, आम्रवं जम्बुफलं, जम्भलं जम्बीरम्[1] ।

तथा तत्रैव,—

ताम्बूलं पत्रसंयुक्तं कर्पूरादिसुवासितम् ।
सचूर्णं नलजानाञ्च संस्कृतं विनिवेदयेत् ॥

नमस्कारमाह तत्रैव,—

सर्व्वमङ्गलमङ्गल्ये शिवे सर्व्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥
सप्तधावर्त्तनं कृत्वा स्तुतिमेताञ्च साधकः ।
पञ्चप्रणामान् कुर्व्वीत ऐं ह्रीं श्रीमिति मन्त्रकैः ॥

तथा,—

गन्धः पुष्पं तथा धूपो दीपो नैवेद्यमेव च ।
यस्य यद्दीयते द्रव्यमलङ्कारादिकाञ्चनम् ॥

---

१ ख पुस्तके, जम्बीरम् ।

तेषां देवतानुध्यानं कृत्वा प्रोक्षणपूजने ।
उत्सृज्य मूलमन्त्रेण प्रतिमायां निवेदयेत् ॥
वस्त्रस्य तु बीजेन तेषां प्रोक्षणमाचरेत् ।
अर्घ्यपात्रस्थितैस्तोयैर्विना यद्विनिवेदितम् ॥
दीयते येन देवेभ्यः सर्वं तन्निष्फलं भवेत् ।
वेगान्मोहात् प्रमादाद्वा अर्घ्यपात्रपरिष्कृतम् ॥
तोयं च्युतञ्च तत्पात्रात् पुनः कुर्य्यात् तदामृतम् ।
अप्यावशेषे तोये तु पात्रे मन्त्रामृतीकृते ॥
तथान्यदुदकं दद्यात् तत्तेनैवामृतं भवेत् ।
नार्घ्यं प्रदद्यादन्येभ्यो मूलदेवाय कल्पितम् ॥
परिवारगणांस्तत्र सामान्यार्घ्येण पूजयेत् ॥

[[1]प्रोक्षणपूजने कृत्वा द्रव्यदेवतानुध्यानं मूलमन्त्रेणोत्सृज्य द्रव्यनाम चोक्त्वा देवतायै निवेदयेदित्यर्थः ।

मूलमन्त्रश्च, दुर्गातन्त्रसंज्ञको दशाक्षरदुर्गामन्त्रः ।

तथोक्तम्,—

ध्यायेद्दशभुजां देवीं दुर्गातन्त्रेण पूजयेत् ॥]

मन्त्र उक्तो यथा तत्रैव,—

तारो दुर्गेद्वयं रेफः मान्तो ठान्तः सलोचनः ।
दशात्मा जयदुर्गेयं दुर्गातन्त्रमिति स्मृतम् ॥

ध्यानञ्च जटाजूटसमायुक्तामित्यादि वक्ष्यमाणम् ।

---

१ ख पुस्तके, [ ] चिह्नितांशो नास्ति ।

पत्रिकापूजोक्ता भविष्ये,—

ब्रह्माणी कदलीकाण्डे दाडिमे रक्तदन्तिका ।
धान्ये लक्ष्मीर्हरिद्रायां दुर्गा मानकपत्रके ॥
चामुण्डा कालिका कच्व्यां शिवा बिल्वे प्रतिष्ठिता ।
अशोके शोकरहिता जयन्त्यां कार्त्तिकी मता ॥

अथावरणपूजा ।

शारदातिलके,—

अङ्गादिलोकपालान्तं यजेदावरणान्यपि ।

इति सर्व्वदेवतासाधारणवचनात्, प्रथममङ्गपूजा, पश्चाद्दिक्-पालपूजा कर्त्तव्या ।

अङ्गान्युक्तानि शारदातिलके,—

तारादिदुर्गे हृदयं दुर्गे शिर[1] उदीरितम् ।
दुर्गायै स्वाच्छिखा वर्म्म भूतरक्षिणि कीर्त्तितम् ॥
तारादिदुर्गे त्रितयं रक्षणि प्रकीर्त्तितम् ।
तारादिदुर्गे युगलं रक्षण्यस्त्रमुदीरितम् ॥

तथा,—

केशरेष्वग्निकोणादि हृदयादीनि पूजयेत् ।
नेत्रमग्रे दिशास्वस्त्रं पूजयेत्तत्स्वपि ॥

अथवा कालिकापुराणोक्ताङ्गविधिर्ग्राह्यः ।

यथा,—

मायाबीजेन षड्दीर्घभाजा कुर्य्यात् षडङ्गकम् ॥

---

१ ख पुस्तके, शिरो ।

तथैव नानाद्रव्यैः पूजामभिधाय परिवारपूजामाह।

कालिकापुराणे,—

उग्रचण्डादिकाः पूज्यास्तथाष्टौ योगिनीः शुभाः।
योगिनीश्च चतुःषष्टिं तथा वै कोटियोगिनीः॥
नवदुर्गास्तथा पूज्या देव्याः सन्निहिते शुभाः।
जयन्त्यादीर्गन्धपुष्पैश्च देव्या मूर्त्तयो यतः॥
देव्याः सर्व्वाणि शस्त्राणि भूषणानि तथैव च।
अङ्गप्रत्यङ्गयुक्तानि वाहनं सिंहमेव च॥
महिषासुरमर्द्दिन्याः पूजयेद्भूतये सदा॥

तथा,—

मायाबीजपदाद्येन पूजयेत् सर्व्वमातरः॥

इति सामान्यपरिभाषा।

पद्ममूलेषु उग्रचण्डाद्याः पूजयेत्। यथा,—

उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका।
चण्डा चण्डवती चैव चण्डरूपा च चण्डिका॥
पूर्व्वादिष्वष्टपत्रेषु क्रमादेताः प्रपूजयेत्॥

अतः पद्ममध्ये अष्टाष्टत्या चतुःषष्टियोगिनीः प्रपूजयेत्। तास्तु ब्रह्माण्याद्या महागौर्य्यन्ताः कालिकापुराणोक्ताः प्रयोगेऽभिधास्यन्ते। ततः कोटियोगिनीभ्यो नमः इति पाद्यादिभिरेकत्र कोटियोगिनीः पत्राग्रे पूजयेत्। पुराणान्तरोक्ता उपयोगिन्योऽपि कोटियोगिन्यन्तर्गता एव। एवं देशविशेषदेवता अपि तदन्तर्गता एवेति न पृथक्पूज्याः।

तथा कालिकापुराणे,—

ततो देव्याः सन्निधाने नवदुर्गाः प्रपूजयेत् ।
ईशानादिक्रमाद् द्वे-द्वे मध्ये च पूजयेत् ॥
ब्रह्माणीं प्रथमञ्चैव तथा माहेश्वरीमपि ।
कौमारीं वैष्णवीञ्चैव वाराहीञ्च तथैव च ॥
नारसिंहीं तथैन्द्रीं चामुण्डां चण्डिकां तथा ॥

जयन्त्यादिका अपि देवीसन्निधाने पूजयेत् ।

जयन्तीं मङ्गलां कालीं भद्रकालीं कपालिनीम् ।
दुर्गां शिवां क्षमां धात्रीं स्वधां स्वाहाञ्च पूजयेत् ॥

अस्त्राणि तथैवोक्तानि,—

त्रिशूलं दक्षिणे ध्येयं खड्गं चक्रं क्रमादधः ।
तीक्ष्णबाणं तथा शक्तिं दक्षिणे सन्निवेशयेत् ॥
खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च ।
घण्टां वा परशुं वापि वामतः सन्निवेशयेत् ॥

ॐ किरीटादिभ्यो देव्यलङ्कारभूषणेभ्यो नमः, इत्येकत्र पूजयेत् । तथा देव्यग्रे सिंहं महिषासुरमपि पूजयेत् ।

महिषासुरवरदाने देव्युवाच,—

मम प्रवर्त्तते पूजा यत्र यत्र च तत्र ते ।
पूजयिष्यन्ति तथैव कायोऽयं तव दानव ॥

तथा भाविष्यिकदुर्गापूजायां तथैव,—

देव्यास्तु दक्षिणपार्श्वे प्रत्यालीढेन दानवम् ।
पञ्चाननं कायस्थं दैत्यमग्रे प्रपूजयेत् ॥

अन्ते च अष्टपालाः पूज्याः,—

अष्टादिग्लोकपालांस्तं यजेदावरणान्यपि।

इति वचनात्।

एवमेव शारदीपूजोक्ता कालिकापुराणे। कामाख्यापूजाया-मुक्तान् वटुकक्षेत्रपालभैरवान् केचित् पूजयन्ति।

तथा तत्रैव,—

होमञ्च घृततिलैराज्यैर्मांसैर्वाथ समाचरेत्।

स चाष्टाधिकं सहस्रं शतं वा दुर्गातन्त्रमन्त्रेणैव कार्य्यः। तथा पूजितपरिवाराणामपि एकैकाहुतिर्देया।

विष्णुधर्म्मे,—

मन्त्रेणोङ्कारपूर्व्वेण स्वाहान्तेन विचक्षणः।

स्वाहावसाने जुहुयाद् हृदि ध्यात्वेष्टदेवताम्॥

अथ बलिदानम्।

कालिकापुराणे,—

पक्षिणः कच्छपा ग्राहा मत्स्याः पञ्चविधा मृगाः।

महिषो गवयो गावश्छागोरभ्रौ च शूकरः॥

खड्गश्च कृष्णसारश्च गोधिका शरभो हरिः।

शार्दूलश्च नरश्चैव स्वगात्ररुधिरं तथा॥

चण्डिकाभैरवादीनां बलयः परिकीर्त्तिताः।

शरभो मेषः, खड्गो गण्डकः, हरिः सिंहः।

तथा,—

पशूनां पक्षिणां वापि नराणाञ्च विशेषतः।

स्त्रियं न दद्यात्तु बलिं दत्त्वा नरकमाप्नुयात् ॥
न च षैमासिकान्न्यूनं पशुं दद्याच्छिवाबलिम् ।
न च षैपक्षिकान्न्यूनं प्रदद्याद्वै पतत्रिणम् ॥
काणखञ्जादिदुष्टन्तु न पशुं पक्षिणं तथा ।
छिन्नलाङ्गूलकर्णादिभग्नदन्तं तथैव च ॥
भग्नशृङ्गादिकञ्चैव न दद्यात्तु कदाचन ।
अनुक्तं नापि दद्यात्तु तथाऽज्ञातान् मृगद्विजान् ॥

तथा,—

बलिभिः साध्यते मुक्तिर्बलिभिः साध्यते दिवम् ।
बलिदानेन सततं जयेच्छत्रून् नृपान् नृपः ॥
मत्स्यानां कच्छपानाञ्च रुधिरैः सततं शिवा ।
मासैकं तृप्तिमाप्नोति ग्राहैर्मासांश्च त्रीनथ ॥
मृगाणां शोणितैर्देवी गवयानां विशेषतः ।
अष्टौ मासानवाप्नोति तृप्तिं कल्याणदा शिवा ॥
गोगोधिकानां रुधिरैर्वार्षिकीं तृप्तिमाप्नुयात् ।
कृष्णसारस्य रुधिरैः शूकरस्य च शोणितैः ॥
आप्नोति सततं प्रीतिं देवी द्वादशवार्षिकीम् ।
अजाविकानां रुधिरैः पञ्चविंशतिवार्षिकीम् ॥
महिषाणाञ्च खड्गानां रुधिरैः शतवार्षिकीम् ।
तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथा ॥
सिंहस्य शरभस्याथ स्वगात्रस्य च शोणितैः ।
देवी तृप्तिमवाप्नोति सहस्रं परिवत्सरान् ॥

तथा,—नारं मध्ये शिरोरक्तं देव्यै सम्यक् निवेदयेत् ।

छागन्तु वामतो दद्यान्माहिषं वितरेत् पुरः ॥
पाक्षिणं वामतो दद्याद्दत्तो देवप्रोक्षितम् ।
क्रव्यादानां पशूनाञ्च पक्षिणाञ्च शिरोऽसृजाम् ॥
वामे निवेदयेत् पार्श्वे जलजानाञ्च सर्व्वशः ।
कृष्णसारस्य कूर्म्मस्य खड्गस्य शशकस्य च ॥
पाठीनानामथ मत्स्यानामग्र एव निवेदयेत् ।
पृष्ठदेशे न दद्यात्तु शिरो वा रुधिरं बलेः ॥
नैवेद्यं दक्षिणे वामे पुरतो न तु पृष्ठतः ।
दीपं दक्षिणतो दद्यात् पुरतो वा न वामतः ॥
वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे ।
निवेदयेत् पुरोभागे गन्धं पुष्पञ्च भूषणम् ॥
मदिरां पृष्ठतो दद्यात् अशक्त् पानन्तु वामतः ।

तथा तत्रैव,—

चन्द्रहासेन कर्त्र्या वा छेदनं मुख्यमुच्यते ।
दात्रासिधेनुकंकचशङ्कुलाभिश्च मध्यमम् ॥

चन्द्रहासः खड्गः, असिधेनुः स्वल्पखड्गः, शङ्कुला यन्त्रकर्त्तरी ।

क्षुरक्षुरप्रभल्लैश्च अधमं परिकीर्त्तितम् ।
एभ्योऽन्यैः शक्तिबाणाद्यैर्बलिच्छेदः कदापि न ॥
नाप्नोति देवी बलिं तन्तु दाता मृत्युमवाप्नुयात् ।
हस्तेन छेदयेद् यस्तु प्रोक्षितं साधकः पशुम् ॥
पक्षिणं वा ब्रह्महत्यां स प्राप्नोति निश्चयः ।

# अथ कालिकापुराणोक्तशरत्कालीनदुर्गामहोत्सव-प्रयोगः।

अष्टादशभुजापूजायां कृष्णनवम्यां विल्ववृक्षे देव्या बोधनम्। षोड़शभुजापूजापक्षे तु चतुर्द्दश्यां बोधनम्। चतुर्भुजापूजापक्षे तु शुक्लप्रतिपदि बोधनम् ।

अथ चतुर्थ्यां देवीं पूजयित्वा कङ्कतिकादिकेशोद्वर्त्तनसामग्री-दानम्। पञ्चम्यां सुगन्धजलेन स्नापनं कार्य्यम्। दशभुजापूजापक्षे तु शुक्लप्रतिपदमारभ्य एकभक्तं ब्रह्मचर्य्यञ्च विधाय षष्ठ्यां सायंसमये विल्ववृक्षे देवीं बोधयेत्।

कृतनित्यक्रियो यजमानः स्वस्ति वाच्य सङ्कल्पं कुर्य्यात्। अद्येत्यादि कर्त्तव्य[1] शरत्कालीनदुर्गापूजाकर्म्मणि श्रीविल्ववृक्षे श्रीभगवद्दुर्गाबोधन-कर्म्म करिष्ये। ततो भूतशुद्ध्यादिकं विधाय, भगवतीं विल्ववृक्षे आवा-ह्योपचारैः सम्पूज्य, विल्ववृक्षञ्च सम्पूज्य तत्र गीतवाद्यैर्देवीं बोधयेत्।

ऐं रावणस्य वधार्थाय रामस्यानुग्रहाय च।
अकाले ब्रह्मणा बोधो देव्या-स्त्वयि कृतः पुरा॥
अहमप्याश्विने षष्ठ्यां सायाह्ने बोधयामि वै।
शक्रेणापि च संबोध्य प्राप्तं राज्यं सुरालये॥

तस्मादहं त्वां प्रतिबोधयामि
विभूतिराज्यप्रतिपत्तिहेतोः।
यथैव रामेण हतो दशास्य-
स्तथैव शत्रून् विनिपातयामि॥

---

१ क, पुस्तके कर्त्तव्यपदं नास्ति।

[illegible]—

कदलीतरुसंस्थाऽसि विष्णोर्वक्षःस्थलाश्रये।
नमस्ते नवपत्रि त्वं नमस्ते चण्डनायिके॥
कच्वि त्वं स्थावरस्थाऽसि सदा सिद्धिप्रदायिनी।
दुर्गारूपेण सर्व्वत्र स्नानेन विजयं कुरु॥
हरिद्रे हररूपाऽसि शङ्करस्य सदा प्रिये।
रुद्ररूपाऽसि देवि त्वं सर्व्वशान्तिं प्रयच्छ मे॥
जयन्ति जयरूपाऽसि जगतां जयकारिणी।
स्नापयामीह देवि त्वां जयं देहि गृहे मम॥
श्रीफल श्रीनिकेतोऽसि सदा विजयवर्द्धनः।
देहि मे हितकामांश्च प्रसन्नो भव सर्व्वदा॥
दाडिम्यघविनाशाय क्षुन्नाशाय सदा भुवि।
निर्म्मिता फलकामाय प्रसीद त्वं हरप्रिये॥
स्थिरा भव सदा दुर्गे अशोके शोकहारिणि।
मया त्वं पूजिता दुर्गे स्थिरा भव भवप्रिये॥
मानो मान्येषु वृक्षेषु माननीयः सुरासुरैः।
स्नापयामि महादेवीं मानं देहि नमोऽस्तु ते॥
लक्ष्मीस्त्वं धान्यरूपाऽसि प्राणिनां प्राणदायिनी।
स्थिरात्यन्तं हि नो भूत्वा गृहे कामप्रदा भव॥

तीर्थैश्च,—

कावेरी भारती गङ्गा यमुना च सरस्वती।
सरयूर्गण्डकी पुण्या श्वेतगङ्गा च कौशिकी॥

भोगवती च पाताले स्वर्गे मन्दाकिनी तथा।
सर्वाः सुमनसो भूत्वा भृङ्गारैः स्नापयन्तु ताः॥
सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणः प्रभुः॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते।
आखण्डलोऽग्निर्भगवान् यमो वै नैर्ऋतस्तथा॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः।
ब्रह्मणा सहितः शेषो[1] दिक्पालाः पान्तु ते सदा॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधाः पुष्टिः श्रद्धा क्रिया मतिः।
बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः॥
एतास्त्वामभिषिञ्चन्तु धर्मपत्न्यः सुसंयताः।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः।
ऋषयो मुनयो गावो देवमातर एव च॥
देवपत्न्योऽप्सरा नागा दैत्याश्चाप्सरसाङ्गणाः।
एते त्वामभिषिञ्चन्तु धर्मकामार्थसिद्धये॥
सिन्धुभैरवशोणाद्या ये ह्रदा भुवि संस्थिताः।
सर्वे सुमनसो भूत्वा भृङ्गारैः स्नापयन्तु ते॥
तक्षकाद्याश्च ये नागाः पातालतलवासिनः।
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च॥
औषधानि च रत्नानि कालस्यावयवाश्च ये।

१ क, शेषा।

मधुधाराजलेन,—

सागराः सरितः सर्व्वाः सर्व्वस्रोतो महास्तथा।
सर्व्वौषधिभिः पापन्नाः सकलैः स्नापयन्तु ते॥
लवणेक्षुसुराघर्पिर्दधिदुग्धजलैस्तथा।
सहस्रधारया देवीं स्नापयामि महेश्वरीम्॥

घटचतुष्टयेन,—

ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम्॥

ॐ इषे त्वोर्ज्जे त्वा वायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मणे॥

ॐ अग्न आयाहि वीतये गृणानो हव्यदातये।
निहोता सत्सि वर्हिषि।

ॐ शन्नो देवीरभिष्टये आपो भवन्तु पीतये।
शंयोरभिस्रवन्तु नः॥

ततो गङ्गाजलपूर्णघटेन,—

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः।
व्योमगङ्गाम्बुपूर्णेन आद्येन कलसेन तु॥
मालवरागो विजयवाद्यम्।

वृष्टिजलपूरितघटेन,—

मरुतस्त्वाभिषिञ्चन्तु भक्तिमन्तः सुरेश्वरि।
मेघतोयाम्बुपूर्णेन द्वितीयकलसेन तु॥
ललितरागो देववाद्यम्।

सरस्वतीजलपूरितघटेन,—

सारस्वतेन तोयेन सम्पूर्णेन सुरोत्तमे ।
विद्याधरास्त्वाभिषिञ्चन्तु तृतीयकलसेन तु ॥

विभासरागो दुन्दुभिवाद्यम् ।

सागरोदकपूरितघटेन,—

शक्राद्यास्त्वाभिषिञ्चन्तु लोकपालाः समागताः ।
सागरोदकपूर्णेन चतुर्थकलसेन तु ॥

भैरवीरागो भीमवाद्यम् ।

पद्मरजोमिश्रितघटेन,—

वारिणा परिपूर्णेन पद्मरेणुसुगन्धिना ।
पञ्चमेनाभिषिञ्चन्तु नागाश्च कलसेन तु ॥

कोडीराग इन्द्राभिषेकवाद्यम् ।

निर्झरोदकपूरितघटेन,—

हिमवद्धेमकूटाद्या अभिषिञ्चन्तु पर्व्वताः ।
निर्झरोदकपूर्णेन षष्ठेन कलसेन तु ॥

वाराडीरागः शङ्खवाद्यम् ।

सर्व्वतीर्थाम्बुपूरितघटेन,—

सर्व्वतीर्थाम्बुपूर्णेन कलसेन सुरेश्वरि ।
सप्तमेनाभिषिञ्चन्तु ऋषयः सप्त खेचराः ॥

वसन्तरागः पञ्चशब्दवाद्यम् ।

वसवस्त्वाभिषिञ्चन्तु कलसेनाष्टमेन तु ।
अष्टमङ्गलसंयुक्ते दुर्गे देवि नमोऽस्तु ते ॥

धानुश्रीरागो विजयवाद्यम् ।

[illegible] विधिना सप्तम्यां पूजयेत्तु यः ।
सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥
अनेन विधिनाऽष्टम्यां यः पूजयति चण्डिकाम् ।
अष्टौ वर्षसहस्राणि स्वर्गे तिष्ठेद्यथासुखम् ॥
नवम्यां पूजनादेव धनपुत्रविवर्द्धनम् ।
शतयज्ञफलञ्चैव लभते नात्र संशयः ॥

"ततो भूतेभ्यो नमः" इति पाद्यादिभिः सम्पूज्य माषभक्तबलिं गृहीत्वा,—

ॐ भूताः प्रेताः पिशाचाश्च ये वसन्त्यत्र भूतले ।
ते गृह्णन्तु मया दत्तो बलिरेष प्रसाधितः ॥
पूजिता गन्धपुष्पाद्यैर्बलिभिस्तर्पितास्तथा ।
देशादस्माद् विनिःसृत्य पूजां पश्यन्तु मत्कृताम् ॥

भूतेभ्य एष माषभक्तबलिर्नम इति दद्यात् ।

विलुम्पन्ति सदा लुब्धा न च गृह्णन्ति देवताः ।
तस्माद् यत्नेन कर्त्तव्यं भूतानामपसारणम् ॥

ततो यागयज्ञविघ्नार्थमक्षदूर्वाकुशाक्षतान् विकिरन् ॐफडिति मन्त्रेण सप्तवाराभिमन्त्रितान् गृहीत्वा,—

ॐ अपसर्पन्तु ते भूता ये भूता भूमिपालकाः ।
भूतानामविरोधेन दुर्गापूजां करोम्यहम् ॥
वेतालाश्च पिशाचाश्च राक्षसाश्च सरीसृपाः ।
अपसर्पन्तु ते सर्वे चण्डिकास्त्रेण ताडिताः ॥

इति मन्त्राभ्यां भूतादीनपसारयेत् ।

ततो द्वारदेशमानीय "ॐ विल्वशाखावासिन्यै दुर्गायै नमः" इति पाद्यादिभिः सम्पूज्य तां देवीरूपां ध्यात्वा दूर्व्वाक्षतं देव्याः शिरसि दत्त्वा निर्मञ्छयेत्।

ततो देव्या आसनं धृत्वा,—

चण्डिके चल चल चालय चालय पूजालयं प्रविश प्रविश।

गम्यतां मद्गृहे देवि अष्टाभिः शक्तिभिः सह।

पूजां गृहाण सुमुखि सर्व्वकल्याणहेतवे॥

इति पठित्वा देवीं सङ्गाह्य नृत्यगीतवाद्यादिभिर्देवीं दक्षिणामुखीं कृत्वा वेदिकोपरि स्थापयेत्। ॐ ऐं ह्रीं श्रीं स्थौं लमम्बिके स्थिरीभवेति स्थिरीकुर्य्यात्। तथैव नवपत्रिकाः स्थापयेत्। ततः सर्व्वतोभद्रमण्डले घटं स्थापयेत्।

चित्रघटं वहिर्दध्यक्षतभूषितमन्तःसहेमपञ्चरत्नं वस्त्रयुग्मग्रीवं पुष्पाद्यलङ्कृतं चूताश्वत्थपल्लवमुखमुपरिफलाक्षतान्वितशरावं मण्डलमध्ये यवपुञ्जोपरि स्थापयित्वा,—

ॐ आजिघ्र कलसं मह्यात्मा विशन्त्विन्दवः। पुनरूर्ज्जा निवर्त्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः।

इति मन्त्रेणाभिमन्त्र्य,—

ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनीस्थः। वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनीमासीद॥

इति मन्त्रेण जलेनापूर्य्य,—

ॐ स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्व्वन्। पृथुर्भव सुदस[१]स्त्वमग्नेः पुरीषवाहनः॥

---

[१] ग, सुषदः।

इति मन्त्रेण स्थिरीकृत्य अङ्कुशमुद्रया तीर्थमावाहयेत्,—

ॐ गङ्गाद्याः सरितः सर्व्वाः सागराश्च सरांसि च।
सर्व्वे समुद्राः सरितः सरांसि च नदा ह्रदाः॥
आयान्तु यजमानस्य दुरितक्षयकारकाः॥

गङ्गे च यमुने चेत्यादि।

ततः पर्व्वतगजदन्तवल्मीकनदीसङ्गमदेवद्वारनृपद्वार[1]गोकुलेभ्य आहृताः सप्त मृत्तिकाः सर्व्वौषधिविल्वादिफलगन्धदूर्व्वाक्षतान् नम इति मन्त्रेण निक्षिपेत्।

कालिकापुराणे,—

पुष्पनैवेद्यगन्धादि ह्रां ह्रीं ह्रूं फट् मन्त्रकैः।
नाराचमुद्रया दृष्ट्वा समया च विलोकयेत्॥
यदात्मनानवघ्रातं सम्यक्पुष्पादिदूषणम्।
अस्पृश्यस्पर्शनं वापि यदन्यायोजितञ्च वा॥
तथा निर्म्माल्यसंसृष्टं कीटाद्यारोहणञ्च यत्।
तत्सर्व्वं नाशमायाति नैवेद्याद्यवलोकनात्॥

ततः,—

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया॥

इति सिद्धार्थाक्षतान् विकीर्य्य पार्ष्णिघातत्रयेण भौमान्, तालत्रयेणान्तरीक्षगान्, दिव्यदृष्ट्यवलोकनेन दिव्यान् विघ्नानुत्सार्य्य

---

१ ख पुस्तके, नृपद्वारपदं नास्ति।

आसनं धृत्वा,—

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वञ्च धारय मां नित्यं पवित्रं कुरु चासनम्॥

इति पठित्वा ॐ आधारशक्तिकमलासनाय नमः, इति सम्पूज्य ॐ अः फडिति मन्त्रेण उदङ्मुखस्तत्रोपविश्य शिरसि—वामे गुरुभ्यो नमः, दक्षिणे गणेशाय नमः, मध्ये श्रीदुर्गायै नमः, नारदऋषि-र्मस्तके, गायत्रीच्छन्दो मुखे, श्रीदुर्गादेवता हृदि, मम सर्व्वाभीष्ट-सिद्ध्यर्थं श्रीदुर्गापूजने विनियोगः। ततः स्वस्ति वाच्य सङ्कल्पं कुर्य्यात्,—

ॐ अद्याश्विने मासि शुक्लपक्षे तिथौ महासप्तम्यामारभ्य अस्मिन् भारतभूदेशे अमुकगोत्रोऽमुकशर्म्मा परमनिर्वृतिप्राप्तिपूर्व्वकातुल-विभूतिचतुर्वर्गावाप्तिकामो यथाशक्ति शरत्कालीनां सपरिवारदुर्गा-पूजामहं करिष्ये।

इत्येक एव सङ्कल्पो न त्वष्टम्यादिष्वपि पृथक्सङ्कल्पः, एक-प्रयोगोपसंहारात्, फलैक्याच्च। विसर्ज्जनस्य तु पूजाङ्गत्वात् सुतरामेव तत्र नास्ति सङ्कल्पः।

ततः फडिति मन्त्रेण तालत्रयं दिग्बन्धनं करशोधनञ्च विधाय भूतशुद्धिं कुर्य्यात्।

तत्पश्चादात्मानं दीपशिखाकारं सुषुम्णा वर्त्मना हंस इति मन्त्रेण शिरसि सहस्रदलकमलस्थे परमात्मनि संयोज्य पादस्थ-पृथिवीं लिङ्गमूलस्थजले, तज्जलं हृदयस्थतेजसि, तत्तेजो मुखस्थे वायौ, तं वायुं भालस्थाकाशे, तदाकाशं सहस्रदलकमलस्थे परमा-त्मनि संयोज्य बुद्ध्यहङ्कारादींश्च तत्रैव लीनान् विचिन्त्य वामनासा-

पूरणेन यमिति धूम्रवर्णं वायुबीजं विचिन्त्य षष्ठाग्रद्वारं जपन् वायुमुत्तोल्य देहं शुष्कं विभाव्य दक्षिणनासया रेचयेत् ।

तेनैव दक्षिणनासापुटेन वायुमुत्तोल्य रमिति अग्निबीजमरुण-वर्णं षष्ठाग्रद्वारं जपन् देहं दग्धं विभाव्य वामनासया भस्मरूपेण पापेन सह रेचयेत् ।

ततस्तेनैव वामनासापुटेन वायुमुत्तोल्य सहस्रदलकमलस्थं परमात्मानं चन्द्ररूपं ध्यात्वा वमिति वरुणबीजं षष्ठाग्रद्वारं जपन् तस्माच्चन्द्रादमृतवृष्ट्या देहमाप्लाव्य लमित्यनेनेन्द्रबीजेन शुद्धं देहं जनयित्वा आत्मलीनानि पञ्चभूतानि यथास्थानं स्थापयित्वा सोऽहमिति मन्त्रेण परमात्मनः सकाशादहङ्कारादितत्त्वैः सह जीवात्मानं हृत्पद्मे स्थापयित्वा देवीरूपमात्मानं विचिन्त्य मातृका-न्यासं कृत्वा कराङ्गन्यासौ षड्दीर्घभाजा मायाबीजेन कुर्य्यात् ।

अथवा ॐ दुर्गे अङ्गुष्ठाभ्यां नमः, दुर्गे तर्ज्जनीभ्यां स्वाहा, दुर्गायै मध्यमाभ्यां वषट्, भूतरक्षणि अनामिकाभ्यां हुं, ॐ दुर्गे दुर्गे रक्षणि कनिष्ठाभ्यां वौषट्, ॐ दुर्गे दुर्गे रक्षणि करतल-पृष्ठाभ्यां फट् । ॐ दुर्गे हृदयाय नमः, दुर्गे शिरसि स्वाहा, दुर्गायै शिखायै वषट्, भूतरक्षणि कवचाय हुं, ॐ दुर्गे दुर्गे रक्षणि नेत्रत्रयाय वौषट् ॐ दुर्गे दुर्गे रक्षणि अस्त्राय फडिति तालत्रयं दिग्बन्धनञ्च कृत्वा ह्रीमिति मन्त्रेण प्राणायामं कृत्वा पीठन्यासं कुर्य्यात्,—

हृदये—आधारशक्तये नमः, कूर्म्माय, अनन्ताय, पृथिव्यै, समुद्राय, रत्नद्वीपाय, मणिमण्डपाय, कल्पवृक्षाय, रत्नवेदिकायै ।

दक्षिणांसे—धर्म्माय । वामांसे—ज्ञानाय ।

वामोरुमूले—वैराग्याय । दक्षिणोरुमूले—ऐश्वर्य्याय ।

मुखे—अधर्म्माय ।

वामपार्श्वे—अज्ञानाय । नाभौ—अवैराग्याय ।

दक्षिणपार्श्वे—अनैश्वर्य्याय ।

हृदये,—

शेषाय, पद्माय, अं सूर्य्यमण्डलाय, उं सोममण्डलाय, मं वह्निमण्डलाय, सं सत्त्वाय, रं रजसे, तं तमसे, आं आत्मने, अं अन्तरात्मने, पं परमात्मने, ह्रीं ज्ञानात्मने नमः ।

प्रादक्षिण्येन हृदयाष्टदिक्षु मध्ये च,—

आं प्रभायै, ईं मायायै, ऊं जयायै, एं सूक्ष्मायै, ऐं विशुद्धायै, ॐ नन्दिन्यै, औँ सुप्रभायै, अं विजयायै, अः सर्व्वसिद्धिप्रदायै नमः ।

पुनर्मध्ये,—

ॐ वज्रनखदंष्ट्रायुधाय महासिंहाय हुं फट् नमः, इति विन्यस्य ध्यानं कुर्य्यात् ।

जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम् ।
लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ॥
तप्तकाञ्चनवर्णाभां सुप्रतिष्ठां सुलोचनाम् ।
नवयौवनसम्पन्नां सर्व्वाभरणभूषिताम् ॥
सुचारुदशनां[1] तद्वत्[2] पीनोन्नतपयोधराम् ।

---

१ क, ०दर्शनाम् । २ ख पुस्तके, देवीम् ।

त्रिभङ्गस्थानसंस्थानां महिषासुरमर्द्दिनीम् ॥
मृणालायतसंस्पर्शदशबाहुसमन्विताम् ।
त्रिशूलं दक्षिणे ध्येयं खड्गं चक्रं क्रमादधः ॥
तीक्ष्णवाणं तथा शक्तिं दक्षिणे सन्निवेशयेत् ।
खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च ॥
घण्टां वा परशुं वापि वामतः सन्निवेशयेत् ।
अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् ॥
शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम् ।
हृदि शूलेन निर्भिन्नं निर्य्यदन्त्रविभूषितम् ॥
रक्तरक्तीकृताङ्गञ्च रक्तविस्फुरितेक्षणम् ।
वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् ॥
सपाशवामहस्तेन धृतकेशञ्च दुर्गया ।
वमद्रुधिरवक्त्रं तं देव्याः सिंहं प्रदर्शयेत् ॥
देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम् ।
किञ्चिदूर्द्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ॥
स्तूयमानञ्च तद्रूपममरैः सन्निवेशयेत् ।
उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ॥
चण्डा चण्डवती चैव चण्डरूपा च चण्डिका ।
अष्टाभिः शक्तिभिस्ताभिः सततं परिवेष्टिताम् ॥
चिन्तयेज्जगतां धात्रीं धर्म्मकामार्थमोक्षदाम् ॥

एवं ध्यात्वा मानसैरुपचारैः सम्पूज्यार्घ्यस्थापनं कुर्य्यात् ।
अस्त्राय फडिति मन्त्रेण शङ्खं प्रक्षाल्य वामभागे त्रिकोणमण्ड-

लोपरि आधारं स्थापयित्वा नम इति मन्त्रेण गन्धपुष्पे प्रक्षिप्य अकाराद्यकारान्तैर्वर्णैर्मूलमन्त्रत्रिजपेन च पूरयित्वा, मं दशकला-व्याप्तवह्निमण्डलाय नम इत्याधारं सम्पूज्य, अं द्वादशकलाव्याप्त-सूर्य्यमण्डलाय नम इति शङ्खं, ऊं षोडशकलाव्याप्तचन्द्रमण्डलाय नम इति जलञ्च सम्पूज्य,—

ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति।

इत्यादिना तीर्थमावाह्य षडङ्गानि विन्यस्य दुर्गारूपं जलं ध्यात्वा कराभ्यामर्घ्यपात्रमाच्छाद्य मूलमन्त्रमष्टधा जप्त्वा तालत्रय-दिग्बन्धनाभ्यां संरक्ष्य वं इत्यवगुण्ठ्य धेनुमुद्रया अमृतीकुर्य्यात्।

अर्घ्यस्य दक्षिणे ॐ फडिति प्रोक्षणीपात्रं संप्रोक्ष्य जलेनापूर्य्य गन्धपुष्पे दत्त्वा तीर्थमावाह्य अर्घ्यजलं किञ्चिद्दत्त्वा तज्जलेनात्मानं पूजोपकरणञ्चाभ्युक्षयेत्।

अर्घ्यस्योत्तरतः कार्य्यं पाद्यमाचमनीयकम्।

ततो देवीरूपमात्मानं विभाव्य गन्धपुष्पैः सम्पूज्य पुष्पाञ्जलि-पञ्चकं शिरोहृदयमूलाधारपादसर्व्वाङ्गेषु निक्षिपेत्।

तत ऐशान्यां घटं[1] स्थापयित्वा तत्र गणपतिं ध्यात्वावाह्य पाद्यादिभिः सम्पूज्य,—

ॐ सर्व्वविघ्नहरो देव एकदन्तो गजाननः।
देवीमखेऽर्च्चितः प्रीत्या सर्व्वविघ्नं विनाशय॥

ततस्तत्र शस्त्राणां षष्ठांश्च पूजयेत्।

---

१ ख, ग, गणेशघटम्।

मण्डलमध्ये,—

ॐ आधारशक्तये नमः, कूर्म्माय, अनन्ताय, पृथिव्यै, समुद्राय रत्नद्वीपाय, मणिमण्डपाय, कल्पवृक्षाय, रत्नवेदिकायै ।

अग्न्यादिकोणेषु,—

धर्म्माय, ज्ञानाय, वैराग्याय, ऐश्वर्य्याय ।

दिक्षु,—

अधर्म्माय, अज्ञानाय, अवैराग्याय, अनैश्वर्य्याय ।

मध्ये,—

शेषाय, पद्माय, अं सूर्य्यमण्डलाय, उं सोममण्डलाय, मं वह्निमण्डलाय, सं सत्वाय, रं रजसे, तं तमसे, आं आत्मने, अं अन्तरात्मने, पं परमात्मने, ह्रीं ज्ञानात्मने नमः ।

केशरेष्वष्टदिक्षु मध्ये च,—

आं प्रभायै, ईं मायायै, ऊं जयायै, एं सूक्ष्मायै, ऐं विशुद्धायै, ॐ नन्दिन्यै, औं सुप्रभायै, अं विजयायै, अः सर्व्वसिद्धिदायै नमः।

पुनर्मध्ये,—

ॐ वज्रनखदंष्ट्रायुधाय महासिंहाय हुं फट् नमः ।

इत्यासनं सम्पूज्य पुनर्भगवतीं पूर्व्ववत् ध्यात्वा मानसोपचारैः सम्पूज्य सुषुम्णावर्त्मना वह्नमासापुटेन तेजो निर्गमय्य पुष्पाञ्जलौ संस्थाप्य प्रतिमायां ब्रह्मरन्ध्रे प्रवेश्य "भगवति दुर्गे स्वकीयगणसहिते इहागच्छागच्छ" तिष्ठ तिष्ठ "सन्निहिता भव" "सन्निरुद्धा भव प्रसन्ना भवेत्यावाहनस्थापनसन्निरोधनसंमुखीकरणामृतीकरणमुद्राः प्रदर्शयेत् ।

ततो मूलमन्त्रेण ष्यावयवौकृत्य षड़ङ्गानि विन्यस्य प्रतिमायां पत्रिकायाञ्च च इस्तं दत्वा पठेत्,—

आगच्छ मङ्गले देवि अष्टाभिः शक्तिभिः सह।
पूजां गृहाण विधिवत् सर्व्वकल्याणकारिणि॥
एह्येहि भगवत्यम्ब शत्रुक्षयजयप्रदे।
भक्तितः पूजयामि त्वां नवदुर्गे सुरार्च्चिते॥
दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय।
यज्ञभागं गृहाण त्वमष्टाभिः शक्तिभिः सह।
आरप्सीयामिमां पूजां करोमि कमलेक्षणे।
आज्ञापय महादेवि दैत्यदर्पविनाशिनि॥
संसारार्णवदुष्पारे सर्व्वसत्त्वनिकृन्तनि।
त्रायस्व वरदे देवि नमस्ते शङ्करप्रिये॥
ये देवा यास्र देव्यश्च चलितायां चलन्ति वै।
आवाहयामि तान् सर्व्वान् चण्डिके परमेश्वरि॥
प्राणान् रक्ष यशो रक्ष पुत्रदारधनं सदा।
सर्व्वरक्षाकरी यस्मात् त्वं हि देवि जगत्प्रिये॥
प्रविश्य तिष्ठ यज्ञेऽस्मिन् यावत् पूजां करोम्यहम्।
मेनानन्दकरे देवि सर्व्वसिद्धिश्च देहि मे॥
आगच्छ चण्डिके देवि सर्व्वकल्याणहेतवे।
पूजां गृहाण सुमुखि नमस्ते शङ्करप्रिये॥
आवाहयामि देवि त्वां मृण्मये श्रीफलेऽपि च।
कैलासशिखराद्देवि विन्ध्याद्रेर्हिमपर्व्वतात्॥

आमन्त्र्य बिल्वशाखायां चण्डिके कुरु सन्निधिम्।
[1]स्थापिताऽसि मया देवि पूजये त्वां प्रसीद मे॥
देवि चण्डात्मिके चण्डि चण्डविग्रहकारिणि[2]।
बिल्वशाखां समाश्रित्य तिष्ठ देवि गणैः सह॥
देवि त्वं जगतां मातः सृष्टिसंहारकारिणि।
पत्रिकासु समस्तासु सान्निध्यमिह कल्पय॥
पल्लवैश्च फलोपेतैः शाखाभिः सुरनायिके।
पल्लवे संस्थिते पूजां गृहाण देवि प्रसीद मे॥
आवाहिताऽसि देवि त्वं मृण्मये श्रीफलेऽपि च।
स्थिराऽत्यन्तं हि नो भूत्वा गृहे कामप्रदा भव॥
चण्डि त्वं चण्डरूपाऽसि सुरतेजो महाबले।
प्रविश्य तिष्ठ यज्ञेऽस्मिन् यावत् पूजां करोम्यहम्॥

ततः पञ्चमन्त्रान् जपेत्।

ॐ हंसः शुचिषद्वसुरन्तरीक्षसत्
होता वेदिषदतिथिर्दुरोणसत्।
नृषद्वरसदृतसद्व्योमसदब्जा
गोजा ऋतजा अद्रिजा ऋतं बृहत्॥

ॐ प्रतद्विष्णुस्तवते वीर्य्येण मृगो न भीमः कुचरोगिरिष्ठाः।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वाः॥
ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।

---

१ ख पुस्तके स्थापितासीत्यादि चण्डविग्रहकारिणीत्यन्तोंऽशो नास्ति।
२ ग, चण्डारिग्रहकारिणि।

आविशतु प्रजापतिर्धाता गर्भं दधातु ते ॥
ॐ भूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि
धियो यो नः प्रचोदयात् ॐ ॥
ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥
ॐ आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हंसः।
श्रीदुर्गायाः प्राणा इह प्राणाः।
आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हंसः।
श्रीदुर्गाया जीव इह स्थितः।
आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हंसः।
श्रीदुर्गायाः सर्व्वेन्द्रियाणि।
आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हंसः।

श्रीदुर्गाया वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इति हृदये जपित्वा,—

ॐ मनो ज्योतिर्जुषतामाज्यस्य
बृहस्पतिर्यज्ञमिमं तनोतु।
अरिष्टं यज्ञं समिमं दधातु
विश्वे देवा स इह मादयन्तामों प्रतिष्ठ ॥

इति पठित्वा मूलमन्त्रं वारत्रयं जपित्वा प्राणप्रतिष्ठां समाप्य देवीशरीरे षडङ्गन्यासं मातृकान्यासञ्च विधाय क्रोङ्कारेण सन्निरोध्य मूलमन्त्रेणाञ्जलित्रयं दद्यात्। पत्रिकास्वप्येवम्। ततो घटे पत्रिकायाञ्च देवीं पूजयेत्।

आसनं पाद्यमर्घ्यञ्च ततोऽस्याचमनीयकम् ॥
मधुपर्कं स्नानमस्मं वस्त्रं भूषणचन्दने।
पुष्पं धूपञ्च दीपञ्च नेत्राञ्जनमतःपरम् ॥
नैवेद्याचमनीये तु प्रदक्षिणनमस्कृतिः।
एते षोडश निर्द्दिष्टा उपचारास्त्विकार्चने ॥
गन्धः पुष्पं तथा धूपो दीपो नैवेद्यमेव च।
यच्च यद्दीयते द्रव्यमलङ्कारादि काञ्चनम् ॥
तेषां दैवतमुच्चार्य्य कृत्वा प्रोक्षणपूजने।
उत्सृज्य मूलमन्त्रेण प्रतिनाम्ना निवेदयेत् ॥
वरुणस्य तु बीजेन तेषां प्रोक्षणमाचरेत्।

वमिति वरुणबीजेन द्रव्यं प्रोक्ष्य अमुकद्रव्याय नम इति सम्पूज्य मूलमन्त्रं पठित्वा श्रीदुर्गायै इदममुकदैवतममुकद्रव्यं मम इत्युत्सृज्य इदममुकद्रव्यमिति निवेदयेत् ॥

तत्रादौ काष्ठाद्यासनं पुष्पासनं वा मूलमन्त्रेण दद्यात्। ततः श्यामाकदूर्व्वापद्मापराजितासहितं पाद्यं गृहीत्वा,—

पाद्यं गृहाण महादेवि सर्व्वदुःखापहारकम्।
त्रायस्व वरदे देवि नमस्ते शङ्करप्रिये ॥

इति पठित्वा प्रणवादिस्वाहान्तेन जयदुर्गामन्त्रेण श्रीदुर्गायै इदं पाद्यं मम इति पादयोर्दद्यात्।

नन्दिकेश्वरपुराणे तु,—

इच्चयज्ञविनाशिन्यै महाघोरायै योगिनीकोटिपरिवृतायै भद्रकाल्यै ह्रीँ दुर्गायै नमः। इति मन्त्रः।

एवं सर्व्वत्रोपचारेषु बोद्धव्यम्।

तत्र तत्र जलं दद्यादुपचारान्तरान्तरे।

स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम्॥

स्वाहापदेनार्घ्यं, आचमनीयमधुपर्कौ तु स्वधापदेन, सर्व्वमन्य-नमः-पदेन देयम्।

ततो गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्व्वाबिल्वपत्रसहितमर्घ्यं शङ्खे कृत्वा,—

ॐ दूर्व्वाक्षतसमायुक्तं बिल्वपत्रं तथा परम्।

शोभनं शङ्खपात्रस्थं गृहाणार्घ्यं हरप्रिये॥

नानातीर्थोद्भवं वारि कुङ्कुमादिसुशीतलम्।

गृहाणार्घ्यमिमं देवि विश्वेश्वरि नमोऽस्तु ते॥

इत्यर्घ्यम्।

जाती-लवङ्ग-कक्कोलसहितमाचमनीयं गृहीत्वा।

ॐ मन्दाकिन्यास्तु यद्वारि सर्व्वपापहरं शुभम्।

गृहाणाचमनीयं त्वं मया भक्त्या निवेदितम्॥

इमा आपो मया भक्त्या तव पाणितलेऽर्पिताः।

आचामय महादेवि प्रीता शान्तिं प्रयच्छ मे॥

इत्याचमनीयम्।

घृत-दधि-मधूनि कांस्यपात्रे कृत्वा।

ॐ मधुपर्कं महादेवि ब्रह्माद्यैः परिकल्पितम्।

मया निवेदितं भक्त्या गृहाण परमेश्वरि॥

ततः पूर्व्ववदाचमनीयम्।

सर्व्वमेव मधुपर्कादिकमर्घ्यजलेनैवोत्सृज्य देयम्।
कुम्भे सुवासितं शीतलजलं कृत्वा,—

ॐ जलञ्च शीतलं स्वच्छं नित्यशुद्धं मनोरमम्।
स्नानार्थं ते मया भक्त्या कल्पितं प्रतिगृह्यताम्॥

इदं स्नानजलम्।

वस्त्रमानीय,—

बहुतन्तुसमायुक्तं पट्टसूत्रादिनिर्म्मितम्।
वासो देवि सुशुक्लञ्च गृहाण वरवर्णिनि॥
तन्तुसन्तानसम्बद्धं रञ्जितं रागतन्तुना।
दुर्गे देवि भज प्रीतिं वासस्ते परिधीयताम्॥

इति वस्त्रम्। पुनराचमनीयञ्च।

काञ्चनाद्यलङ्कारमानीय,—

दिव्यरत्नसमायुक्ता वह्निभानुसमप्रभाः।
गात्राणि शोभयिष्यन्ति अलङ्काराः सुरेश्वरि॥

चन्दनागुरुकर्पूरमिश्रं गन्धं गृहीत्वा,—

शरीरं ते न जानामि चेष्टां नैव च नैव च।
मया निवेदितान् गन्धान् प्रतिगृह्य विलिप्यतां॥

इति गन्धः।

पुष्पमानीय,—

पुष्पं मनोहरं दिव्यं सुगन्धं देवनिर्म्मितम्।
चयमद्भुतमाघ्रेयं देवि दत्तं प्रगृह्यताम्॥

इति पुष्पम्।

धूपमानीय,—

वनस्पतिरसो दिव्यो गन्धर्व्वासुरभोजनः।
मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम्॥

इति धूपः।

दीपमानीय,—

अग्निर्ज्योतीरविर्ज्योतिश्चन्द्रज्योतिस्तथैव च।
ज्योतिषामुत्तमो दुर्गे दीपोऽयं प्रतिगृह्यताम्॥
त्वं चन्द्रसूर्य्यज्योतींषि विद्युदग्न्योस्तथैव च।
त्वमेव सर्व्वज्योतींषि दीपोऽयं प्रतिगृह्यताम्॥

इति दीपः।

ताम्रपात्रे घृतसम्पादितमञ्जनं सौवीराद्यञ्जनं वा गृहीत्वा,—

नमस्ते सर्व्वदेवेशे नमस्ते शङ्करप्रिये।
चक्षुषामञ्जनं ह्यं देवि दत्तं प्रगृह्यताम्॥

इत्यञ्जनम्॥

फलमूलान्यादाय,—

फलमूलानि सर्व्वाणि ग्राम्यारण्यानि यानि च।
नानाविधसुगन्धीनि गृह्ण देवि ममाचिरम्॥

इति फलादिरचना॥

अन्नमानीय अभ्युक्ष्य,—

अन्नं चतुर्विधं देवि रसैः षड्भिः समन्वितम्।
उत्तमं प्राणदं चैव गृहाण मम भावतः॥

परमान्नमानीय,—

गव्यसर्पिःपयोयुक्तं नानामधुरसंयुतम्।

मया निवेदितं भक्त्या पायसं प्रतिगृह्यताम् ॥

घृतेन रचितं दिव्यं नानारूपविनिर्मितम् ।

पिष्टकं विविधं देवि गृहाण मम भावतः ॥

मोदकादिकमानीय,—

मोदकं खाद्युसंयुक्तं शर्करादिविनिर्मितम् ।

सुरम्यं मधुरं भोज्यं देवि तत्प्रतिगृह्यताम् ॥

जलमानीय,—

जलञ्च शीतलं स्वच्छं सुगन्धि सुमनोहरम् ।

मया निवेदितं भक्त्या पानीयं प्रतिगृह्यताम् ॥

पूर्व्ववदाचमनीयम् ॥

ताम्बूलमानीय,—

फलपत्रकसंयुक्तं कर्पूरेण सुवासितम् ।

मया निवेदितं भक्त्या ताम्बूलं प्रतिगृह्यताम् ॥

दूर्व्वां गृहीत्वा,—

नमस्ते सर्व्वगे देवि नमस्ते शुभमोक्षदे ।

दूर्व्वां गृहाण देवि त्वं मां निस्तारय सर्व्वतः ॥

श्रीफलपत्रमाल्यं गृहीत्वा,—

अमृतोद्भवं श्रीयुक्तं महादेवप्रियं सदा ।

पवित्रं ते प्रयच्छामि श्रीफलीयं सुरेश्वरि ॥

माल्यं गृहीत्वा,—

सूत्रेण ग्रथितं माल्यं नानापुष्पसमन्वितम् ।

श्रीयुक्तं लम्बमानञ्च गृहाण परमेश्वरि ॥

मन्त्रः

ॐ षष्ठिकायै विद्महे भगवत्यै धीमहि।

तन्नो गौरी प्रचोदयात्॥

इत्यञ्जलित्रयं सिन्दूरतिलकञ्च दद्यात्। दर्पणं प्रदर्शयेत्।
चामरव्यजनवातं षष्ठ्यादिनानाविधवाद्यञ्च कुर्य्यात्॥

पाद्यादिभिश्च नैवेद्यैः पूजयेद्यो हि षष्ठिकाम्।

शतक्रतुफलं प्राप्य स गच्छेत्षष्ठिकालयम्॥

गुणफलम्॥

ततो नवपत्रिकापूजा॥

ॐ रम्भाधिष्ठात्र्यै ब्रह्माण्यै नमः, इति पाद्यादिभिः सम्पूज्य,—

ॐ- दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय।

रम्भारूपेण सर्व्वत्र शान्तिं कुरु नमोऽस्तु ते॥

रम्भाधिष्ठात्र्यै ब्रह्माण्यै नमः।

एवं कच्च्वधिष्ठात्र्यै कालिकायै नमः, इति पाद्यादिभिः सम्पूज्य
प्रणमेत्,—

महिषासुरयुद्धेषु कच्वीभूताऽसि सुव्रते।

मनुष्यानुग्रहार्थाय आगतासि हरप्रिये॥

कच्चधिष्ठात्र्यै कालिकायै नमः॥

हरिद्रे वरदे देवि उमारूपासि सुव्रते।

मम विघ्नविनाशाय पूजां गृह्ण प्रसीद मे॥

हरिद्राधिष्ठात्र्यै दुर्गायै नमः॥

निशुम्भशुम्भमथने सेन्द्रैर्देवगणैः सह।

जयन्ति पूजिताऽसि त्वमस्माकं वरदा भव॥

जयन्त्यधिष्ठात्र्यै कार्त्तिक्यै नमः॥

महादेवप्रियकरो वासुदेवप्रियः सदा।

उमाप्रीतिकरो वृक्षो बिल्वरूप नमोऽस्तु ते॥

बिल्वाधिष्ठात्र्यै शिवायै नमः॥

दाडिमि त्वं पुरा युद्धे रक्तबीजस्य सम्मुखे।

उमाकार्य्यं कृतं यस्मादस्माकं वरदा भव॥

दाडिम्यधिष्ठात्र्यै रक्तदन्तिकायै नमः॥

हरप्रीतिकरो वृक्षो ह्यशोकः शोकनाशनः।

दुर्गाप्रीतिकरो यस्मान्मामशोकं सदा कुरु॥

अशोकाधिष्ठात्र्यै शोकरहितायै नमः॥

यस्य पत्रे वसेद्देवी मानवृक्षः शचीप्रियः।

मम चानुग्रहार्थाय पूजां गृह्ण प्रसीद मे॥

मानाधिष्ठात्र्यै चामुण्डायै नमः॥

जगतः प्राणरक्षार्थं ब्रह्मणा निर्म्मितं पुरा।

उमाप्रीतिकरं धान्यं तस्मात् त्वं रक्ष सर्व्वदा॥

धान्याधिष्ठात्र्यै लक्ष्म्यै नमः॥

पत्रिके नवदुर्गे त्वं महादेवमनोरमे।

पूजां समस्तां संगृह्य रक्ष मां त्रिदशेश्वरि॥

नवपत्रिकावासिन्यै दुर्गायै नमः॥

अथावरणपूजा॥

अग्न्यादिकोणकेशरेषु,—

ॐ दुर्गे हृदयाय नमः, ॐ दुर्गे शिरसे स्वाहा, दुर्गायै शिखायै वषट्, भूतरक्षिणि कवचाय हुं, नमः सर्व्वेषु ॥

देवीसम्मुखे,— ॐ दुर्गे दुर्गे रक्षिणि नेत्रत्रयाय वौषट् नमः ॥

[1]दिक्षु,— ॐ दुर्गे दुर्गे रक्षिणि अस्त्राय फट् नमः।

अष्टदिक्षु,— इन्द्राय सवज्राय सवाहनपरिवाराय नमः।

अग्नये सशक्तये सवाहनपरिवाराय नमः।

यमाय सदण्डाय सवाहनपरिवाराय नमः।

नैर्ऋताय सखड्गाय सवाहनपरिवाराय नमः।

वरुणाय सपाशाय सवाहनपरिवाराय नमः।

वायवे साङ्कुशाय सवाहनपरिवाराय नमः।

सोमाय सगदाय सवाहनपरिवाराय नमः।

ईशानाय सशूलाय सवाहनपरिवाराय नमः।

नैर्ऋतवरुणयोर्मध्ये,—

अनन्ताय सचक्राय सवाहनाय सपरिवाराय नमः।

इन्द्रेशानयोर्मध्ये,—

ब्रह्मणे सपद्माय सवाहनाय सपरिवाराय[2] नमः ॥

ब्रह्मादिलोकपालांस्तं यजेदावरणान्यपीति वचनात् ॥

ततो वक्ष्यमाणविधिना बलिं दद्यात्। ततः स्तुत्वा देवीं प्रदक्षिणीकृत्य पञ्च प्रणामान् कुर्य्यात्।

---

१ ग पुस्तके, दिक्ष्वित्यादि पङ्क्तिर्नास्ति।

२ ख, सवाहनपरिवाराय।

कालिकापुराणे,—

सर्व्वमङ्गलमङ्गल्ये शिवे सर्व्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥
सप्तधावर्त्तनं कृत्वा स्तुतिमेतान्तु साधकः ।
पञ्च प्रणामान् कुर्व्वीत ऐं ह्रीं श्रीमितिमन्त्रकैः ॥

इति सप्तमीपूजा समाप्ता ॥ * ॥

अथ महाष्टम्यां प्रातः कृतनित्यक्रियः कृतपूजासम्भारो वां वीं वूं फडिति मन्त्रेण पुष्पनैवेद्यगन्धादि विलोक्य पूर्व्ववदासनशुद्धि-भूतशुद्धि-मातृकान्यासाङ्गन्यास-करन्यास-प्राणायाम-पीठन्यासान् विधाय, देवीं ध्यात्वा, दर्पणप्रतिबिम्बे पुष्पाञ्जलिं दत्वा, मूलमन्त्रेण दन्तकाष्ठं निवेद्य, सङ्कल्प्य पूर्व्ववत् काम्यस्नानं सम्पाद्य, अर्घ्यादिपात्रं, संस्थाप्य, आत्मपूजाञ्च विधाय, घटे गणेशं ब्रह्माणं ग्रहांश्च सम्पूज्य, पीठदेवताश्च पूजयित्वा, देवीं ध्यात्वा, मानसैरुपचारैः सम्पूज्य, हृदयस्थं तेजः पुष्पाञ्जलिना मूलमन्त्रेण देव्यां सङ्क्रमय्य, सम्मुखी-करणसकलीकरणावगुण्ठनपरमीकरणमुद्राः प्रदर्शयेत् ॥

ततः पूर्व्ववत् षोडशोपचारैः सम्पूज्य नवपत्रिकाश्च पूजयित्वा आवरणानि पूजयेत् ।

तत्र प्रथममङ्गावरणम् । अग्न्यादिकोणकेशरेषु,—

ॐ दुर्गे हृदयाय नमः, दुर्गे शिरसे स्वाहा, दुर्गायै शिखायै वषट् नमः, भूतरक्षणि कवचाय हुं नमः ।

देवीसम्मुखे,— ॐ दुर्गे दुर्गे रक्षणि नेत्रत्रयाय वौषट् नमः ।

चतुर्दिक्षु,— ॐ दुर्गे दुर्गे रक्षणि अस्त्राय फट् नमः ।

ततोऽष्टदलमूले उग्रचण्डाद्याः पूजयेत्।

मायालक्ष्मीपदाद्येन पूजयेत् सर्व्वमातरः॥

पूर्व्वदलमूले उग्रचण्डामावाह्य ह्रीँ श्रीँ उग्रचण्डायै नमः इत्यादि पाद्यादिभिरभ्यर्च्य नमस्कुर्य्यात्।

उग्रचण्डा तु वरदा मध्याह्नार्कसमद्युतिः।

सा मे सदाऽस्तु वरदा तस्यै नित्यं नमो नमः॥

एवमाग्नेये प्रचण्डामावाह्य पाद्यादिभिः सम्पूज्य,—

प्रचण्डे पुत्रदे नित्यं प्रचण्डगणसंस्थिते।

सर्व्वानन्दकरे देवि तुभ्यं नित्यं नमो नमः॥

ह्रीँ श्रीँ प्रचण्डायै नमः॥

दक्षिणे चण्डोग्रामावाह्य सम्पूज्य च,—

लक्ष्मीस्त्वं सर्व्वभूतानां सर्व्वभूताभयप्रदा।

देवि त्वं सर्व्वकार्य्येषु वरदा भव शोभने॥

ह्रीँ श्रीँ चण्डोग्रायै नमः।

नैर्ऋते चण्डनायिकामावाह्य सम्पूज्य च,—

या सिद्धिरिति नाम्ना तु देवेशवरदायिनी।

कलिकल्मषनाशाय नमामि चण्डनायिकाम्॥

ह्रीँ श्रीँ चण्डनायिकायै नमः॥

पश्चिमे चण्डामावाह्य सम्पूज्य च,—

देवि चण्डात्मिके चण्डि चण्डारिविजयप्रदे।

धर्म्मार्थमोक्षदे दुर्गे नित्यं मे वरदा भव॥

ह्रीँ श्रीँ चण्डायै नमः॥

वायव्ये चण्डवतीमावाह्य सम्पूज्य च,—

या सृष्टि-स्थिति-संहार-गुणत्रयसमन्विता।
याः पराः प्रकृतयस्तस्यै चण्डवत्यै नमो नमः॥
ह्रीं श्रीं चण्डवत्यै नमः॥

उत्तरे चण्डरूपामावाह्य सम्पूज्य च,—

चण्डरूपात्मिका चण्डा चण्डनायकनायिका।
सर्व्वसिद्धिप्रदा देवी तस्यै नित्यं नमो नमः॥
ह्रीं श्रीं चण्डरूपायै नमः॥

ईशाने चण्डिकामावाह्य सम्पूज्य च,—

बालार्कारुणनयना सर्व्वदा भक्तवत्सला।
चण्डासुरस्य मथनी वरदाऽस्त्वतिचण्डिका॥
ह्रीं श्रीं चण्डिकायै नमः॥

ततः पद्ममध्येऽष्टाष्टत्या चतुःषष्टियोगिनीरावाह्य ह्रीं श्रीं इति मन्त्रेण पाद्यादिभिः पूजयेत्।

कालिकापुराणे,—

ब्रह्माणी चण्डिका रौद्री गौरीन्द्राणी तथैव च।
कौमारी भैरवी दुर्गा नारसिंही च कालिका॥
चामुण्डा शिवदूती च वाराही कौशिकी तथा।
माहेश्वरी शाङ्करी च जयन्ती सर्व्वमङ्गला॥
काली करालिनी मेधा शिवा शाकम्भरी तथा।
भीमा शान्ता भ्रामरी च रुद्राणी चण्डिका तथा॥
क्षमा धात्री तथा स्वाहा स्वधाऽपर्णा महोदरी।

घोररूपा महाकाली भद्रकाली कपालिनी ॥
क्षेमङ्करी चोग्रचण्डा चण्डोग्रा चण्डनायिका।
चण्डा चण्डवती चण्डी महामोहाप्रियङ्करी ॥
बलविकरणी देवी बलप्रमथनी तथा।
मनोन्मथनी देवी सर्व्वभूतदमन्यपि ॥
उमा-तारा-महानिद्रा विजया च जया तथा।
शैलपुत्री चण्डिका च चण्डघण्टा च योगिनी ॥
कुष्माण्डी स्कन्दमाता च तथा कात्यायनी परा ॥
कालरात्रिर्महागौरी चतुःषष्टि क्रमादिमाः।
पूजयेन्मण्डलस्यान्तः सर्व्वकामार्थसिद्धये ॥

ततः ह्रीं श्रीं कोटियोगिनीभ्यो नमः।

इति पाद्यादिभिरेकत्र पत्राग्रेषु कोटियोगिनीः पूजयेत्।

ततो देवीसन्निधाने सम्यग्दुर्गाः शुभप्रदाः।
ऐशान्यादिक्रमाद् द्वे द्वे मध्ये च पूजयेन्नव ॥

देवीशाने ब्रह्माणीमावाह्य ह्रीं श्रीं इति पाद्यादिभिः पूजयेत्।

चतुर्मुखीं जगद्धात्रीं हंसारूढां वरप्रदाम्।
सृष्टिरूपां महाभागां ब्रह्माणीं तां नमाम्यहम् ॥
ह्रीं श्रीं ब्रह्माण्यै नमः ॥

तथा तत्रैव माहेश्वरीमप्यावाह्य पूजयेत्।

वृषारूढां शुभां शुभ्रां त्रिनेत्रां वरदां शिवाम्।
माहेश्वरीं नमाम्यद्य सृष्टिसंहारकारिणीम् ॥
ह्रीं श्रीं माहेश्वर्य्यै नमः ॥

देव्याग्नेयकोणे कौमारीमावाह्य पूजयेत्।

कौमारीं पीतवसनां मयूरवरवाहनाम्।

शक्तिहस्तां पिताङ्गीं तां नमामि वरदां सदा॥

ह्रीं श्रीं कौमार्य्यै नमः॥

तत्रैव वैष्णवीमावाह्य पूजयेत्।

शङ्ख-चक्र-गदा-पद्मधारिणीं कृष्णरूपिणीम्।

स्थितिरूपां खगेन्द्रस्थां वैष्णवीन्तां नमाम्यहम्॥

ह्रीं श्रीं वैष्णव्यै नमः॥

देवीनैर्ऋते वाराहीमावाह्य पूजयेत्।

वराहरूपिणीं देवीं दंष्ट्रोद्धृतवसुन्धराम्।

शुभदां पीतवसनां वाराहीं तां नमाम्यहम्॥

ह्रीं श्रीं वाराह्यै नमः॥

तत्रैव नारसिंहीमावाह्य पूजयेत्।

नृसिंहरूपिणीं देवीं दैत्यदानवदर्पहाम्।

शुभां शुभप्रदां शुभ्रां नारसिंहीं नमाम्यहम्॥

ह्रीं श्रीं नारसिंह्यै नमः॥

ततो वायव्ये इन्द्राणीमावाह्य पूजयेत्।

इन्द्राणीं गजकुम्भस्थां सहस्रनयनोज्ज्वलाम्।

नमामि वरदां देवीं सर्व्वदेवनमस्कृताम्॥

ह्रीं श्रीं इन्द्राण्यै नमः॥

तत्रैव चामुण्डामावाह्य पूजयेत्।

चामुण्डां मुण्डमथनीं मुण्डमालोपशोभिताम्।

महादुर्गाद्युद्दिता नमाम्यारतविभ्रमे॥
ह्रीं श्रीं चामुण्डायै नमः॥

ततो मध्ये—ह्रीं श्रीं चण्डिकायै नमः इति मूलदेवीमेव पूजयेत्।

कात्यायनीं दशभुजां महिषासुरमर्द्दिनीम्।
प्रसन्नवरदां देवीं वन्दे तां नमाम्यहम्॥
ह्रीं श्रीं चण्डिकायै नमः॥

चण्डिके नवदुर्गे त्वं महादेवमनोरमे।
पूजां समस्तां संगृह्य रक्ष मां त्रिदशेश्वरि॥

ह्रीं श्रीं दुर्गायै नमः॥ इति मूलदेव्यै पुष्पाञ्जलिं दद्यात्।

ततो जयन्त्यादीर्गन्धपुष्पादिभिर्देवीसन्निधाने पूजयेत्॥

ह्रीं श्रीं जयन्त्यै नमः, इत्यादिक्रमेण पूजयेत्॥

जयन्तीं मङ्गलां कालीं भद्रकालीं कपालिनीम्।
दुर्गां शिवां क्षमां धात्रीं स्वधां स्वाहाञ्च पूजयेत्॥

॥ ततोऽस्त्रपूजा॥

देवीदक्षिणहस्तेषु,— ॐ शूलाय नमः, इति सम्पूज्य,—

सर्व्वायुधानां प्रथमो निर्म्मितस्त्वं पिनाकिना।
शूल शारं समाहृत्य कृत्वा मुष्टिधरं शुभम्॥
पुष्पं दद्यात्॥

ॐ खड्गाय नमः, इति सम्पूज्य,—

असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः।
श्रीगर्भो विजयश्चैव धर्म्मपाल नमोऽस्तु ते॥
इति पुष्पम्॥

ॐ सुदर्शनचक्राय नमः, इति सम्पूज्य,—

चक्र त्वं विष्णुरूपोऽसि विष्णुपाणौ सदा स्थितः ।
देवीहस्तस्थितो नित्यं सुदर्शन नमोऽस्तु ते ॥

इति पुष्पम् ॥

ॐ तीक्ष्णवाणाय नमः, इति सम्पूज्य,—

सर्व्वायुधानां श्रेष्ठोऽसि दैत्यसेनानिसूदन ।
भयेभ्यः सर्व्वतो रक्ष तीक्ष्णवाण नमोऽस्तु ते ॥

इति पुष्पम् ॥

ॐ शक्तये नमः, इति सम्पूज्य,—

शक्तिस्त्वं सर्व्वदेवानां गुहस्य च विशेषतः ।
शक्तिरूपेण सर्व्वत्र रक्षां कुरु नमोऽस्तु ते ॥

इति पुष्पम् ॥

वामहस्तेषु,—

ॐ खेटाय नमः, इति सम्पूज्य,—

यष्टिरूपेण खेट त्वमरिसंहारकारकः ।
देवीहस्तस्थितो नित्यं मम रक्षां कुरुष्व च ॥

इति पुष्पम् ॥

ॐ पूर्णचापाय नमः, इति सम्पूज्य,—

सर्व्वायुधमहामात्र सर्व्वदेवारिसूदन ।
चाप मां सर्व्वतो रक्ष साकं सायकसत्तमैः ॥

इति पुष्पम् ॥

ॐ पाशाय नमः, इति सम्पूज्य,—

पाश त्वं नागरूपोऽसि विषपूर्णो विषोदरः।

शत्रूणां दुःसहो नित्यं नागपाश नमोऽस्तु ते॥

इति पुष्पम्॥

ॐ अङ्कुशाय नमः, इति सम्पूज्य,—

अङ्कुशोऽसि नमस्तुभ्यं गजानां नियमः सदा।

लोकानां सर्व्वरक्षार्थं विधृतः पार्व्वतीकरे॥

इति पुष्पम्॥

ॐ घण्टायै नमः, इति सम्पूज्य,—

हिनस्ति दैत्यतेजांसि स्वनेनापूर्य्य या जगत्।

सा घण्टा पातु नो देवि पापेभ्योऽनः सुतानिव॥

इति पुष्पम्॥

ॐ परशवे नमः, इति सम्पूज्य,—

परशो त्वं महातीक्ष्णः सर्व्वदेवारिसूदनः।

देवीहस्तस्थितो नित्यं शत्रुक्षय नमोऽस्तु ते॥

इति पुष्पम्॥

सर्व्वायुधानां श्रेष्ठानि यानि यानि त्रिपिष्टपे।

तानि तानि दधत्यै ते चण्डिकायै नमोऽम्बिके॥

ह्रीं श्रीं दुर्गायै सर्व्वायुधधारिण्यै नमः।

इति देव्यै पुष्पाञ्जलिं दद्यात्।

ततः,— ॐ किरीटादिभ्यो देव्यङ्गप्रत्यङ्गभूषणेभ्यो नमः।

इत्येकत्र पूजयेत्।

ॐ वज्रनखदंष्ट्रायुधाय महासिंहाय ॐ फट् नमः।

इति मन्त्रेण सिंहं पाद्यादिभिः पूजयेत्।

आसनस्थापि भूतानां नानालङ्कारभूषितम्।
मेरुशृङ्गप्रतीकाश सिंहासन नमोऽस्तु ते॥

ॐ महासिंहाय नमः।

ततो महिषासुराय नमः,— इति महिषं देव्यग्रे पूजयेत्।

कालिकापुराणे महिषासुरवरदाने,—

यत्र प्रवर्त्तते पूजा यत्र यत्र च तत्र ते।
पूज्यश्चिन्त्यश्च तत्रैव कालोऽयं तव दानव॥

मत्स्यपुराणे देव्यङ्गदेवतापूजोक्ता, तास्तु कोटियोगिनीपूजयैव पूजिता इति न पृथक् पूज्याः।

कालिकापुराणे कामाख्यापूजाप्रकरणे,—

बटुकचतुष्टयाष्टक्षेत्रपाल-नवभैरवपूजोक्ता, अतस्तानपि केचित् पूजयन्ति।

श्रीमित्यनेन मन्त्रेण पूर्व्वादौ पूजयेत् क्रमात्।
सिद्धपुत्रं दानपुत्रं तथा सहजपुत्रकम्॥
ततः कलहपुत्रच पूजयेद्बटुकानिमान्॥

ॐ श्रीं सिद्धपुत्रबटुकाय नमः,— इत्यादि।

पूजयेत् क्षेत्रपालांश्च मध्ये किञ्जल्कपत्रयोः।
हेतुकं त्रिपुरघ्नच अग्निजिह्वं तथैव च॥
अग्निवेतालसंज्ञच कालाख्यं करालकम्।
एकपादं भीमनामधनुष्मतादिमन्त्रेण तु॥

ॐ हेतुकाय क्षेत्रपालाय नमः,— इत्यादि॥

मण्डलस्य चतुर्दिक्षु द्वौ द्वौ मध्ये च पूजयेत्।

असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तो भयङ्करः॥

कपाली भीषणश्चैव संहारी नव भैरवाः॥

असिताङ्गाय भैरवाय नमः,— इत्यादि॥

॥ अथ लोकपालपूजा॥

मण्डलबाह्ये चतुर्दिक्षु,—

इन्द्राय सवज्राय सवाहनपरिवाराय नमः।

अग्नये सशक्तये सवाहनपरिवाराय नमः।

यमाय सदण्डाय सवाहनपरिवाराय नमः।

नैर्ऋताय सखड्गाय सवाहनपरिवाराय नमः।

वरुणाय सपाशाय सवाहनपरिवाराय नमः।

वायवे साङ्कुशाय सवाहनपरिवाराय नमः।

सोमाय सगदाय सवाहनपरिवाराय नमः।

ईशानाय सशूलाय सवाहनपरिवाराय नमः।

निर्ऋतिवरुणयोर्मध्ये,—

अनन्ताय सचक्राय सवाहनपरिवाराय नमः।

इन्द्रेशानयोर्मध्ये,—

ब्रह्मणे सपद्माय सवाहनपरिवाराय नमः॥

॥ ततो बलिदानम्॥

बलिं स्थापयित्वा लोहितमाल्येन वेष्टयित्वा प्रोक्षयेत्।

ॐ अग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः।

वायुः पशुरासीत्तेनायजन्त स एतल्लोकमजयत्तस्मिन् वायुः स ते लोको भविष्यति तं जेष्यसि पिवैता अपः।

सूर्य्यः पशुरासीत्तेनायजन्त स एतल्लोकमजयत्तस्मिन् सूर्य्यः स ते लोको भविष्यति तं जेष्यसि पिवैता अपः।

ॐ वाचन्ते शुन्धामि, प्राणन्ते शुन्धामि, चक्षुस्ते शुन्धामि, श्रोत्रन्ते शुन्धामि, नाभिन्ते शुन्धामि, मेढ्रन्ते शुन्धामि, पायुन्ते शुन्धामि, [1]चरित्रन्ते शुन्धामि।

ॐ मनस्त-आप्यायतां, वाक्त आप्यायतां, प्राणस्त-आप्यायतां, चक्षुस्त-आप्यायतां, श्रोत्रन्त-आप्यायतां, यत्ते क्रूरं यदा स्थितं तत्त-आप्यायतां। तत्ते निष्ठायतां तत्ते शुध्यतु मत्तोभ्यः॥

इति संप्रोक्ष्य पाद्यार्घ्याचमनीयगन्धपुष्पैः पूजयेत्॥

ततो देवीं मूलमन्त्रेण पुष्पाञ्जलित्रयेण पूजयेत्॥

उत्तराभिमुखो भूत्वा बलिं पूर्व्वमुखं तथा।
निरीक्ष्य साधकः पश्चादिमं मन्त्रमुदीरयेत्॥
छाग त्वं बलिरूपेण मम भाग्यादुपस्थितः।
प्रणमामि ततः सर्व्वरूपिणं[2] बलिरूपिणम्॥
चण्डिकाप्रीतिदानेन दातुरापद्विनाशन।
वैष्णवीबलिरूपाय बले तुभ्यं नमोऽस्तु ते॥
यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा।

---

१ ख, चरित्रमित्यादि नास्ति।

२ ग, सर्व्वरूपिणम्।

अतस्त्वां घातयाम्यद्य तस्माद् यज्ञे वधोऽवधः ॥
ॐ ऐँ ह्रीँ श्रीँ इति मन्त्रेण पुष्पं मूर्द्धि वलेर्न्यसेत् ॥

तुभ्यं नम इति, तेऽस्त्वित्यर्थः। क्वचित् कालिकापुराणे तु बले तुभ्यं नमो नम-इति पाठः।

ततो देवीं समुद्दिश्य काममुद्दिश्य चात्मनः।
अभिषिच्य बलिं पश्चात् करवारं प्रपूजयेत् ॥

ततः कुश-तिल-जलान्यादाय, ॐ अद्यामुकगोत्रस्यामुकशर्म्मणः पञ्चविंशतिवर्षावच्छिन्नदुर्गाप्रीतिकामनया जयदुर्गामन्त्रमुच्चार्य्य ॐ ह्रीँ दुर्गायै एष छागबलिर्नमः। छागोऽयं वह्निदैवतः। मेषपक्षे तु वरुणदैवत-इति बोद्धव्यम्।

ततः पशोः कर्णे जपेत्।

हिलि हिलि चण्डरूपधरायै हुँ हुँ इमं पशुं प्रदर्श्य मुक्तिं नियोजय नमः स्वाहा।

ततः खड्गं ध्यात्वा पूजयेत्।

ध्यानं यथा,—

कृष्णं पिनाकपाणिञ्च कालरात्रिस्वरूपिणम्।
उग्रं रक्तास्यनयनं रक्तमाल्यानुलेपनम् ॥
रक्ताम्बरधरञ्चैकपाशहस्तं कुटुम्बिनम्।
पिबमानञ्च रुधिरं भुञ्जानं क्रव्यसंहतिम् ॥

इति ध्यात्वा,—

रसना त्वं चण्डिकायाः सुरलोकप्रसाधकः।

ॐ-ह्रां ह्रीँ खड्गेति मन्त्रेण खड्गं पाद्यादिनार्च्चयेत्।

तथा,—

नामन्त्र खड्गं तु बलिं न दद्यात्तु कदाचन।
खड्गस्यामन्त्रणे मन्त्रा यावन्तः कथिताः पुरा॥
तैः सार्द्धमेते मन्त्रास्तु योज्याः खड्गाभिमन्त्रणे।
[1]ह्रिः कालीति ततो देवि वज्रेश्वरिपदं तथा॥
ततोऽस्तु लौहदण्डायै नमः शेषे तु योजयेत्।
कालि कालि देवि वज्रेश्वरि लौहदण्डायै नमः॥
सम्पूज्यानेन मन्त्रेण खड्गमादाय पाणिना।
कालरात्र्यास्तु मन्त्रेण तं खड्गमभिमन्त्रयेत्॥

ह्रीँ ह्रीँ कालि कालि विकटदंष्ट्रे एँ एँ फेत्कारिणि खादय छेदय सर्व्वदुष्टानि मारय मारय अमुकं खड्गेन छिन्धि छिन्धि किलि किलि चिकि चिकि पिब पिब रुधिरं ओँ ओँ किरि किरि कालिकायै नमः।

ततः पुष्पाञ्जलिना,—

असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः।
श्रीगर्भो विजयश्चैव धर्म्मपाल नमोऽस्तु ते॥
पूजयित्वा ततः खड्गं आँ ऊँ फडिति मन्त्रकैः।
गृहीत्वा विमलं खड्गं छेदयेदविलम्बितम्॥

योगिनीतन्त्रे,—

छेदयेद्बलिसंस्थं तु बलिं पूर्व्वमुखं तथा।
उदङ्मुखः स्वयं भूत्वा नेत्रबीजेन साधकः॥

---

१ ख, ग, पुस्तकद्वये ह्रिरित्यादि योजयेदित्यन्तोऽंशो नास्ति।

स्वयं वा भ्रातृपुत्रैर्वा भ्राचा वा सुहृदैव वा।
सपिण्डेनाथ वा देयो नामगोत्रं नियोजयेत्॥

कालिकापुराणे,—

ततो बलीनां रुधिरं तोयसैन्धवसत्फलैः।
मधुभिर्गन्धपुष्पैश्च अधिवास्य विधानतः॥

ॐ ऐँ ह्रीँ श्रीँ कौशिकी रुधिरेणाप्यायतामिति।

स्थाने नियोजयेद्रक्तं शिरश्च सप्रदीपकम्।
एवं दत्त्वा बलिं पूर्णं फलं प्राप्नोति साधकः॥

शिरःप्रदीपश्च पात्रं विना सावधानेन दातव्यः।

यथा योगिनीतन्त्रे,—

शीर्षोपरि ज्वलद्दीपं घृतयोगेन साधकः।
दद्याद्वा तैलयोगेन वर्ज्जयेत् सार्षपादिकम्॥
घृतेन सार्व्वभौमः स्यात्तैले सिद्धिं विनिर्द्दिशेत्।
यावन्ति शीर्षलोमानि दीपो दहति भाविनि॥
तावत् कालं वसेत्स्वर्गे[1] तस्मात् पात्रं विवर्जयेत्।
लोमदाहोद्भवं गन्धं घ्रात्वा देवी प्रमोदति॥
तस्मात् प्रयत्नतः कुर्य्यात् शीर्षोपरि ज्वलच्छिखाम्।
निर्व्वाणे मृत्युमाप्नोति नीयमाने प्रदीपके॥
तस्मात् प्रयत्नतो नीत्वा स्थापयेद्दीपकं बुधः॥

ततः शोणितं चतुर्धा विभज्य,-आग्नेये,-विदारिकायै नमः,

---

१ ख, स्वर्गे।

नैऋते,-पापराक्षस्यै नमः, वायव्यां,-पूतनायै नमः, ऐशान्यां,-कालिकायै नमः, इति दद्यात् ।

योगिनीतन्त्रे,—

विदारी-पापराक्षस्यौ पूतना कालिका तथा ।
आग्नेयादिककोणे तु यजेत्तत्र समाहितः ॥

ततः स्तुयात् ।

त्रिनेत्रे विकरालास्ये मुण्डमालाविभूषिते ।
सर्व्वासुरहतान्ते त्वं खड्गखट्वाङ्गधारिणि ॥
महिषघ्नि महामाये दैत्यदर्पनिसूदनि ।
छागलेन बलिं दद्मि गृहाण हरवल्लभे ॥
इमं छागबलिं देवि गृहीला कालरात्रिके ।
प्रीता भव महाकालि रक्ष मां देवि चण्डिके ॥

इति पुष्पाञ्जलिं दत्त्वा धूपं निवेद्य, नानावाद्येन कोलाहलं कुर्य्यात् ।

छागादीयासृग्दाने तु सहस्रवार्षिकी तृप्तिः ।

तत्र मन्त्र,—

ॐ ह्रीँ ह्रीँ किलि किलि कालिके छागादरुधिरं गृह्ण गृह्ण ।
रक्तप्रिये प्रचण्डासिमुण्डमालाविभूषिते ।
छागाद्यासृक्प्रदानेन सर्व्वशान्तिं कुरुष्व मे ॥

एतच्च ब्राह्मणेतरैर्देयम् ॥

अथ महिषे विशेषस्तयम् ॥

कालिकापुराणे,—

सुजातं मनुजं दीर्त्तं पूर्व्वऽग्नि नियताननम् ।

मांसमैथुनभोगहीनं सकुचन्दनोक्षितम् ॥
हन्तोऽसुरासुखं तं तु तदङ्गेष्वङ्गदेवताः।
पूजयेत्तं च मात्रा तु दैवतेन च मानुषम् ॥
अन्येषां महिषादीनां बलीनामथ पूजनात्।
कार्यो मेध्यत्वमाप्नोति रक्तं गृह्णाति वै शिवा ॥

महिषादयस्तु,—

महिष-सिंह-शरभ-व्याघ्र-गण्डक-कृष्णसाराः, न तु छागादयः, तानेवोपक्रम्याभिधानात् ॥

तं ब्रह्मरन्ध्रे ब्रह्माणं तन्नासायाञ्च मेदिनीम्।
कर्णयोस्तु तथाकाशं जिह्वायां सर्व्वतोमुखम् ॥
ज्योतींषि नेत्रयोर्विष्णुं वदने परिपूजयेत्।
ललाटे पूजयेच्चन्द्रं शक्रं दक्षिणगण्डतः ॥
वामगण्डे तथा वह्निं ग्रीवायां समवर्त्तिनम्।
केशाग्रे निर्ऋतिं मध्ये भ्रुवोश्चापि प्रचेतसम् ॥
नासामूले तु पवनं स्कन्धे चापि धनेश्वरम्।
हृदये सर्पराजन्तु पूजयित्वा पठेदिमम् ॥
यथा वाहं भवान् देहि यथा वहसि चण्डिकाम्।
तथा मम रिपून् हिंस शुभं वह सुखापह ॥
यमस्य वाहनस्त्वं तु वररूपधराव्यय।
आयुर्वित्तं यशो देहि कासराय नमोऽस्तु ते ॥

महिषदाने शतवार्षिकी दुर्गाप्रीतिः फलं, महिषो यमदैवतः। सर्व्वमन्यत् प्रोक्षणादिकं छागवत् कर्त्तव्यम्।

कालराच्या मन्त्रोद्धारमाह । कालिकापुराणे,—

मेघबीजस्य मध्यन्तु द्विरावर्त्त्य प्रयोजयेत् ।
ततोऽनु कालि कालीति विकटदंष्ट्रे ततः पदं ॥
हान्तादि-नष्टतोयेन स्वरेणैकादशेन तु ।
योजितौ नादबिन्दुभ्यां द्वौ पश्चाद्विनियोजयेत् ॥
फेत्कारिणिपदं तस्मात् खादय च्छेदयेत्यतः ।
सर्व्वदुष्टानि च ततो द्विर्मारयामुकं ततः ॥
खड्गेन छिन्धि छिन्धीति ततश्च किलि किलीति ।
ततश्चिकि चिकीत्येवं ततः पिब पिबेति च ॥
ततोऽनु रुधिरं चेति स्फ्रौं स्फ्रौं किरिकिरीति च ।
कालिकायै नम इति कालराच्यास्तु मन्त्रकः ॥
इत्यनेन तु मन्त्रेण करवालेऽभिमन्त्रिते ।
कालरात्रिः स्वयं तस्मिन्निषीदत्यरिहानये ॥

मेघबीजं ऐं ह्रौं श्रौं इति कालिकापुराणे उक्तं तस्य मध्यं ह्रौमित्यर्थः, ततो जयदुर्गामन्त्रं किञ्चिज्जपित्वा अर्घ्योदकेन जपं समर्पयेत् ।

तथा बलिदानानन्तरं कालिकापुराणे,—

जपं समारभेत् पश्चात् पूर्व्ववद्ध्यानतत्परः ।
हस्तेन स्रजमादाय चिन्तयेन्मनसा शिवाम् ॥

ततो जयदुर्गामन्त्रेण तिलैर्होमः कार्य्यो यथा,—

होमञ्च सतिलैराज्यैर्व्वांछैर्व्वाथ समाचरेत् ॥

ततः,— मम दुर्गामहोत्सवे सर्व्ववाधाविनिर्म्मुक्ति-धनधान्यसुता-

न्वितलकामः श्रीदुर्गाप्रीतिकामो वा श्रीमार्कण्डेयपुराणान्तर्गतं देवीमाहात्म्यं श्रोष्यामि कीर्त्तयिष्ये वा इति सङ्कल्प्य देवी-माहात्म्यस्य श्रवणं कीर्त्तनं वा कुर्य्यात्। ततः प्रदक्षिणीकृत्य पञ्च प्रणामान् कुर्य्यात्।

कालिकापुराणे,—

सर्व्वमङ्गलमङ्गल्ये शिवे सर्व्वार्थसाधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते॥
सप्तधावर्त्तनं कृत्वा स्तुतिमेतान्तु साधकः।
पञ्च प्रणामान् कुर्व्वीत ऐँ ह्रीँ श्रीमिति मन्त्रकैः॥

अन्यानपि यथाशक्ति प्रणामान् कुर्य्यात्॥

आयुर्देहि यशो देहि भाग्यं भगवति देहि मे।
पुत्रान् देहि धनं देहि सर्व्वान् कामांश्च देहि मे॥
प्रचण्डे पुत्रदे नित्यं सुप्रीते सुरनायिके।
कुलोद्योतकरे चोग्रे जयं देहि नमोऽस्तु ते॥
रुद्रचण्डे प्रचण्डाऽसि प्रचण्डबलनाशिनि।
रक्ष मां सर्व्वतो देवि विश्वेश्वरि नमोऽस्तु ते॥
दुर्गोत्तारिणि दुर्गे त्वं सर्व्वाशुभनिवारिणि।
धर्म्मार्थमोक्षदे देवि नित्यं मे वरदा भव॥
दुर्गे दुर्गे महाभागे त्राहि मां शरणप्रिये।
महिषासुरप्रदोषघ्ने प्रणतोऽस्मि प्रसीद मे॥
हर पापं हर क्लेशं हर शोकं हराशुभम्।
हर रोगं हर क्षोभं हर वामं हरप्रिये॥

काखि काखि महाकाखि काखिके पापहारिणि।
धर्म्मकामप्रदे देवि नारायणि नमोऽस्तु ते ॥
संग्रामे विजयं देहि धनं देहि सदा गृहे।
धर्म्मकामार्थसम्पत्तिं देहि देवि नमोऽस्तु ते ॥
महिषघ्नि महामाये चामुण्डे मुण्डमालिनि।
आयुरारोग्यविजयं देहि देवि नमोऽस्तु ते ॥
आयुर्ददातु मे काली पुत्रान् देवी सदाशिवा।
धनं देवी महामाया नारसिंही यशो मम ॥
शिरो मे चण्डिका पातु कण्ठं पातु महेश्वरी।
हृदयं पातु चामुण्डा सर्व्वतः पातु कालिका ॥
आन्ध्यं कुष्ठञ्च दारिद्र्यं रोगं शोकञ्च दारुणम्।
बन्धु-स्वजन-वैराग्यं दुर्गे त्वं हर दुर्गतिम् ॥
राज्यं तस्य प्रतिष्ठा च लक्ष्मीस्तस्य सदा स्थिरा
प्रभुत्वं तस्य सामर्थ्यं यस्य त्वं मस्तकोपरि ॥
धन्योऽहं कृतकृत्योऽहं सफलं जीवितं मम।
आगताऽसि यतो दुर्गे माहेश्वरि मदाश्रयम् ॥
अर्घ्यं पुष्पञ्च नैवेद्यं माल्यं मलयवासिनि।
गृहाण वरदे देवि कल्याणं कुरु मे सदा ॥

ततः पूजां समर्पयेत् ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं महेश्वरि।
यदर्च्चितं मया देवि परिपूर्णं तदस्तु मे ॥
गृहीत्वं शारदीं पूजां मत्यंमण्डलसंस्थिताम्

पश्चिमे त्वां नमाम्यद्य स्वयमर्घं प्रगृह्णताम् ॥
कायेन मनसा वाचा त्वत्तो नान्या गतिर्मम ।
अन्तःसारेण भूतानां द्रष्ट्री त्वं परमेश्वरि ॥

ततो रात्र्यर्द्धे पूर्व्ववत् षोड़शोपचारैः पूजा कार्य्या ।
यथा;—

बलिभिर्गन्धपुष्पाद्यैर्महाविभवविस्तरैः ।
रात्र्यर्द्धे पूजयेद्देवीं जगन्मातरमम्बिकाम् ॥

गौड़ीयास्तु,— अष्टमीनवमीसन्धिकाले भूतशुद्ध्यादिकं कृत्वा, चामुण्डारूपं चिन्तयित्वा, षोड़शोपचारैः सम्पूज्य, चतुःषष्टियोगिनीश्च पूजयित्वा बलिं ददति ॥ ध्यानन्तु,—

काली करालवदना विनिष्क्रान्तासिपाशिनी ।
विचित्रखट्वाङ्गधरा नरमालाविभूषणा ॥
द्वीपिचर्म्मपरीधाना शुष्कमांसातिभैरवा ।
अतिविस्तारवदना जिह्वाललनभीषणा ॥
निमग्ना रक्तनयना नादापूरितदिङ्मुखा ॥ इति ।

एवं नवम्यामप्यष्टमीविधिना पूजा कार्य्या प्रभूतबलिदानञ्च । कुमारीः सम्पूज्य भोजयेत् ।

देवीपुराणे,—

न तथा तुष्यति शिवा होम-दान-जपेन तु ।
कुमारीभोजनेनाथ यथा देवी प्रसीदति ॥

ततो दक्षिणां दद्यात् ।

अन्ये तु,— दशम्यां विसर्ज्जनं कृत्वा दक्षिणा देयेत्याहुः, तन्मन्दम्

आह्लादौ विसर्ज्जनात् प्राग्दक्षिणाया दृष्टत्वात् अन्यत्रापि तथैव न्याय्यत्वात्।

किञ्च कालिकापुराणे पवित्रारोहणे दक्षिणानन्तरं देव्या विसर्ज्जनमुक्तम्॥

यथा,—

पवित्रारोहणे वृत्ते दक्षिणान्तु प्रदापयेत्।
हिरण्यं गां तिलं धेनुं वस्त्रं वा शाकमेव वा॥
ततो विसर्ज्जयेद्देवीं पूर्व्वाभिः प्रतिपत्तिभिः॥

शारदीयदुर्गापूजाफलं तत्रैव,—

कृत्वैवं परमामापुर्निर्वृतिं त्रिदिवौकसः।
एवमन्यैरपि सदा कार्य्यं देव्याः प्रपूजनम्॥
विभूतिमतुलां लब्धुं चतुर्वर्गप्रदायकम्॥ * ॥

अथ दशम्यां कृतनित्यक्रियो भूतशुद्ध्यादिकं कृत्वा पञ्चोपचारैर्देवीमभ्यर्च्च्य कृताञ्जलिः पठेत्।

विधिहीनं क्रियाहीनं भक्तिहीनं यदर्च्चितम्।
पूर्णं भवतु तत्सर्व्वं त्वत्प्रसादान्महेश्वरि॥

ततो निर्म्माल्यवासिन्यै नम इति निर्म्माल्येन घटोपरि पूजयेत्। कालिकापुराणे,—

योनिमुद्रां प्रदर्श्याथ निर्म्माल्यं दिशि शूलिनः।
चण्डेश्वर्य्यै नम इति निक्षिप्याथ विसर्ज्जयेत्॥
विसर्ज्जनमनेनैव मन्त्रेण शृणु भैरव।
उत्तिष्ठ देवि चण्डेशे शुभां पूजां प्रगृह्य च॥

कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह।
गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वरि॥
यत् पूजितं मया देवि परिपूर्णं तदस्तु मे।
व्रज त्वं स्रोतसि जले तिष्ठ गेहे च भूतये॥

इति मन्त्रेण देवीं चालयित्वा,—

शङ्खतुर्य्यनिनादैश्च मृदङ्गैः पटहैस्तथा।
धूलिकर्द्दमविक्षेपैः क्रीड़ाकौतुकमङ्गलैः॥
भगलिङ्गाभिधानैश्च भगलिङ्गप्रगीतकैः।
भगलिङ्गक्रियाशब्दैः क्रीड़येयुरलं जनाः॥

इति जलसमीपं नयेत्। जलस्थापनमन्त्रस्तु तत्रैवोक्तः,—

निमज्ज्याम्भसि सम्पूज्य पत्रिका वर्ज्जिता जले।
पुत्रायुर्धनवृद्ध्यर्थं स्थापिताऽसि मया जले॥
इत्यनेन तु मन्त्रेण देवीं संस्थापयेज्जले।

मया सम्पूज्याम्भसि निमज्ज्य पत्रिका जले वर्ज्जितास्तस्मात् अतस्त्वमपि पुत्रादिवृद्ध्यर्थं स्थापिताऽसि जले, इति मन्त्रार्थवशात् स्वयं जलं प्रविश्यैव स्थापयितव्या। ततो जलक्रीड़ां कृत्वा गृहमागत्य अच्छिद्रमवधार्य्य शान्त्याशीः-प्रशस्तिवन्दनादिकं मङ्गलमाचरेत्।

श्रीगोविन्द-पदद्वन्द्व-वन्दना-नन्दितात्मना।
गोविन्दानन्दकृतिना दुर्गार्चाकौमुदी कृता॥

## अथ खञ्जनदर्शनम्।

तत्र दुर्गोत्सवानन्तरं खञ्जनं पश्येत्। यथा संवत्सरप्रदीपे,—

कृत्वा नीराजनं राजा बलहृद्धौ यथाबलम् ।
शोभनं खञ्जनं पश्येज्जल-गो-गोष्ठसन्निधौ ॥

यत्तु,—

हस्तगतेऽम्बुजबन्धौ यस्यां दिशि खञ्जनं नृपः पश्येत् ।
तस्यां गतस्य नृपतेः क्षिप्रमरातिर्वशमुपैति ॥

इति ज्योतिषे हस्तार्के खञ्जनदर्शनमुक्तं तत्समुच्चये फलातिशयार्थम् ।

ज्योतिषे,—

मङ्गल्ये खञ्जनं दृष्ट्वा पुण्ये स्थाने मनोरमे ।
शुभं स्यादशुभं ज्ञेयं विपरीते न संशयः ॥

तथा,— अब्जासु गोषु गज-वाजि-महोरगेषु
राज्यप्रदस्य कुशलः शुचिशाद्वलेषु ।
भस्मास्थिकाष्ठतुषलोमतृणेषु दृष्टो
रिष्टं ददाति बहुशः खलु खञ्जरीटः ॥

अशुभं खञ्जनं दृष्ट्वा देवब्राह्मणपूजनम् ।
शान्तिं कुर्व्वीत कुर्य्याच्च स्नानं सर्व्वौषधिजलैः ॥

अथ खञ्जनदर्शने मन्त्रं पठित्वा प्रणमेत् ।

ॐ अशोकश्च विशोकश्च नन्दीशः पुष्टिवर्द्धनः ।
शङ्खचूड़ो मणिग्रीवः स्वस्तिकण्ठोऽपराजितः ॥
खञ्जनाय नमस्तुभ्यं सर्व्वाभीष्टप्रदाय च ।
नीलकण्ठाय भद्राय भद्ररूपाय ते नमः ॥
भद्रत्वं देहि मे भद्रमाशां पूरय पूरकः ।

खण्डितोऽपि कुरु खादि खञ्जरीट नमोऽस्तु ते॥
नारायणशरीरोत्थ संवत्सरशुभप्रद।
नीलकण्ठ महादेव खञ्जरीट नमोऽस्तु ते॥
वासुदेवस्वरूपेण सर्व्वकामफलप्रद।
पृथिव्यामवतीर्णोऽसि खञ्जरीट नमोऽस्तु ते॥
त्वं योगयुक्तो मुनिपुङ्गवस्त्व-
मदृश्यतामेषि शिखोद्गमेन।
त्वं दृश्यसे प्रावृषि निर्गतायां
त्वं खञ्जनाश्चर्य्यमयो नमस्ते॥

अथाश्विनशुक्लपक्षे निषिद्धेतरदिने व्रीहिपाकनिमित्तकं श्राद्धं कार्य्यम्।

विष्णुधर्म्मोत्तरे,—

व्रीहिपाके च कर्त्तव्यं यवपाके तथैव च।
न तावाद्यौ महाराज विना श्राद्धं कथञ्चन॥
पौर्णमासी तथा माघी श्रावणी च नरोत्तम।
प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी॥
एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः।

व्रीहिपाके चेत्यनेन नित्यश्राद्धं विधायाकरणे प्रत्यवायो दर्शितः। न तावाद्यावित्यनेन तु श्राद्धाकरणे अश्राद्धस्य द्रव्यस्य भक्षणे प्रत्यवायान्तरं [1][दर्शितं। तेन महागुरुनिपातेऽधिकाराभावात्

---

१ ख पुस्तके, [ ] चिह्नितांशो नास्ति।

श्राद्धाकरणे प्रत्यवायो नास्ति।] किन्त्वशुद्धद्रव्यभक्षणे प्रत्यवायात् तदुपयोगो न कार्य्यः। अत्र श्राद्धकालानित्युपसंहारात् व्रीहिपाककाले यवपाककाले चेति मन्तव्यं। स च शरद्वसन्तश्च।

यथा परिशिष्टप्रकाशधृता श्रुतिः,—

गृहमेधी व्रीहियवाभ्यां शरद्वसन्तयोर्यजेत श्यामाकैर्वनी वर्षासु॥

यद्यप्यत्र पाकपदेन कालो लक्ष्यते तथापि विशेषणस्य पाकस्यैव निमित्तत्वं प्राधान्यात् अन्यथा नानामुनिवचनेषु व्रीहिपाकपदेनाभिधानमसमञ्जसं स्यात्। अतएव,—

शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम्।

इति ब्रह्मपुराणम्।

एतच्च कार्त्तिके न कर्त्तव्यम्।

नवान्नं नैव नन्दायां न च सुप्ते जनार्द्दने।
न कृष्णपक्षे धनुषि तुलायां न कदाचन॥

इति निषेधात्।

न चैतद्वचनं मार्गशीर्षविहितनवशस्यमागमनिमित्तकश्राद्धमात्रविषयं नवान्नत्वाविशेषात्।

अतएव कामधेनुकृता,—

शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम्।
गच्छेत् क्षेत्री विधानेन गीतवाद्यपुरःसरः॥

इत्यभिधाय,

तेन देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा॥

इति ब्रह्मपुराणवचनमाश्विनमासीयतिथितत्त्वे लिखितम् अतएव शुक्लपक्ष एवैतच्छ्राद्धं शौचाभावे हैमन्तिकेनापि कार्य्यमाव-श्यकत्वात्।

अतएव बौधायनः,—

आ ब्रीहिपाकाद्यवपाकं नात्येति आ यवपाकाद्ब्रीहिपाकमिति। ब्रीहिपाकं ब्रीहिपाकनिमित्तकश्राद्धमित्यर्थः।

तथा परिशिष्टे,—

शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः॥

यज्ञतुल्यन्यायात् श्राद्धमपि तदा च तन्त्रेणैकम्।

## अथ कोजागरः।

लिङ्गपुराणे,—

आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि।
कौमुदी सा समाख्याता कार्य्या लोकविभूतये॥
कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम्।
सुगन्धैर्निशि सद्वेशो अक्षैर्जागरणं चरेत्॥

जागरणमित्यनेनैव प्राप्तौ निशीति कौमुदीसंज्ञार्थं। सुगन्धैः शोभनगन्धैरिति पूजायां गुणः, निशीति सद्वेशेनान्वयः, अन्यथा जागरणत्वेन निशालाभात् निशीत्यस्य वैयर्थ्यात्। अत्र च यस्मिन् दिने रात्रियोगस्तत्रैव लक्ष्मीपूजा दिनद्वये रात्रौ तिथिलाभे प्रदोषव्यापिनी ग्राह्या।

यथा हेमाद्रिलिखितं वचनम्,—

प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा।
प्रदोषोऽस्तमयादूर्द्धं नाडिकानां चतुष्टयम्॥

चतुष्टयमष्टावित्यर्थः। दिनद्वये प्रदोषव्यापित्वे युग्मादरेण व्यवस्था। न चाच त्रियामाव्यापिनीति वचनावकाशः तद्वचनस्य षष्टिदण्डात्मकतिथिविषयतया प्राक्निरूपितत्वात्। एवञ्च यस्मिन् दिने लक्ष्मीपूजा तस्मिन् दिने जागरणं कार्य्यम्।

लैङ्गे,—

निशीथे वरदा लक्ष्मी को जागर्त्तीति भाषिणी।
जगत्प्रभ्रमते तच लोकचेष्टावलोकिनी॥

तथा तत्रैव लक्ष्मीवाक्यम्,—

नारिकेलजलं पीत्वा अक्षक्रीडां समाचरन्।
तस्मै वित्तं प्रयच्छामि को जागर्त्ति महीतले॥

अक्षक्रीडामाचरन् को जागर्त्ति तस्मै वित्तं प्रयच्छामीत्यर्थः।

तथा,

नारिकेलैश्चिपिटकैः पितॄन् देवांश्च तर्पयेत्।
बन्धूंश्च भोजयेत्तेन स्वयं तदशनो भवेत्॥

पितृतर्पणं श्राद्धं काम्यं तच यस्मिन् दिने पूर्व्वाह्णे पूर्णिमा[1] तत्रैव, शुक्लपक्षविहितत्वात्॥

---

१ ख, पूर्णिमापदं नास्ति।

## अथ कार्त्तिककृत्यम्।

नारदीये,—

सुवर्णमेरुतुल्यानि सर्व्वदानानि चैकतः।
एकतः कार्त्तिको मासः सर्व्वदा केशवप्रियः॥
व्रतेन न क्षिपेद्यस्तु मासं दामोदरप्रियम्।
तिर्य्यग्योनिमवाप्नोति सर्व्वधर्म्मबहिष्कृतः॥
यतिश्च विधवा चैव विशेषेण वनाश्रमी।
कार्त्तिके नरकं यान्ति अकृत्वा वैष्णवं व्रतम्॥
जन्मप्रभृति यत् पुण्यं विधिवत् समुपार्ज्जितम्।
भस्मीभवति तत्सर्व्वमकृत्वा कार्त्तिके व्रतम्॥
कार्त्तिके नार्च्चितो यैस्तु भक्तियोगेन केशवः।
नरास्ते नरकं यान्ति यमदूतैः सुयन्त्रिताः॥
गवां कोटिप्रदानेन स्वर्णकोटिषु यत्फलम्।
तत्फलं कोटिगुणितमेकाहे केशवार्च्चनात्॥

भविष्ये,—

आमिषं मैथुनञ्चैव कार्त्तिके मासि यस्त्यजेत्।
सर्व्वकालकृतं पापं दुष्कृतं चापकर्षति॥
तुला-मकर-मेषेषु प्रातः स्नानं विशेषतः।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम्॥

अत्र राशुल्लेखात् सौरो मासः, दुष्कृतं दुर्निमित्तमित्यर्थः। ब्रह्मचर्य्यं स्त्रीपरित्यागः। त्रयाणां मिलितानामेव महापातकनाशः फलं न तु प्रत्येकम्।

कार्त्तिकं सकलं मासं प्रातःस्नायी जितेन्द्रियः ।
जपन् हविष्यभुक् शान्तः सर्व्वपापैः प्रमुच्यते ॥

इति ब्रह्मपुराणे पापमोचनक्रियायामधिकारिविशेषणतया सर्व्वेषां समुच्चयेन साधनत्वावगमात् । अरुणयैकहायन्या गवा सोमं क्रीणातीतिवत् ।

ब्रह्माण्डे,—

तुलायां तिलतैलेन सायं सन्ध्यासमागमे ।
आकाशदीपं यो दद्यात् मासमेकं निरन्तरम् ।
सश्रीकाय श्रीपतये स श्रीमानभिजायते ॥
ॐ दामोदराय नभसि तुलायां लोलया सह ।
प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे ॥
इति मन्त्रेण यो दद्यात् प्रदीपं सर्पिरादिना ।
आकाशे मण्डपे वापि स चाक्षयफलं लभेत् ॥
विप्रवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकम् ।
अग्निष्टोमसहस्रस्य फलमाप्नोति मानवः ॥
व्रतोपवासनियमैः कार्त्तिको यस्य गच्छति ।
देवो वैमानिको भूत्वा स याति परमां गतिम् ॥

मण्डपे विष्णुगृहे इत्यर्थः । व्रतं प्राजापत्यादि । उपवासोऽपि एकान्तरोपवासादिः । नियमः शाकमूलाहारादिः । कार्त्तिकोऽत्र सौरः तुलां प्रकृत्याभिधानात् ।

गारुड़े ब्रह्मोवाच,—

व्रतानि कार्त्तिके वक्ष्ये स्नात्वा विष्णुं प्रपूजयेत् ।

एकभक्तेन नक्तेन मासं याचाचितेन वा ॥
दुग्धमूलफलाद्यैर्वा उपवासेन वा नयेत्।
सर्व्वपापविनिर्मुक्तः प्राप्तकामो हरिं व्रजेत् ॥

तथा स्कान्दे,—

यो नरः कार्त्तिकं मासमेकभक्तेन तिष्ठति।
अश्वमेधफलं प्राप्य वह्निलोके महीयते ॥

भविष्ये,—

उच्चैः प्रदीपमाकाशे यो दद्याद्विष्णवे नरः।
स सर्व्वं कुलमुद्धृत्य विष्णुलोकमवाप्नुयात् ॥
यः कुर्य्यात् कार्त्तिके मासि शोभनां दीपमालिकाम्।
चण्डिकायतने भक्त्या स हि सूर्य्योपमां व्रजेत् ॥
नवम्यान्तु विशेषेण भक्तिश्रद्धासमन्वितः।
यावन्तो दीपसंख्यास्तु तैलेनापूर्य्य बोधिताः।
तावद्युगसहस्राणि दुर्गालोके महीयते ॥
ददाति कार्त्तिके यस्तु सूर्य्यायतनदीपकम्।
अव्याहतेन्द्रियत्वञ्च स प्राप्नोति न संशयः ॥

बोधिता ज्वालिता इत्यर्थः।

स्कान्दे शिववाक्यम्,—

प्रदीपमालां यः कुर्य्यात् कार्त्तिके मासि वै मम।
अवसाने च दीपानां ब्राह्मणान् भोजयेच्छुचिः ॥
गाणपत्यञ्च लभते दीप्यते च रविर्यथा।

नन्दिपुराणे,—

यो नरः कार्त्तिके मासि मांसन्तु परिवर्ज्जयेत् ।
संवत्सरस्य लभते पुण्यं मांसस्य वर्ज्जनात् ॥

तथा,

तुला-मकर-मेषेषु यो मासं परिवर्ज्जयेत् ।
चत्वारि भद्राण्याप्नोति कीर्त्तिमायुर्यशो बलम् ॥

नारदीये,—

यः करोति नरो नित्यं कार्त्तिके पत्रभोजनम् ।
न दुर्गतिमवाप्नोति यावदिन्द्राश्चतुर्द्दश ॥
भोजनं पद्मपत्रेषु महापातकनाशनम् ।
कार्त्तिके मुक्तिदं प्रोक्तं ब्रह्मपत्रेषु भोजनम् ॥

ब्रह्मपत्रं पलाशपत्रम् ।

नारदीये,—

निष्पावान् राजमाषांश्च सुप्ते देवे जनार्द्दने ।
यो भक्षयति विप्रेन्द्रश्चण्डालादधिको हि सः ॥
कार्त्तिके तु विशेषेण राजमाषन्तु भक्षयेत् ।
निष्पावं वा मुनिश्रेष्ठ यावदाहूतनारकी ॥
कदम्बानि पटोलानि वार्त्ताकुसहितानि च ।
न त्यजेत् कार्त्तिके मासि यावदाहूतनारकी ॥
एतानि भक्षयेद्यस्तु सुप्ते देवे जनार्द्दने ।
शतजन्मार्ज्जितं पुण्यं दहते नात्र संशयः ॥

निष्पावो देवधान्यं, राजमाषो वरवटः। कश्चित् कठ्ञ्चा-नीति पठित्वा कठ्ञ्ची शाकभेदमिति व्याचष्टे।

लैङ्गे,—

कार्त्तिके कृष्णपक्षे तु चतुर्द्दश्यां दिनोदये।
अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुभिः॥
अपामार्गपल्लवञ्च भ्रामयेच्छिरसोपरि।
ततश्च तर्पणं कार्य्यं धर्म्मराजस्य नामभिः॥
ततः प्रेतचतुर्द्दश्यां भोजयित्वा तपोधनान्।
शैवांश्च वैष्णवान् विप्रान् शिवलोके महीयते॥

अवश्यमेवेत्यनेन स्नानस्य नित्यत्वमुक्तं अन्यथा वैयर्थ्यात्, अपा-मार्गभ्रामणं तु मङ्गलार्थम्।

नामान्युक्तानि भविष्ये,—

यां काञ्चित् सरितं प्राप्य कृष्णपक्षे चतुर्द्दशीम्।
यमुनायां विशेषेण नियतस्तर्पयेद्यमान्॥
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च॥
औडुम्बराय दध्नाय नीलाय परमेष्ठिने।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः॥
एकैकस्य तिलैर्मिश्रान् दद्यात् त्रीं स्त्रीन् जलाञ्जलीन्।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति।

लैङ्गे,—

नक्तं प्रेतचतुर्द्दश्यां यत् कुर्य्यात् शिवतुष्टये।

न तत्क्रतुशतेनापि प्राप्यते पुण्यमीदृशम् ॥

नक्तं रात्रौ शिवमुद्दिश्य यत्किञ्चित् पूजादिकम् कर्म्म करोतीत्यर्थः। अथ भौमवारे चित्रानक्षत्रयोगे फलातिशयः।

यथा भविष्ये,—

कार्त्तिके भौमवारे तु चित्राख्याचतुर्द्दशी।

तस्यामाराधितः स्थाणुर्नयेच्छिवपुरं ध्रुवम् ॥

राजमार्त्तण्डे,—

रात्रौ चतुर्द्दशीं कृष्णां चित्राङ्गारतुलान्विताम्।

उपोष्य स्वर्गमाप्नोति हेतुकेश्वरसन्निधौ ॥

विमुक्ता भौमवारेण चित्रभेण तथैव च।

तिथिरेव सदा पूज्या नात्र कार्य्या विचारणा ॥

अतएव रात्रिपूजाविधानात् यस्मिन् दिने रात्रौ चतुर्द्दशी तत्रैव पूजादिकम्। उभयदिनलाभे त्रयोदश्या चतुर्द्दशीति युग्मवचनाद्व्यवस्था। विशेषस्तु चतुर्द्दशीनिरूपणे प्रागेव द्रष्टव्यः।

भविष्ये,—

कुजचित्रगता भूता असिता या तु कार्त्तिके।

वशिष्ठ जाह्नवीस्नानात् सर्व्वं तरति दुष्कृतम् ॥

लैङ्गे,—

दीपमालां तथा कृत्वा चतुर्द्दश्यां शिवालये।

चतुष्पथे च मार्गेषु चत्वरेषु गृहेषु च ॥

एकविंशकुलोपेतो वसेच्छिवपुरे नरः।

अथ च प्रशस्तानामुल्कादानमन्येषान्तु दर्श इति।

अश्वाश्वत्थहतानाञ्च भूतानां भूतदर्शयोः।

इति मन्त्रलिङ्गात्। अत्राचारात् चतुर्दश्यां शाकभक्षणं कुर्व्वन्ति।

पञ्चप्रेतोपाख्यानञ्च शृण्वन्ति,[१]—

ततः प्रेतचतुर्द्दश्यां प्रेतोपाख्यानमुत्तमम्।
यः शृणोति नरो भक्त्या न स प्रेतत्वमाप्नुयात्॥

इति संवत्सरप्रदीपलिखितेतिहाससमुच्चयवचनात्।

उपाख्यानं यथा तत्रैव,—

अथ प्रेतचतुर्द्दशीव्रतकथा।

शरतल्पगतं भीष्मं वृद्धं कुरुपितामहम्।
मूर्द्ध्ना प्रणम्य विश्वात्मा पप्रच्छेदं युधिष्ठिरः॥

युधिष्ठिर उवाच,—

केन कर्म्मविपाकेन प्रेतत्वमुपजायते।
केन वा मुच्यते तस्मात्तन्मे ब्रूहि पितामह॥

भीष्म उवाच,—

अहन्ते कथयिष्यामि सर्व्वमेतदशेषतः।
यच्छ्रुत्वा न पुनर्मोहमुपयास्यसि पुत्रक॥
येन वै जायते प्रेतो येन चैव प्रमुच्यते।
प्राप्नोऽथ नरकं घोरं दुस्तरं दैवतैरपि॥
सततं [१]कीर्त्तनाद्यस्य पुण्यतीर्थानुकीर्त्तनात्।
मानवाः संप्रमुच्यन्ते प्रपन्नाः प्रेतयोनिषु॥

---

१ ग, श्रवणात्।

श्रूयते हि पुरा वत्स ब्राह्मणः संशितव्रतः ।
नाम्ना सान्तपनः ख्यातस्तपोऽर्थं वनमाश्रितः ॥
स्वाध्याययुक्तो होमेन योगयुक्तस्य योगवित् ।
तपोजप्यविधानेन युक्तः कालचर्येण सः ॥
युक्तः शमदमाभ्याञ्च चान्त्या युक्तश्च धर्म्मवित् ।
ब्रह्मचर्य्ये समायुक्तो युक्तस्य परिमार्द्दवे ॥
युक्तः कार्य्येषु मैत्रेषु वेदयुक्तः स्वकर्म्मवित् ।
परलोकभये युक्तः सत्यशौचश्च नित्यशः ॥
युक्तो मधुरवाक्येषु युक्तश्चातिथिपूजने ।
इज्यायोगेन संयुक्तो युक्तो द्वन्द्वविवर्ज्जने ॥
योगाभ्यासे सदायुक्तो संसारविजिगीषवान् ।
परं धर्म्मं समाश्रित्य गन्तुमिच्छन् परं पदम् ॥
एवंवृत्तः सदाचारो मोक्षाकाङ्क्षी जितेन्द्रियः ।
बहून्यब्दानि विजने वने तस्य गतानि वै ।
तस्यैकदा मतिर्ज्जाता तीर्थाभिगमनं प्रति ॥
स तीर्थे विधिवत् स्नात्वा भास्करस्योदयं प्रति ।
कृतजप्यनमस्कारः पन्थानं प्रत्यपद्यत ॥
स कदाचिदथापश्यत् पञ्च प्रेतान् सुभीषणान् ।
घोरकण्टकिते देशे निर्जने वृक्षवर्ज्जिते ॥
तान् दृष्ट्वा विकृताकारान् घोरानत्यन्तभीषणान् ।
ईषदुद्भ्रान्तहृदयस्तस्थौ नेत्रे निमील्य वै ॥
अवलम्ब्य ततो धैर्य्यं चासमुत्सृज्य दूरतः ।

पप्रच्छ स्निग्धया वाचा के यूयं विकृता भृशम् ॥
किन्त्वाशुभं कृतं कर्म्म येन प्राप्ताः स्थ वैकृतम् ।
कथं वा चैकतः सर्व्वे प्रस्थिताः कुत्र वा पुनः ॥

प्रेता ऊचुः,—

क्षुत्पिपासार्द्दिता नित्यं परं दुःखं समाश्रिताः ।
हृतभाग्या वयं सर्व्वे नष्टसंज्ञा विचेतसः ॥
न जानीमो दिशं तात विदिशं वापि दुःखिताः ।
कुत्र गच्छामहे मूढ़ाः पिशाचाः कर्म्मजा वयम् ॥
न माता न पितास्माकं प्रेतत्वं कर्म्मभिः स्वकैः ।
गताः स्मः सततं तात दुःखोद्वेगसमाकुलाः ॥
त्वद्दर्शनेन ते ब्रह्मन् ह्लादितास्तर्पिता वयम् ।
मुहूर्त्तं तिष्ठ वक्ष्यामो वृत्तान्तं सर्व्वमादितः ॥
मम पर्य्युषितो नाम एष सूचिमुखः स्मृतः ।
शीघ्रगो रोहकश्चैव पञ्चमो लेखकस्तथा ॥

ब्राह्मण उवाच,—

प्रेतानां कर्म्मजातानां नाम्नां वै सम्भवः कथम् ।
नाम्नां वै कारणं ब्रूहि प्रेतत्वस्य च कारणम् ॥

प्रेता ऊचुः,—

मया स्वादु सदा भुक्तं दत्तं पर्य्युषितं द्विजे ।
एतत् कारणमुद्दिश्य नाम पर्य्युषितं मम ॥
सूचिता बहवोऽनेन विप्राश्चार्थाभिकाङ्क्षिणः ।
कारणेनामुना ब्रह्मन्नेष सूचिमुखः स्मृतः ॥

शीघ्रम् गच्छति विप्रेण याचितः क्षुधितेन वै ।
अनेन कारणेनाद्य शीघ्रगो नाम कीर्त्त्यते ॥
एकाकी मिष्टमश्नाति ग्रासामात्यं नित्यशः ।
ब्राह्मणानां भयेनैव रोहकस्तेन चोच्यते ॥
पुरायं मौनमास्थाय याचितो विविक्षेऽम्बरीम् ।
तेन कर्म्मविपाकेन लेखको नामतः कृतः ॥
मेन्नेण लेखको याति रोहकः पर्व्वतामनः ।
शीघ्रगः पङ्गुतां प्राप्तः सूचकः सूचिवक्त्रताम् ॥
उषितः कम्बलग्रीवः पश्य रूपविपर्य्ययम् ।
सर्व्वे च विकृताकारा लम्बोष्ठाश्चोन्नतोदराः ॥
वृहद्वृषणदन्ताश्च चक्राद्या निन्दिता वयम् ।
प्रेतत्वं कर्म्मणा येन प्राप्तं नामानि च द्विज ।
एतत्ते सर्व्वमाख्यातं प्रेतत्वनामकारणम् ।
यदि ते श्रवणे श्रद्धा पृच्छ मां यद्यदिच्छसि ॥

ब्राह्मण उवाच,—

ये जीवा भुवि तिष्ठन्ति सर्व्वे चाहारमूलकाः ।
युष्माकमपि चाहारं श्रोतुमिच्छामि तत्त्वतः ॥

प्रेता ऊचुः,—

शृणु चाहारमस्माकं सर्व्वसत्वविगर्हितम् ।
यच्छ्रुत्वा निन्दसे ब्रह्मन् भूयो भूयश्च कुत्सितम् ।
श्लेष्ममूत्रपूरीषेण योषिताञ्च मलेन च ।
उच्छिष्टेनैव वाऽन्येन प्रेतानां भोजनं भवेत् ॥

गृहाणि त्यक्तशौचानि प्रकीर्णोच्छिष्टकानि च ।
मलिनानि सशोकानि प्रेता भुञ्जन्ति तत्र वै ॥
स्त्रीषु नग्नानि गीर्णानि वान्तान्युच्छिष्टकानि च ।
मलिनानि सुपूतीनि प्रेता भुञ्जन्ति तत्र वै ॥
यस्मिन् शौचं गृहे नास्ति न सत्यं न च संयमः ।
पतितैर्दस्युभिर्योगः प्रेता भुञ्जन्ति तत्र वै ॥
बलिमन्त्रविहीनानि होमहीनानि यानि च ।
स्वाध्यायव्रतहीनानि प्रेता भुञ्जन्ति तत्र वै ॥
न लज्जा न च मर्य्यादा यत्र स्त्रीविजितो गृही ।
गुरवो न च पूज्यन्ते प्रेता भुञ्जन्ति तत्र वै ॥
[[1]यत्र भेदारतिक्रोधा निद्रा शोको भयन्दमः ।
आलस्यं कलहो हासः प्रेता भुञ्जन्ति तत्र वै ॥
प्रकीर्णभाण्डशोच्छिष्टं मलिनं धर्मवर्ज्जितम् ।
यद्गृहं नास्तिकाक्रान्तं प्रेता भुञ्जन्ति तत्र वै ॥
ह्रिया मे जायते तात वदतो भोजनं स्वकम्] ।
निर्विंषः प्रेतभावेन पृच्छामि त्वां दृढ़व्रत ।
यथा न भवति प्रेतस्तन्मे ब्रूहि तपोधन ॥

ब्राह्मण उवाच,—

एकरात्रै स्त्रिरात्रैश्च कृच्छ्रैश्चान्द्रायणैरपि ।
व्रतैश्च विविधैः पूतो न प्रेतो जायते नरः ॥

---

१ ख, ग, पुस्तकद्वये [ ] चिह्नितपाठा न सन्ति ।

मिष्टान्नपानदाता च सततं श्रद्धयान्वितः।
ज्ञातीनां भोजको नित्यं न प्रेतो जायते नरः॥
गोब्राह्मणसतीर्थानां साधूनाञ्च तपस्विनाम्।
सेवनैर्वन्दनैश्चापि न प्रेतो जायते नरः॥
यो यजेदश्वमेधेन दानं दद्याच्च शक्तितः।
कृत्वा न कीर्त्तयेद्धर्मं न स प्रेतत्वमाप्नुयात्॥
सर्व्वभूतदयायुक्तो विष्णुपूजापरायणः।
तुल्यप्रियाप्रियो दान्तो न प्रेतो जायते नरः॥
देवतातिथि — गुरुपूजासु यो रतः।
जितेन्द्रियो जितक्रोधो न प्रेतो जायते नरः॥

प्रेता ऊचुः,—

[1]श्रुता वो विविधा धर्म्माः प्रेतत्वं येन जायते।
यैः कृतैस्तु भवेत् प्रेतस्तत्वतो निगदस्व तत्॥

ब्राह्मण उवाच,—

शूद्रान्नेनोदरस्थेन प्राणांस्त्यजति यो द्विजः।
मृतो वा पतितान्नेन स प्रेतो जायते नरः॥
[2]कृत्वाऽधर्म्मेण सम्पर्कं मद्यपस्त्रीनिषेवणम्।
जग्ध्वा मोहात् वृथामांसं प्रेतो वै जायते नरः॥
देवद्रव्यं गुरुद्रव्य ब्रह्मस्वञ्च हरेत्तु यः।
कन्यां ददाति शुल्केन स प्रेतो जायते नरः॥

---

१ ग, श्रुतारो।

२ ख, पुस्तके कृत्वेत्यादि श्लोकचतुष्कं नास्ति।

मातरं पितरं भार्य्यां भगिनीं दुहितरं तथा ।'
अदुष्टदोषां त्यजति स प्रेतो जायते नरः ॥
अयाज्ययाजकश्चैव याज्यानाञ्च विवर्ज्जकः ।
रतो वै शूद्रसेवायां स प्रेतो जायते नरः ॥
न्यासापहर्त्ता मित्रध्रुक् परपाकरतः सदा ।
विस्रम्भघाती क्रूरश्च स प्रेतो जायते नरः ॥
ब्रह्महा क्रतघ्नो गोघ्नः सुरापो गुरुतल्पगः ।
हर्त्ता क्षेत्रस्य भूमेश्च स प्रेतो जायते नरः ॥

भीष्म उवाच,—

एवं वदति विप्रेन्द्रे आकाशे दुन्दुभिस्वनः ।
अपतत् पुष्पवृष्टिश्च देवैर्मुक्ता महीपते ॥
पञ्च दिव्यविमानानि प्रेतानामागतानि वै ।
स्वर्गं गता विमानैस्ते पुण्यं संसेव्य तं मुनिम् ॥
तस्य विप्रस्य संभाषात् पुण्यसङ्कीर्त्तनेन च ।
तस्मात् सेवा द्विजाग्र्याणां तीर्थेभ्योऽपि गरीयसी ॥
य इदं कीर्त्तयेत् सम्यक् प्रेतोपाख्यानमुत्तमम् ।
शृणुयाद्वापि यो भक्त्या न स प्रेतत्वमाप्नुयात् ॥

इतिहाससमुच्चये पञ्चप्रेतोपाख्यानं समाप्तम् ।

## अथ सुखरात्रिः ।

भविष्योत्तरे,—

तुलाराशिगते सूर्य्ये अमावस्यां नराधिप ।
स्नात्वा देवान् पितॄन् भक्त्या संपूज्याथ प्रणम्य च ॥

कृत्वा तु पार्व्वणश्राद्धं दधिक्षीरगुड़ादिभिः ।
ततोऽपराह्नसमये घोषयेन्नगरे नृपः ॥
लक्ष्मीः संपूज्यतां लोका उल्काभिश्चापि वेष्ठ्यताम् ।

तुलाराशिगते इति प्रायिकप्रदर्शनमात्रम् । कदाचिद्दिवा-समाप्यामावस्यायां दिवाभागे तुलासञ्चारे तत्पूर्व्वदिने कन्यार्केऽपि पार्व्वणश्राद्धं लक्ष्मीपूजापि कर्त्तव्या पौर्णमास्यन्तगौणकार्त्तिक एव लक्ष्मीसमुत्थानात् । अतएव राजमार्त्तण्डे तत्परशुक्लपक्षे केशवो-त्थानमुक्तम् ।

यथा,—

अमावस्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।
तस्मिन् शुक्ले ततो विष्णुस्तुलायामथ वृश्चिके ॥

तथा च ब्रह्मपुराणे,—

कार्त्तिके चामावस्यायां लक्ष्मीर्निद्रां विमुञ्चति ।
दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ॥
प्रदोषसमये लक्ष्मीं पूजयित्वा यथाविधि ।
दीपवृक्षास्तथा कार्य्याः शक्त्या देवगृहेषु च ॥
रथ्यापणश्मशानेषु नदीपर्व्वतसानुषु ।
वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च ॥
कूटागारेषु चैत्येषु सभारामेषु चैव हि ।
ब्राह्मणान् भोजयित्वादौ विभोज्य च बुभुक्षितान् ॥
अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना ।

कूटागारो धान्यादिस्थापनगृहम् ।

भविष्योत्तरे श्राद्धात्परं लक्ष्मीपूजनमुक्तं सम्पूर्णामावस्याभि-प्रायेणैव। यदा तु श्राद्धदिने प्रदोषेऽमावस्या न लभ्यते तदा तत्-पूर्व्वदिने प्रदोषेऽमावस्यायां लक्ष्मीपूजा।

अतएव ज्योतिःशास्त्रम्,—

अमावस्या यदा रात्रौ दिवाभागे चतुर्द्दशी।
पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका॥

बालातुरातिरिक्तानां सर्व्वेषां दिवाभोजननिषेधोऽपि लक्ष्मी-पूजादिन एव तदधिकृत्याभिधानात्। उभयदिने प्रदोषेऽमावस्या-लाभे युग्मादरात्परदिन एव।

तथाच ज्योतिषे,—

दण्डैकं रजनीयोगो दर्शस्य स्यात् परेऽहनि।
तदा विहाय पूर्व्वेद्युः परेऽह्नि सुखरात्रिका॥

दिनद्वये प्रदोषे दर्शालाभे तु पूर्व्वदिन एव रात्रिसम्बन्धादिति,

भविष्ये,—

सुखरात्र्यां प्रदोषे हि कुवेरं पूजयन्ति हि।

तथा,—

एवं गते निशीथे तु नारीभिः खट्वाङ्गनात्।
अ॰ लक्ष्मीस्य वह्निः कार्य्या समन्त्रश्च यथाविधि॥

निशीथि द्विराचे गते शेषरात्रावित्यर्थः। मन्त्रस्तु प्रयोगे वक्ष्यते।

तथा भविष्ये॥

यमलविधानःकाले प्रदीपोज्ज्वलिताश्रये।
उल्कान्नरान्भूंश्च वाचा कुशमयार्च्चयेत्॥

प्रदीपवन्दनं कार्य्यं लक्ष्मीमङ्गलहेतवे।
गोरोचनाक्षतञ्चैव दद्यादङ्गेषु यत्नतः॥

बन्धून् पुत्रभ्रात्रादीन् अबन्धून् भृत्यादीनित्यर्थः। उल्कादीपनन्तु श्राद्धानन्तरमेव प्रदोषे प्रतिपद्यपि कार्य्यं न तु लक्ष्मीपूजासाहित्येन, उल्कादीपनस्य हि मन्त्रलिङ्गात् पितृविसर्ज्जनमेव प्रयोजनं तच्च श्राद्धानन्तरमेवोचितं। किञ्च वक्ष्यमाणवचने श्राद्धानन्तर्य्योपादानात्।

न च लक्ष्मीपूजावदानन्तर्य्यबाधे वचनान्तरमस्ति न च दर्शे विधानान्नान्यत्रेति वाच्यम्, दर्शस्य प्राशस्त्यात्, अन्यथा दिनद्वये प्रदोषे दर्शालाभे लोप एवोल्कादानस्य स्यात्।

अतएव ज्योतिषे,—

पिण्डनिर्व्वपणं कृत्वा पितॄणामात्मवान्नरः।
प्रदोषसमये कुर्य्यादुल्कादीपनमुज्ज्वलम्॥
भूताहे ये प्रकुर्व्वन्ति उल्काग्रहणमचेतसः।
निराशाः पितरो यान्ति शापं दत्वा सुदारुणम्॥

आत्मवान् यत्नवानित्यर्थः, भूताहे भूतोपलक्षितदिने श्राद्धमकृत्वा प्रदोषे दर्शलाभात् ये कुर्व्वन्तीत्यर्थः। अतएव श्राद्धात्पूर्व्वं विसर्ज्जनात् निराशत्वाभिधानं सङ्गच्छते।

यत्तु,— तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः।
उल्काहस्ता नराः कुर्य्युः पितॄणां मार्गदर्शनम्॥ इत्
इति वचनन्तच्चतुर्दश्यामुल्कादान यकम्।
अमावास्याचतानाञ्च भूतानां भूतदर्शयोः, इति मन्त्रलि

यच्च श्राद्धमभिधाय,—

ततोऽपराह्णसमये घोषयेन्नगरे नृपः।

लक्ष्मीः सम्पूज्यतां लोका उल्काभिश्चापि वेष्ट्यताम्॥

इति भविष्योत्तरपुराणवचनं तदुल्काप्रायप्रदीपैरुल्काभिर्वा लक्ष्मीवेष्टनाभिप्रायं न तु पितृविसर्ज्जनार्थं तदिति। चेष्ट्यतामिति पाठे उल्काभिः पितृविसर्ज्जनार्थं चेष्टा क्रियतामित्यर्थः तदाप्युल्कादानस्य श्राद्धानन्तर्य्यं सिद्धं लक्ष्मीपूजायान्तु श्राद्धानन्तर्य्यं प्रायिकं प्रागुक्तवचनविरोधादिति प्रागुक्तम्।

तदयं संक्षेपः।

श्राद्धदिने श्राद्धं कृत्वा प्रदोषे उल्काभिः पितृविसर्ज्जनं, लक्ष्मीपूजा तु यस्मिन् दिने प्रदोषेऽमावस्या तत्रैव, दिनद्वये प्रदोषे तल्लाभे युग्मादरात् परदिन एव, अलाभे तु पूर्व्वदिन एव रात्रिसम्बन्धादिति।

अथोल्काविधिः।

प्रदोषसमये उल्काचयमानीय संप्रोक्ष्य प्रज्वाल्य उल्कां गृह्णीयात्। तत्र मन्त्रः,—

शस्त्राशस्त्रहतानाञ्च भूतानां भूतदर्श्शयोः।

उज्ज्वलज्योतिषा देहं निर्द्दहेद्व्योमवह्निना॥

अथोल्कादानमन्त्रौ।

अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम।

उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम्॥

यमलोकं परित्यज्य आगता ये महालये।

उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते॥

महालये अश्वयुक्कृष्णपक्षे इत्यर्थः । अमावस्यायां दीपान्वितः प्रज्वाल्य लक्ष्मीं पूजयेत् ।

प्रथममुदङ्मुख आसने उपविश्य स्वस्ति वाच्य सङ्कल्पं कुर्यात् ॐ अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्म्मा बहुधनधान्यसम्पत्तिकामः प्रदोषसमये लक्ष्मीमहं पूजयिष्ये । ततो भूतशुद्धिं प्राणायामं मातृकान्यासं कृत्वा सामान्यार्घ्यं विधाय विघ्नवारणाय ॐ गणानान्त्वेति मन्त्रेण घटे गणेशमावाह्य पाद्यादिभिः पूजयेत् ।

ततो दक्षऋषिर्मस्तके विराट्छन्दो मुखे श्रीर्देवता हृदि विन्यस्य कराङ्गन्यासौ कुर्यात् ।

ॐ देव्यै नमोऽङ्गुष्ठाभ्यां नमः ।
ॐ पद्मिन्यै नमस्तर्ज्जनीभ्यां स्वाहा ।
ॐ विष्णुपत्न्यै नमो मध्यमाभ्यां वषट् ।
ॐ वरदायै नमोऽनामिकाभ्यां हुं ।
ॐ कमलरूपायै नमः कनिष्ठाभ्यां फट् ।
ॐ देव्यै नमो हृदयाय नमः ।
ॐ पद्मिन्यै नमः शिरसे स्वाहा ।
ॐ विष्णुपत्न्यै नमः शिखायै वषट् ।
ॐ वरदायै नमः कवचाय हुं ।
ॐ कमलरूपायै नमोऽस्त्राय फट् ।

इति तालत्रयं दिग्बन्धनञ्च कृत्वा पीठन्यासं विधाय हृत्पद्ममध्ये देवीं ध्यायेत् ।

आसीना सरसीरुहे स्मितमुखी हस्ताम्बुजैर्बिभ्रती

इत्थं पद्मयुगाभये च वपुषा सौदामिनीसन्निभा।
मुक्तादामविराजमानपृथुलोत्तुङ्गस्तनोद्भासिनी
पायाद्वः कमला कटाक्षविभवैरानन्दयन्ती हरिम्॥

इति ध्यात्वा मनसा सम्पूज्य पूर्वोक्तविधिनार्घ्यं पाद्यमाचमनीयञ्च संस्थाप्य चन्दनाङ्कितामष्टदलपद्मे ग्रामग्रामे घटे वा पूजयेत्।

अथ पीठपूजा।

मध्ये,— आधारशक्तये नमः, कूर्म्माय, अनन्ताय, पृथिव्यै, सुमेरवे, क्षीरसागराय, श्वेतद्वीपाय, कल्पवृक्षाय।

आग्नेयादिकोणेषु,—

धर्म्माय, ज्ञानाय, वैराग्याय, ऐश्वर्य्याय।

चतुर्द्दिक्षु,—

अधर्म्माय, अज्ञानाय, अवैराग्याय, अनैश्वर्य्याय॥

मध्ये,—

शेषाय, पद्माय, अं सूर्य्यमण्डलाय, उं सोममण्डलाय, मं वह्निमण्डलाय, सं सत्त्वाय, रं रजसे, तं तमसे, आं आत्मने, अं अन्तरात्मने, पं परमात्मने, ह्रीं ज्ञानात्मने नमः।

अष्टदिक्षु,—

विभूत्यै, उन्नत्यै, शान्त्यै,[१] पुष्ट्यै, कीर्त्त्यै, सन्नत्यै, व्युष्ट्यै, उत्कृष्टयै।

मध्ये,— ऋद्ध्यै नमः।

ह्रीं पद्मासनाय नमः, इति पुष्पासनं दद्यात्। ततः पुनर्ध्यात्वा

---

१ ख, ग, शान्त्यै इत्यत्र कान्त्यै। तथा ग पुस्तके, पुष्ट्यै, व्युष्ट्यै पदद्वयं नास्ति।

पुष्पाञ्जलिना तेजोरूपां भगवतीं मण्डले संस्थाप्य मूलमन्त्रेण साव-यवीकृत्य प्राणप्रतिष्ठां कृत्वा ॐ गन्धद्वारामिति मन्त्रं पठित्वा भग-वति लक्ष्मि देवि इहागच्छागच्छ तिष्ठ तिष्ठ सन्निहिता भव इत्या-वाहनादिमुद्राः प्रदर्श्य देवताङ्गेऽङ्गन्यासं कृत्वा मूलमन्त्रेण पाद्या-दिभिरुपचारैः पूजयेत्। मूलमन्त्रो यथा,—

कमलान्ते च वासिन्यै ततः स्वाहेति कीर्त्तयेत्।

नमः पदादिको मन्त्रो महालक्ष्म्या दशाक्षरः॥

ततस्तत्पार्श्वे नारायणमष्टाक्षरनारायणमन्त्रेण पाद्यादिभिरुप-चारैरभ्यर्च्यावरणानि पूजयेत्।

आग्नेयादिकोणकेशरेषु,—

ॐ देव्यै नमो हृदयाय नमः, ॐ पद्मिन्यै नमः शिरसे स्वाहा, ॐ विष्णुपत्न्यै नमः शिखायै वषट्, ॐ वरदायै नमः कवचाय हुं। चतुर्दिक्षु, ॐ कमलरूपायै नमोऽस्त्राय फट्।

पूर्व्वाद्यष्टपत्रेषु,—

वलाक्यै, विमलायै, कमलायै, वनमालिकायै, विभीषिकायै, मालिकायै, शाङ्कर्य्यै, वसुमालिकायै।

तद्वाह्ये,—

इन्द्राय, अग्नये, यमाय, नैर्ऋताय, वरुणाय, वायवे, सोमाय, ईशानाय, अनन्ताय, ब्रह्मणे नमः॥ वज्राय, शक्तये, दण्डाय, खड्गाय, पाशाय, अङ्कुशाय, गदायै, शूलाय, चक्राय, पद्माय नमः।

[१][इति सम्पूज्य पुष्पाञ्जलिं दद्यात्। ततो दधिचिपिटकैर्नारि-

१ ख पुस्तके, [ ] चिह्नितांशो नास्ति।

विराट् छन्दो मुखे, श्रीर्देवता हृदि, धनधान्यादिसम्पत्तिसिद्धये लक्ष्मीमन्त्रजपे विनियोगः।]

यथाशक्तिद्शाक्षरलक्ष्मीमन्त्रं जपित्वा उज्ज्वलदीपहस्तो लक्ष्मीं प्रदक्षिणीकृत्य पुष्पाञ्जलिं दद्यात्।

ॐ नमस्ते सर्व्वदेवानां वरदाऽसि हरिप्रिये।
या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्च्चनात्॥

ततः कृताञ्जलिः पठेत्।

ॐ विश्वरूपस्य भार्य्यासि पद्मे पद्मालये शुभे।
महालक्ष्मि नमस्तुभ्यं सुखरात्रिं कुरुष्व मे॥
या रात्रिः सर्व्वभूतानां या च देवैरभिष्टुता।
संवत्सरप्रिया या च सा ममास्तु सुमङ्गला॥

ततः प्रणमेत्।

माता त्वं सर्व्वभूतानां देवानां सृष्टिसम्भवा।
आख्याता भूतले देवि सुखरात्रि नमोऽस्तु ते॥

ततः कुवेरमावाह्य पाद्यादिभिरुपचारैः सम्पूज्य पुष्पाञ्जलिं दद्यात्।

धनदाय नमस्तुभ्यं निधीनामधिपाय च।
भवन्तु त्वत्प्रसादेन धनधान्यादिसम्पदः॥

ततो दक्षिणां दत्वाऽच्छिद्रं कृत्वा ब्राह्मणान् भोजयित्वा स्वेष्टो बान्धवैः सह भुञ्जीत। ततः प्रत्यूषे सर्व्वतः प्रदीपान् प्रज्वाल्य लक्ष्मीप्रतिकृतिं सम्पूज्य गृहाद्वहिः कुर्व्वीत। तन्मन्त्रमाह,—

पुष्पाञ्जलिना तेजोरूपां भगवतीं मण्डले संस्थाप्य मूलमन्त्रेण साव-यवीकृत्य प्राणप्रतिष्ठां कृत्वा ॐ गन्धद्वारामिति मन्त्रं पठित्वा भग-वति लक्ष्मि देवि इहागच्छागच्छ तिष्ठ तिष्ठ सन्निहिता भव इत्या-वाहनादिमुद्राः प्रदर्श्य देवताङ्गेऽङ्गन्यासं कृत्वा मूलमन्त्रेण पाद्या-दिभिरुपचारैः पूजयेत्। मूलमन्त्रो यथा,—

कमलान्ते च वासिन्यै ततः स्वाहेति कीर्त्तयेत्।
नमः पदादिको मन्त्रो महालक्ष्म्या दशाक्षरः॥

ततस्तत्पार्श्वे नारायणमष्टाक्षरनारायणमन्त्रेण पाद्यादिभिरुप-चारैरभ्यर्च्यावरणानि पूजयेत्।

आग्नेयादिकोणकेशरेषु,—

ॐ देव्यै नमो हृदयाय नमः, ॐ पद्मिन्यै नमः शिरसे स्वाहा, ॐ विष्णुपत्न्यै नमः शिखायै वषट्, ॐ वरदायै नमः कवचाय हुं। चतुर्द्दिक्षु, ॐ कमलरूपायै नमोऽस्त्राय फट्।

पूर्व्वाद्यष्टपत्रेषु,—

बलाक्यै, विमलायै, कमलायै, वनमालिकायै, विभीषिकायै, मालिकायै, शाङ्कर्य्यै, वसुमालिकायै।

तद्वाह्ये,—

इन्द्राय, अग्नये, यमाय, नैर्ऋताय, वरुणाय, वायवे, सोमाय, ईशानाय, अनन्ताय, ब्रह्मणे नमः॥ वज्राय, शक्तये, दण्डाय, खड्गाय, पाशाय, अङ्कुशाय, गदायै, शूलाय, चक्राय, पद्माय नमः।

[1][इति सम्पूज्य पुष्पाञ्जलिं दद्यात्। ततो दृषद्विनिर्म्मलके,

१ ख पुस्तके, [ ] चिह्नितांशो नास्ति।

विराट् छन्दो मुखे, श्रीर्देवता हृदि, धनधान्यादिसम्पत्तिसिद्धये लक्ष्मीमन्त्रजपे विनियोगः।]

यथाशक्तिद्‌शाक्षरलक्ष्मीमन्त्रं जपित्वा उज्ज्वलदीपहस्तो लक्ष्मीं प्रदक्षिणीकृत्य पुष्पाञ्जलिं दद्यात्।

ॐ नमस्ते सर्व्वदेवानां वरदाऽसि हरिप्रिये।
या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात्॥

ततः कृताञ्जलिः पठेत्।

ॐ विश्वरूपस्य भार्य्याऽसि पद्मे पद्मालये शुभे।
महालक्ष्मि नमस्तुभ्यं सुखरात्रिं कुरुष्व मे॥
या रात्रिः सर्व्वभूतानां या च देवैरभिष्टुता।
संवत्सरप्रिया या च सा ममास्तु सुमङ्गला॥

ततः प्रणमेत्।

माता त्वं सर्व्वभूतानां देवानां सृष्टिसम्भवा।
आख्याता भूतले देवि सुखरात्रि नमोऽस्तु ते॥

ततः कुवेरमावाह्य पाद्यादिभिरुपचारैः सम्पूज्य पुष्पाञ्जलिं दद्यात्।

धनदाय नमस्तुभ्यं निधीनामधिपाय च।
भवन्तु त्वत्प्रसादेन धनधान्यादिसम्पदः॥

ततो दक्षिणां दत्त्वाऽच्छिद्रं कृत्वा ब्राह्मणान् भोजयित्वा सुवेशो बान्धवैः सह भुञ्जीत। ततः प्रत्यूषे सर्व्वतः प्रदीपान् प्रज्वाल्य कृष्णामलक्ष्मीप्रतिकृतिं सम्पूज्य गृहाद्वहिः कुर्व्वीत। तन्मन्त्रमाह,—

ॐ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्।
अभूतिमसमृद्धिञ्च सर्व्वान् निर्णुद मे गृहात्॥

ततः पुष्पाञ्जलिना लक्ष्मीं पूजयेत्।

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्व्वभूतानां तामिहोपह्वये श्रियम्॥

ततः कृताञ्जलिः पठेत्॥

ॐ विश्वरूपस्य भार्य्यासि पद्मे पद्मालये शुभे।
महालक्ष्मि नमस्तुभ्यं सुखरात्रिं कुरुष्व मे॥
वर्षाकाले महाघोरे यन्मया दुष्कृतं कृतम्।
सुखरात्रिप्रभातेऽद्य तन्मे लक्ष्मीर्व्यपोहतु॥
या रात्रिः सर्व्वभूतानां या च देवैरभिष्टुता।
संवत्सरप्रिया या च सा ममास्तु सुमङ्गला।

ततः सर्व्वानेव बन्धून् मधुरवाचा आमन्त्य गोरोचनादिद्रव्यमङ्गेषु सर्व्वेषां दद्यात्॥

## अथ द्यूतप्रतिपत्।

भविष्ये,—

शङ्करस्तु पुरा द्यूतं ससर्ज्ज सुमनोहरम्।
कार्त्तिके शुक्लपक्षे तु प्रथमेऽहनि भूपते॥
जितश्च शङ्करस्तत्र जयं लेभे च पार्व्वती।
अतोऽर्थं शङ्करो दुःखी देवी नित्यं सुखोषिता॥
तस्माद्द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः।
तत्र द्यूते जयो यस्य तस्य संवत्सरं जयः॥

पराजयो विरुद्धस्तु लक्षनाशकरो भवेत्।
श्रोतव्यं गीतवाद्यादि गन्धमिश्रैः स्वलङ्कृतैः॥
विशेषतस्तु भोक्तव्यं प्रशस्तैर्बान्धवैः सह।
तस्यां निशायां कर्त्तव्यं शय्यास्थानं सुशोभनम्॥
दीपमालापरिच्छिन्नं धूपेन च सुधूपितम्।
दयिताभिश्च सहितैर्नेया वेश्मसु सा निशा॥
यदस्यां दीयते दानं स्वल्पं वा यदि वा बहु।
तदक्षयं भवेत् सर्व्वं विष्णोः प्रीतिकरं परम्॥
यो यो यादृशभावेन तिष्ठत्यस्यां युधिष्ठिर।
तस्य तादृशभावेन संवत्सरः प्रयाति हि।
बलेर्दैत्यपतेस्तत्र पूजा कार्य्या विशेषतः॥

## अथ भ्रातृद्वितीया।

ज्योतिषे,—

कार्त्तिके तु द्वितीयायां कर्त्तव्यं भ्रातृभोजनम्।
या न कुर्य्याद्विनश्यन्ति तस्यास्ते सप्तजन्मगाः॥

ते भ्रातरः।

भविष्ये,—

कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर।
यमो यमुनया पूर्व्वं भोजितः स्वगृहे सुखम्॥
अतो यमद्वितीयेति ख्याता लोके युधिष्ठिर।
तस्यां निजगृहे पार्थ न भोक्तव्यमतो बुधैः॥
यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम्।

दानानि च प्रदेयानि भगिनीभ्यो विशेषतः ॥
सर्व्वा भगिन्यः सम्पूज्यास्तदभावे प्रपन्नकाः ।
यमञ्च यमुनाञ्चैव चित्रगुप्तञ्च पूजयेत् ।
अर्घ्यश्चात्र प्रदातव्यो यमाय सहजद्वयैः ॥

प्रपन्नका भागिनेयाः सहजद्वयैर्भ्रातृभिर्भगिनीभिश्चेत्यर्थः ।

अथ विधिः,—

प्रातर्भगिनी भ्रातरं निमन्त्र्य मध्याह्ने सुगन्धितैलोद्वर्त्तनादिना स्नापयित्वा तेन सह यमं यमुनाञ्च अर्घ्यादिभिः सम्पूज्य पुष्पाञ्जलिं दद्यात् ।

ॐ धर्म्मराज नमस्तेऽस्तु नमस्ते यमुनाग्रज ।
पाहि मां किङ्करैः सार्द्धं सूर्य्यपुत्र नमोऽस्तु ते ॥
ॐ यमस्वसर्नमस्तेऽस्तु यमुने लोकपूजिते ।
वरदा भव मे नित्यं सूर्य्यपुत्रि नमोऽस्तु ते ॥

इति सम्पूज्य भ्रातुरन्नं दद्यात् तत्र मन्त्रः,—

भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् ।
प्रीतये यमराजस्य यमुनाया विशेषतः ॥

ज्येष्ठा तु,— भ्रातस्तवाग्रजाताहमिति पठेत् ।

ततो भुक्तवन्तं भ्रातरं गन्धादिभिरलङ्कृत्य स्वयमपि भुञ्जीत । तद्दिने पुनर्भोजनं न कार्य्यम् ।

अतःपरं शुक्लाष्टमी गोष्ठाष्टमी ।

भविष्ये,—

गोष्ठाष्टम्यां गवां पूजां गोग्रासं गोप्रदक्षिणम् ।

गवानुगमनं कुर्य्यात् सर्व्वपापैर्विमोचनम् ॥
तथा कार्त्तिकशुक्लपक्षस्य युगाद्या नवमी स्मृता ।
पूर्व्वाह्णसमये कार्य्या पिण्डनिर्वापणादृते ॥

तथा,—

कार्त्तिकामलपक्षस्य नवम्यां भूतिसिद्धये ।
प्रबुद्धान्तु जगद्धात्रीं पूजयेद्दीपमालया ॥

जगद्धात्रीं दुर्गाम् ॥

## अथ वकपञ्चकम् ।

ब्रह्मपुराणे,—

एकादश्यादिषु तथा तासु पञ्चसु रात्रिषु ।
दिने दिने च स्नातव्यं शीतलासु नदीषु च ॥
वर्ज्जितव्या तथा हिंसा मांसभक्षणमेव च ।

पठन्ति च,—

एकादशीं समारभ्य यावत् पञ्चदशी भवेत् ।
वकोऽपि तत्र नाश्नीयान्मीनं मांसञ्च किं नरः ॥

## श्रीहरेरुत्थानम् ।

एकादश्यामुपोष्य द्वादश्यां प्रातःस्नात्वा हरिं पूर्व्वोक्तविधिना-भ्यर्च्च्य दिवा बोधयेत् । रेवत्यन्तपादयोगे तु फलातिशयः न त्वेकादश्यां रात्रौ रेवत्यन्तपादयोगादिति प्रागेव हरिशयने विवृत-मस्ति ।

भविष्यपुराणेऽपि,—

निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।

अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत् ॥

तथा मन्त्रलिङ्गादपि यथा वाराहे,—

कौमुदस्य तु मासस्य या सिता द्वादशी भवेत् ।
अर्च्चयेद्यस्तु मां तत्र तस्य पुण्यफलं शृणु ॥
यावल्लोका हि वर्त्तन्ते यावत्त्वञ्चैव माधवि ।
मद्भक्तो जायते तावदन्यभक्तो न जायते ॥
कृत्वा वै मम कर्म्माणि द्वादश्यां मत्परो नरः ।
ममैव बोधनार्थाय इमं मन्त्रमुदीरयेत् ॥

ॐ ब्रह्मेन्द्ररुद्रैरभिष्टूयमानो
भवानृषिर्वन्दितवन्दनीयः ।
प्राप्ता तवेयं किल कौमुदाख्या
जागृष्व जागृष्व च लोकनाथ ॥
मेघा गता निर्म्मलपूर्णचन्द्रः
शारद्यपुष्पाणि मनोरमाणि ।
अहं ददानीति च धर्म्महेतो-
र्जागृष्व जागृष्व च लोकनाथ ॥

उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ।
त्वया चोत्तिष्ठमानेन चोत्थितं भुवनत्रयम् ॥
एवं कर्म्माणि कुर्व्वन्ति द्वादश्यां ये यशस्विनि ।
मम भक्ता नरश्रेष्ठास्ते यान्ति परमां गतिम् ॥

योऽर्च्चयेत् स मद्भक्त एव स्यादित्यर्थः । माधवीति पृथिवीसम्बो-
धनं मम कर्म्माणि पूजादीनि कृत्वेत्यर्थः ।

## अथ कार्त्तिकी ।

वाराहे,—

न ग्टहे कार्त्तिकं कुर्य्याद्विशेषेण तु कार्त्तिकीम् ।

तीर्थे तु कार्त्तिकीं कुर्य्यात् सर्व्वयत्नेन भाविनि ॥

ब्रह्मपुराणे,—

कार्त्तिके पौर्णमास्यान्तु सोपवासोऽर्चयेद्धरिम् ।

अग्निष्टोमफलं विन्देत् सूर्य्यलोकञ्च गच्छति ॥

पौर्णमास्यान्तु सम्पूज्यो भक्त्या दामोदरः सदा ।

तस्मिन्नहनि यत्नेन कर्त्तव्यं नक्तभोजनम् ॥

आग्नेयन्तु यदा ऋक्षं कार्त्तिक्यां भवति क्वचित् ।

महती सा तिथिः प्रोक्ता स्नानदानेषु चोत्तमा ॥

यदा याम्यं हि भवति ऋक्षं तस्यां तिथौ क्वचित् ।

तिथिः सापि महापुण्या मुनिभिः परिकीर्त्तिता ॥

प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।

सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ॥

आग्नेयं कृत्तिका, याम्यं भरणी, प्राजापत्यं रोहिणी ।

पुण्या महाकार्त्तिकी स्याज्जीवेन्द्वोः कृत्तिकास्थयोः ॥

यमः,—

कार्त्तिक्यां पुष्करे स्नातः सर्व्वपापैः प्रमुच्यते ।

मत्स्यपुराणे,—

कार्त्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत् ।

शैवं पदमवाप्नोति वृषव्रतमिदं स्मृतम् ॥

## अथ मार्गशीर्षकृत्यम् ।

मार्गशीर्षन्तु यो मासमेकभक्तेन वै क्षिपेत् ।
भोजयेत द्विजान् भक्त्या स मुच्येताथ किल्बिषैः ॥

विष्णुधर्म्मे,—

लवणं मार्गशीर्षे तु दत्वा सौभाग्यमाप्नुयात् ।

भविष्ये,—

रोहिणी प्रतिपद्युक्ता मार्गे माघि सितेतरा ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ।

इयञ्च कार्त्तिकानन्तरिता कृष्णप्रतिपत् तत्रैव रोहिणीसम्भवात् । तत्परद्वितीयायामनध्यायः ।

राजमार्त्तण्डे,—

या काचित् प्रतिपद्दिष्टा प्रेतपक्षे च या गते ।
या च कोजागरे याते चैत्रावल्याः परे च या ॥
चातुर्मास्यसमाप्तौ च द्वितीया या भवेत्तया ।
सर्व्वास्ताश्चानध्यायः पुराणैः परिकीर्त्तितः ॥

प्रेतपक्षोऽश्वयुक्कृष्णपक्षः चैत्रावलिः चैत्रशुक्लचयोदशी तत्परतो या द्वितीयेत्यर्थः। अत्र शुक्लतृतीयायां रम्भातृतीयाव्रतं संवत्सरव्रतमासं बहुप्रक्रियमित्युपेक्षितम् ।

भविष्ये,—

येयं मार्गशिरे माघि षष्ठी भरतसत्तम ।
पुण्या पापहरा धन्या शिवा शान्ता गुहप्रिया ॥

स्नानदानादिकं कर्म तस्यामक्षयमुच्यते ।

षष्ठीयं शुक्ला प्रकरणात् ॥

तथा तत्रैव,—

अदितेः कश्यपाज्जज्ञे मित्रो नाम दिवाकरः ।

मार्गशीर्षस्य मासस्य शुक्लपक्षे शुभे तिथौ ॥

सप्तम्यां तेन सा ख्याता लोकेऽस्मिन् मित्रसप्तमी ।

तत्रोपवासः कर्त्तव्यो भक्ष्याण्यथ फलानि वा ॥

तथा,—

मार्गशीर्षे सिते पक्षे द्वादश्यां नियतः शुचिः ।

कृतोपवासो गोविन्दमभ्यर्च्येऽन्द्रपुरे वसेत् ॥

तथा,—

वृश्चिके शुक्लपक्षस्य या पाषाणचतुर्द्दशी ।

तस्यामाराधयेद्गौरीं नक्तं पाषाणभोजनैः ॥

पाषाणाकारपिष्टकभोजनैरित्यर्थः ।

तथा,—

वृश्चिकस्थे सहस्रांशौ पिष्टकैर्विविधैर्व्रती ।

पौर्णमास्यां प्रदोषे तु शालिखेन्यं समर्चयेत् ॥

शालिखेन्ये लक्ष्मीमर्च्चयेदित्यर्थः ॥

## अथ नवान्नश्राद्धम् ।

ज्योतिषे वराहसंहितायाम्,—

वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः ।

अपरे क्रियमाणं हि धनुष्येव कृतं भवेत् ॥
यत्कृतं धनुषि श्राद्धं मृगनेयासु रात्रिषु।
पितरस्तन्न गृह्णन्ति नवान्नामिषकाङ्क्षिणः ॥

वृश्चिक इत्यनेन सौरकृत्यमिदं, शुक्ल इत्यनेन वृश्चिकस्य मुख्यकालता दर्शिता नवान्नं नवान्नश्राद्धमित्यर्थः, अपरे कृष्णपक्षे।

अत केचित् शुक्लपक्षालाभे कृष्णपञ्चमीपर्य्यन्तमपि कर्त्तव्यं पूर्णचन्द्रादित्याहुः।

मुख्यकालालाभे कालान्तरविधौ धनुषोऽपि प्रसक्तौ निषेधमाह यत्कृतमिति। मृगनेयास्विति मृगो मृगशीर्षानक्षत्रं नेता नायको यासां रात्रीणां राजादित्वादत्प्रत्ययः, मृगनक्षत्रं सायंसन्ध्यायामुदयनात् प्रातरस्तगमनाच्च यासां रात्रीणां समापकमित्यर्थः। तास्र वृश्चिकस्य सपादत्रयोविंशद्दिनादूर्द्ध्वं भवन्ति।

यथा ज्योतिषे,—

दिनत्रयाधिके विंशे रात्रेर्मार्गस्य वै गते।
मृगनेत्रा रात्रयः स्युर्नवान्नं तत्र वर्ज्जयेत् ॥

तथा,— मृगनेत्रा भवेद्वृश्चे: पादोनैः सप्तभिर्दिनैः।

अत रात्रिपदं रात्र्युपलक्षितदिवापरं रात्रौ श्राद्धनिषेधात्। शरत्कृतव्रीहिपाकश्राद्धेन तु व्रीहिपाके नवान्नागमननिमित्तं श्राद्धमहं करिष्ये इति संकल्प्य तन्त्रेणैकमेव श्राद्धं कार्य्यमिति।

अत्राधुनिकाः,—

हैमन्तिकधान्यपाके नवान्नागमननिमित्तं पृथक्श्राद्धं नास्ति किन्तु व्रीहिपाकनिमित्तकस्यैव श्राद्धस्य व्रीह्यलाभादिना स्वकाले-

ऽकरणे आनुकल्पिको हैमन्तिकः कालो धान्यान्तरेणानुष्ठीयमानश्च विधीयते। अन्यथा मूलभूतश्रुतिद्वयकल्पनागौरवं स्यादित्याहुः।

तन्मन्दम्। हेमन्ते नवान्नं गृह्यते इति विरोधात् अनुकल्पितस्य[1] प्रशस्तत्वासम्भवात्। वराहसंहितायाम्,— व्रीहिपाकनिमित्तकश्राद्धस्यानुक्तत्वेन तदनुकल्पिककालकल्पनाया अन्याय्यत्वाच्च व्रीहिश्राद्धमनूद्य कालद्रव्योभयविधौ वाक्यभेदापत्तेश्च।

किञ्च,—

अष्टकासु च कर्त्तव्यं श्राद्धं हैमन्तिकीषु च।
अन्वष्टकासु क्रमशो मातृपूर्व्वं तदिष्यते॥
ग्रहणे च व्यतीपाते शालिधान्यसमागमे।
जन्मर्क्षग्रहपीडायां श्राद्धं पार्व्वणमुच्यते॥

इति ब्रह्मपुराणे शालिपदवाच्यस्य हैमन्तिकधान्यस्य समागमनिमित्तं स्नातव्येण श्राद्धं विहितमिति॥

श्राद्धचिन्तामणावपि,—

अक्षतायवणञ्चैव धान्यजातं नरेश्वर।
राजमाषानणूंश्चैव मसूरांश्च विवर्ज्जयेत्॥

इति विष्णुपुराणे अक्षतायवणं अक्षतप्रथमागमश्राद्धं धान्यजातं शरत्पक्वहैमन्तिकादिधान्यसमूहं वर्ज्जयेदित्यभिधानात्। अन्यथा जातपदवैयर्थ्यात्, हैमन्तिकसंस्कारार्थमपि पृथगेव श्राद्धमावश्यकमित्युक्तम्।

---

१ ग, अनुकल्पे तस्य।

तथा श्राद्धविवेकेऽपि,—

नवान्नागमनिमित्तमपि नित्यमिति वक्ष्यते इत्यनेन पृथक्-श्राद्धमित्युक्तम्।

तस्मात् सर्व्वशिष्टैरङ्गीकृतं सर्व्वदेशेषु पारम्पर्य्यक्रमागतमाचारमुन्मूलयितुमिच्छतामाधुनिकानां वचसि नादरः कार्य्यः॥

इदञ्च नन्दादौ न कार्य्यं तथा ज्योतिषे,—

नवान्नं नैव नन्दायां न च सुप्ते जनार्द्दने।
न कृष्णपक्षे धनुषि तुलायां न कदाचन॥

तथा संवत्सरप्रदीपे,—

कृष्णपक्षे भृगुदिने विशाखास्थे विवस्वति।
ततो विंशांशकात्तोर्द्धं नवान्नं परिवर्ज्जयेत्॥

विशाखास्थस्थादित्यः सपाददिनचयं यावत्।

तथा,—

नन्दायां भार्गवदिने चतुर्द्दश्यां त्रिजन्मनि।
अन्न श्राद्धं न कुर्व्वीत पुत्रदारधनक्षयात्॥

त्रिजन्मनि तिसृषु जन्मताराखित्यर्थः।

शुद्धिदीपिकायाम्,—

भेषूग्राहिशिवान्येषु विभौमशनिवासरे।
अन्नप्राशनवत् कुर्य्यात् नवान्नफलभक्षणम्॥

पूर्व्वाचयं मघा भरणी चोग्रगणः, अहिरश्लेषा शिव आर्द्रा एतदन्येषु नक्षत्रेषु, मङ्गलशनिवर्ज्जितेषु वारेष्वित्यर्थः।

तथा,— भरण्यश्लेषकार्द्रासु मघापूर्व्वात्रयेषु च।

भृगुभौमदिने रिक्तातिथौ नाद्यान्नवौदनम्।

श्राद्धचिन्तामणौ तु,—

पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुधः।

भवेज्जन्मान्तरे रोगी पितृणां नोपतिष्ठते॥

इति नामशून्यवचनाच्चैत्रमासो निषिद्ध इत्युक्तम्।

एतच्च श्राद्धमावश्यकम्,—

नवोदके नवान्ने च गृहप्रच्छादने तथा।

पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च॥

तस्माद्दद्यात् सदायुक्तो विद्वत्सु ब्राह्मणेषु च।

इति शातातपवचने सदायुक्त इत्यभिधानात्।

अत्र,—

नवान्नालभने देवौ कालकामौ सदैव हि।

इति ब्रह्मपुराणादिवचनात् कालकामावत्र विश्वेदेवा इति श्राद्धकौमुद्यां विवृतमस्ति।

नवान्नप्राशनन्तु सदधि कार्य्यम्।

यथा ब्रह्मपुराणे,—

प्राश्नीयाद्दधिसंयुक्तं नवं मन्त्राभिमन्त्रितम्।

कृताचारस्तु कुर्व्वीत गीतवाद्यैर्महोत्सवम्॥

## अथ पौषकृत्यम्।

पौषे मासि तु यो दद्यात् घृतं विप्राय पार्थिव।

समभ्यर्च्याच्युतं सोऽपि सर्व्वान् कामानवाप्नुयात्॥

तथा,—

पौषे कनकदानेन परां तुष्टिमवाप्नुयात् ।
पुष्यायां सितपक्षे तु दानं लक्ष्मीकरं स्मृतम् ॥

विष्णुधर्मे,—

आग्रहायण्यामतीतायां कृष्णास्तिस्रोऽष्टकास्तथा ।
आसु श्राद्धं द्विजः कुर्य्यात् सर्व्वस्तेनापि नित्यशः ॥

आग्रहायण्याः परं कृष्णाष्टम्यौ पौषमाघफाल्गुनीयं तत्र क्रमेण पूपमांसशाकैः श्राद्धं कुर्य्यात् ।

यथा कात्यायनः,—

आग्रहायण्या ऊर्द्ध्वं तिस्रोऽष्टकास्तिस्रोऽन्वष्टकास्तासु क्रमेण पूपमांसशाकैस्त्रिकीर्वित् । अष्टका अष्टम्यस्ततः परं तिस्रोऽन्वष्टका नवम्य इत्यर्थः । अष्टका अनु पश्चाद्या तिथिर्नवमीत्यर्थः तिथिप्रकरणात् अतएव तिस्र इति स्त्रीलिङ्गनिर्द्देशः । अन्यथा परदिनमात्रपरले-ऽन्वष्टकमिति स्यात् ।

तथाच विष्णुः,—

अन्वष्टका अष्टकावद्[१] माघे पितामह्यै देवपूर्व्वान् ब्राह्मणान् भोजयेदिति ।

तथा वायुपुराणे,—

अन्वष्टका पितॄणान्तु नित्यमेव विधीयते ।

यत्तु श्वोऽन्वष्टक्यमिति गोतमवचनम् । तत्र प्रायेण परदिने नवमीसम्बन्धात् श्व इति मन्तव्यम् । अतएव गोभिले "श्वोऽन्वष्टक्यं

१ ग, अष्टकावत् कृत्वा ।

परस्मो वा इत्युक्तं" कदाचिदपराह्ने विहितश्राद्धकाश्राद्धस्य हतीय-दिने पूर्व्वाह्ने विहितकाले नवमीश्राभादिति संक्षेपः। विस्तारस्तु श्राद्धकौमुद्यां द्रष्टव्यः।

राजमार्त्तण्डे,—

पौषादिषु च मासेषु कृष्णे चैवाष्टकात्रयम्।
एकाश्विने समुद्दिष्टा सप्तम्यादितिथित्रये॥
माघीयोताश्च शास्त्राणि वर्ज्जयेद्व्रतबन्धनम्।

भविष्योत्तरे,—

पौषे मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत्।
तदा सा तु महापुण्या महाभावेति कीर्त्तिता॥
तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम्।
मत्प्रीतये कृतं देवि शतसाहस्रिकं भवेत्॥

बुधो बुधवारः।

तथा,— पौषे तु पुष्यानक्षत्रे पिष्टकैर्विविधैः पितॄन्।
अर्च्चयेत्तु तथा देवान् द्विजानात्मानमेव च॥

तथा तत्रैव,—

गौरसर्षपकल्केन समभ्यर्च्य स्वकां तनुम्।
कृतस्नानैः ततः कार्य्यमन्तःप्रीनाशनं परम्॥
ततो नारायणः शक्रश्चन्द्रः शुक्रबृहस्पती।
सम्पूज्याः पुष्पधूपाद्यैर्नैवेद्यैश्च पृथक् पृथक्॥

विष्णुः,—

पौषी चेत् पुष्यायुक्ता तस्यां गौरसर्षपकल्केनोत्सादितशरीरो

गव्यघृतादिभिः पूर्णकुम्भेनाभिषिक्तः सर्व्वौषधिभिः सर्व्वगन्धैः सर्व्व-बीजैर्भगवन्तं वासुदेवं स्नपयित्वा पुष्पगन्धधूपदीपनैवेद्यादिभिरभ्यर्च्य वैष्णवसूक्तैर्वार्हस्पत्यमन्त्रैश्च पावकं हुत्वा सुवर्णेन ब्राह्मणं स्वस्ति वाचयेत् अनेन कर्म्मणा मुच्यते ॥ उत्सादं उद्वर्त्तनं । मुच्यते पापेभ्य इति शेषः ।

तथा स्कान्दे,—

पौष्यां पुष्यर्क्षयुक्तायामभिषिच्य जनार्द्दनम् ।
अभ्यर्च्य च नरो भक्त्या सर्व्वपापैः प्रमुच्यते ॥

## अथ माघकृत्यम् ।

अथोत्तरायणसंक्रान्तावारभ्य वर्षैकं प्रतिसंक्रान्तौ दधिसंक्रान्ति-व्रतं कर्त्तव्यम् । तद्विधिश्च प्रागेव संक्रान्तिप्रकरणे लिखितोऽस्ति ।

भविष्ये,—

तुलामकरमेषेषु प्रातःस्नानं विशेषतः ।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम् ॥

प्रातःस्नानकालस्तु अरुणोदयकालात् प्रभृति सम्यक्सूर्य्योदय-कालपर्य्यन्तम् ।

उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ ।
प्राजापत्येन तुल्यं स्यात् सर्व्वपापैः प्रमुच्यते ।

विष्णुः,—

प्रातःस्नाय्यरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात् ।

भविष्ये,—

माघे मासि रटन्त्यापः किञ्चिदभ्युदिते रवौ ।

ब्रह्मघ्नं वा सुरापं वा कम्पतन्तं पुनीमहे ॥

कं जलम्।

पद्मपुराणे,—

मकरस्थे रवौ माघे प्रातःकाले तथामले।
गोष्पदेऽपि जले स्नानं स्वर्गदं पापिनामपि ॥
मकरस्थे रवौ यो हि न स्नात्यनुदिते रवौ।
कथं पापात् प्रमुच्येत कथं स त्रिदिवं व्रजेत् ॥

एषु वचनेषु राश्युल्लेखेन विधानात् सौरकृत्यमिदं न तु चान्द्रकृत्यं, वैशाखप्रातःस्नानवत् एकवचनोपात्तत्वात्। अन्यथा पद्म-पुराणे माघपदस्य मुख्यत्वानुरोधाचान्द्रपरत्वे मकरस्थे रवाविति प्रमत्तगीतं स्यात्।

न च मकरसम्बन्धे फलातिशय इति वाच्यं, वाक्यभेदात् श्रुत्यन्तरकल्पनाच्च अन्यथोपपत्तेश्च।

अस्मन्मते तु मकरविशेषणम् माघपदस्य सौरपरत्वपरिचायकं माघपदन्तु सङ्कल्पवाक्ये तदुल्लेखार्थम्।

एवञ्च,—

यो माघमास्युषसि सूर्य्यकराभितापे
स्नानं समाचरति चारुनदीप्रवाहे।
उद्धृत्य सप्तपुरुषान् पितृमातृवंश्यान्
स्वर्गं प्रयात्यमरदेहधरो नरोऽसौ ॥

इत्यादिवचने यन्माघपदं तदपि सौरकृत्यं मन्तव्यं। मन्त्रलिङ्गे-नापि सौरमाघ एव स्नानम्।

यथा पद्मपुराणे,—

माघमासमिमं पुण्यं स्नास्येऽहं देव माधव ।
तीर्थस्यास्य जले नित्यं प्रसीद भगवन् हरे ॥
मकरस्थे रवौ माघे गोविन्दाच्युत माधव ।
स्नानेनानेन मे देव यथोक्तफलदो भव ॥
इमं मन्त्रं समुच्चार्य्य स्नायान्मौनं समाश्रितः ।
वासुदेवं हरिं कृष्णं माधवञ्च स्मरेत्ततः ॥

मन्त्रद्वयं पठित्वा वासुदेवादिनामचतुष्टयं कीर्त्तयेदित्यर्थः। ततः सूर्य्याभिमुखः पठेत्,—

दिवाकर जगन्नाथ प्रभाकर नमोऽस्तु ते ।
परिपूर्णं कुरुष्वेदं माघस्नानं महाव्रतम् ॥

यत्तु पौर्णमास्याममावास्यामारभ्य स्नानमाचरेदिति भविष्यवचनं समयप्रकाशे लिखितमित्याधुनिकेन चान्द्रमासे प्रमाणमुपन्यस्तं, तन्मन्दं न तु चान्द्रो माघः पौर्णमास्यादिरमावस्यादिर्वा तस्य प्रतिपदादित्वात्। न वा समयप्रकाशे माघस्नानपरतया वचनं लिखितं किञ्च माघस्नानस्य तिथिद्वयादित्वे श्रुतिद्वयकल्पनापत्तिः स्यात्।

वस्तुतस्तु भविष्यपुराणवचनं नारदीयपुराणादिवचनैकवाक्यतया चातुर्मास्यव्रतविषयम्।

तथा नारदीये,—

एकादश्यां तु गृह्णीयात् संक्रान्तौ कर्कटस्य वा ।
आषाढ्यां वाथ दर्शे वा चातुर्मास्यीं व्रतक्रियाम् ॥

तथा मात्स्ये,— आषाढ्यादिचतुर्मासं प्रातःस्नायी भवेन्नरः ।

महार्णवेऽपि चातुर्मास्यव्रतप्रकरणे,—

पौर्णमास्याममावस्यामारभ्य व्रतमाचरेत् ।

चतुरो वार्षिकान् मासानथवा शयनं हरेः ॥

इति शेषार्द्धं लिखितं । ततः पौरमाघ एव प्रातःस्नानं सर्व्व-देशाचारोऽप्ययमेव ।

गारुड़े,—

तप्तेन वारिणा स्नानं यद्गृहे क्रियते नरैः ।

षड़ब्दफलदं तद्धि मकरस्थे दिवाकरे ॥

पाद्मे,—

मकरस्थे रवौ माघे प्रातःकाले तथाऽमले ।

गोष्पदेऽपि जले स्नानं स्वर्गदं पापिनामपि ॥

वचनमिदं पुष्करिण्यादिसामान्यजलविषयम् । तथा माघ मासि रटन्त्याप इति प्रागुक्तम् ।

तथा स्कान्दे,—

ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः ।

माघस्नायी विपापी स्यात् तत्संसर्गी च पञ्चमः ॥

यो माघमास्युषसीति प्रागुक्तवचनं नदीविषयम् ।

गङ्गायां माघस्नानफलमाह गारुड़े,—

गङ्गायां येऽवगाहन्ति माघे मासि नराधिप ।

चतुर्युगसहस्रान्ते न पतन्ति सुरालयात् ॥

दिने दिने सहस्रन्तु सुवर्णानां विशाम्पते ।

तेन दत्तं हि गङ्गायां यो माघे स्नाति मानवः ॥

अनडुाहसहस्राणि कपिलायुतमेव च।
तेन दत्तं हि गङ्गायां यो माघे स्नाति मानवः॥

माघे प्रयागस्नानफलमाह मात्स्ये,—

षड्भिस्तीर्थसहस्राणि षष्टिस्तीर्थशतानि च।
माघे मासि समायान्ति गङ्गायमुनसङ्गमे॥
गवां शतसहस्रस्य सम्यक् दत्तस्य यत्फलम्।
प्रयागे माघमासस्य त्र्यहस्नानेन तत्फलम्॥
संवत्सरशतं साग्रं निराहारस्य यत्फलम्।
प्रयागे माघमासस्य त्र्यहस्नानेन तत्फलम्॥

समस्तमाघस्नाने मोक्षफलमाह पाद्मे,—

दुर्वारा वैष्णवी माया देवैरपि सुदुस्त्यजा।
प्रयागे दह्यते सा तु माघे मासि च मज्जनात्॥
तेजोमयेषु लोकेषु भुक्त्वा भोगाननेकशः।
पश्चाच्चक्रिणि लीयन्ते प्रयागे माघमज्जनात्॥

चक्रिणि नारायणे।

प्रत्यहस्नानफलमाह तत्रैव,—

स्वर्णभारसहस्रेण कुरुक्षेत्रे रविग्रहे।
यत्फलं लभते तत्तु वेण्यां माघे दिने दिने॥

वेणी प्रयागः॥

माघाधिकारे गारुडे,—

मातरं पितरञ्चापि भ्रातरं सुहृदं गुरुम्।
यमुद्दिश्य निमज्जेत द्वादशांशं लभेत सः॥

यत्र माघस्नाने यत्फलं विहितं तस्य द्वादशांशफलमित्यर्थः।

मात्स्ये,—

अनाहृतशरीरस्तु यः कश्चं स्नानमाचरेत्।
पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः॥
तैलमामलकञ्चैव तीर्थे देयन्तु नित्यशः।

कल्पसुचः। माघस्नानमिदं काम्यं तच्च प्रसङ्गान्नित्यमपि गतार्थम्। न च नित्यस्नाने माघो गुण इति वाच्यं, प्रकरणभेदात् स्नानत्रैविध्ये श्रवणाच्च।

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते।

इति जावालवचने स्नानस्य त्रिविधत्वानुपपत्तेश्च।

शुक्रास्तादिषु गङ्गायां माघे प्रातःस्नानं न कार्य्यं सर्व्वकाम्य-कर्म्मणां निषेधादिति केचित्। तन्मन्दम्।

अनादिदेवतां दृष्ट्वा गुरुः स्वर्नष्टभार्गवे।
मलिम्लुचेऽप्यनाहूतं तीर्थस्नानमपि त्यजेत्॥

इति राजमार्त्तण्डे आहूतस्य तीर्थस्नानस्य प्रतिप्रसवात् गन्धादि-स्नानवत् अन्यथा गङ्गास्नानमपि निषिध्येत काम्यत्वात्। माघस्नान-सङ्कल्पस्तु माघप्रथमाहे कार्य्यः।

विष्णुः,—

य इच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान्।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ॥

चन्द्रसूर्य्यग्रहोपमान् चन्द्रसूर्य्यग्रहस्नानफलसमानित्यर्थः। अयञ्च माघस्नानात् कर्म्मान्तरविधिः फलभेदात् कालभेदाच्च॥

यमः,—

प्रातःस्नायी च सततं द्वौ मासौ माघफाल्गुनौ।
देवान् पितॄंश्च सन्तर्प्य सर्व्वपापैः प्रमुच्यते॥

भविष्ये,—

शीतकालेऽग्नं दद्यान्नराणां शीतनाशनम्।
भानोरुदयकाले च सोऽश्वमेधफलं लभेत्॥

नारसिंहे,—

शीतकाले महावह्निं प्रज्वालयति यो नरः।
सर्व्वलोकहितार्थाय स्वर्गे सोऽप्सरसां लभेत्॥

मात्स्ये,—

माघे मास्युपसि स्नानं कृत्वा दाम्पत्यमर्चयेत्।
भोजयित्वा यथाशक्त्या माल्यैर्वस्त्रविभूषणैः॥
सूर्य्यलोके वसेत्कल्पं सूर्य्यव्रतमिदं स्मृतम्।

महाभारते,—

माघे मासि तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति।
सर्व्वसत्त्वसमाकीर्णं नरकं स न पश्यति॥

माघे कृष्णाष्टमी मांसाष्टका नवमी चान्वष्टका इति प्रागुक्तम्।

यमः,—

माघान्धकारद्वादश्यां तिलैर्हुत्वा हुताशनम्।
प्रदद्यात् ब्राह्मणेभ्यश्च तिलानेव समाहितः॥
जन्मप्रभृति यत्पापं सर्व्वं तरति तद्द्विजः।

अथ चैवर्णिकोऽधिकारी द्विजपदात् होमाधिकाराच्च।

यमः,—

माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्द्दशी ।
तस्यामुदयवेलायां स्नाता नावेक्षते यमम् ॥

स्नाता स्नानकर्त्ता ।

तथा,—

अनर्काभ्युदिते काले कृष्णपक्षे चतुर्द्दशीम् ।
स्नातः सन्तर्प्य तु यमान् सर्व्वपापैः प्रमुच्यते ॥

वचनमिदं सकलकृष्णचतुर्द्दशीविषयम् ।

विष्णुः,—

माघे मास्यसिते पक्षे स्नाता राम चतुर्द्दशी ।
कामविद्धापि कर्त्तव्या शिवरात्रिविधानतः ॥

स्मृतिसमुच्चये,—

मकरावस्थिते भानौ या तु कृष्णा चतुर्द्दशी ।
तस्यादौ कालिका पूज्या सर्व्वविघ्नोपशान्तये ॥
तस्यादौ आगरं कृत्वा पूजयित्वा हरिप्रियाम् ।
ईप्सितान् लभते कामान् पुत्रपौत्रधनानि च ॥

हरिप्रिया लक्ष्मीः । तत्परामावास्या युगाद्येति प्रागुक्तम् ।

भविष्ये,—

माघे मासि तृतीयायां गुड़स्य लवणस्य च ।
दानं श्रेयस्करं राजन् स्त्रीणाञ्च पुरुषस्य च ॥

तथा,— माघे शुक्लतृतीयायां कन्या सम्वत्सरार्थिनी ।
प्रातःस्नात्वार्च्चयेद्देवीं पुष्पनैवेद्यचन्दनैः ॥

तथा,—

माघे मासि तथा शुक्ला या चतुर्थी महीपते ।
स्नानदानादिकं कर्म्म सर्व्वमस्यां कृतं विभो ।
भवेत् सहस्रगुणितं नात्र कार्य्या विचारणा ॥

इयमेव शान्ताख्या चतुर्थी प्रागुक्ता ।

तथा,—

माघे शुक्लचतुर्थ्यान्तु वरमाराध्य च श्रियाः ।
पञ्चम्यां कुन्दकुसुमैः पूजा कार्य्या समृद्धये ॥

वरो विनायकः । इदं कर्मद्वयं लोके वरचतुर्थी श्रीपञ्चमीति प्रसिद्धेः निरपेक्षश्रुतेश्च ।

यथा ब्रह्मपुराणे,—

चतुर्थी वरदा शुक्ला तस्यां गौरी सुपूजिता ।
सौभाग्यमतुलं कुर्य्यात् पञ्चम्यां श्रीरपि श्रियम् ॥

सरस्वतीपूजा अनध्यायश्चात्र गौड़ाचारः । अत्र तिथिद्वैधे युग्मादरात् व्यवस्था ।

तथा स्कान्दे,—

कर्त्तव्या पञ्चमीयुक्ता चतुर्थी कामदायिनी ।
पञ्चमी च तथा कार्य्या चतुर्थीसहिता विभो ॥

यत्तु,— पञ्चमी च प्रकर्त्तव्या षष्ठ्यायुक्ता तु नारद ।

इति ब्रह्मवैवर्त्तवचनं तद्भिन्नश्रुतिकल्पनाभियाऽकारप्रश्लेषेण व्याख्येयं मदनपारिजाते तु नागपञ्चमीविषयमिति तिथिविचारे प्रागेवोक्तम् ।

अत्र श्रीपञ्चम्यामारभ्य प्रतिमासं षड़ब्दसमाप्यं श्रीपञ्चमीव्रतं कुर्व्वन्ति। पठन्ति च,—

श्रीपञ्चम्यां समारभ्य प्रतिमासं षड़ब्दकम्।
पूजयेत् सितसप्तम्यां लक्ष्मीं सौभाग्यसम्पदे॥
अब्दद्वयमलवणैः हविष्येण द्वयं तथा।
फलेनैकेन कर्त्तव्यमुपवासे प्रतिष्ठयेत्॥

एतस्य मूलं न दृष्टमित्युपेक्षितम्।

## अथ माघसप्तमी।

भविष्ये,—

सूर्य्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी।
अरुणोदयवेलायां तस्यां स्नानं महाफलम्॥
अरुणोदयवेलायां शुक्ला माघस्य सप्तमी।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा॥
माघे मासि सिते पक्षे सप्तमी कोटिभास्करा।
दद्यात् स्नानार्घ्यदानाभ्यामायुरारोग्यसम्पदः॥

प्रथमवचनं गङ्गेतरविषयं उत्तरवचने यदिकारात्, अतएव फलभेदः। गङ्गेतरस्थले सूर्य्यग्रहणस्नानजन्यफलं गङ्गायां तु शतैरिति बहुवचनाद्बहुशतसूर्य्यग्रहणस्नानजन्यफलं ततश्च परवचने कोटिभास्करेति कोटिशब्दोऽसङ्ख्यपरः असङ्ख्यभास्करग्रहणतुल्येत्यर्थ। यद्वा कोटौ अग्रे भास्करोदयो यस्यां अरुणोदयकालीना सप्तमीत्यर्थः। अत्र सर्व्वत्र माघपदश्रवणाच्चान्द्रमासेनैव व्यवस्था पौर्णमास्यन्तमासेनैव ब्रह्मपुराणादौ तिथिकृत्यस्य निर्णीतत्वात् भविष्ये एत-

दनन्तरं भीष्माष्टम्यभिधानाच्च । यत्तु माकरी हन्तु सप्तमीति मन्त्रे माकरीपदं मकरारब्धचान्द्रमाससम्बन्धादिति ध्येयम् ॥

अतएव पाश्चात्यसङ्गृहे मत्स्यपुराणवचनम्,—

यस्मान्मन्वन्तरादौ च रथमापुर्दिवाकराः ।
माघमासस्य सप्तम्यां सा तस्माद्रथसप्तमी ॥
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ।

मन्वन्तरादयस्तु पौर्णमास्यन्तचान्द्रेणैवेति सर्व्वसम्मतमिति ततश्च कदाचित् फाल्गुनेऽपि भवति ।

अन्ये तु,— मन्वन्तरिक्षाचान्द्रमाघे मकरस्थरवौ या सप्तमी स्यात् सैवारुणोदयसप्तमी न तु कुम्भार्के न वा मकरार्के चान्द्रपौष-सप्तमीत्याहुः ।

अथ तिथिद्वयदिने अरुणोदयकाले सप्तम्यलाभे लोप एव षष्ठि-दण्डात्मिकायान्तु दिनद्वयेऽरुणोदयप्राप्तौ पूर्व्वदिन एव कपालाधि-करणन्यायादेव न तु युग्मादरादिति तिथिविचारे प्रागेवोक्तम् ।

इदं माघस्नाने गुणफलमिति केचित् "तन्न" प्रकरणभेदान्निर-पेक्षश्रुतेश्च अन्यथा कुम्भार्केऽरुणोदयसप्तमी न स्यात् समापितमाघ-स्नानत्वात् अतएवानारब्धमाघस्नानेनापीदं क्रियते इति सदाचारः ।

अथ कृतमाघमासस्नानसङ्कल्पेन तन्मध्ये एकं स्नानं कर्त्तव्यमिति बहवः ।

वस्तुतस्तु फलभेदान्मन्त्रभेदाच्च स्नानद्वयं पृथगेव कर्त्तव्यमिति प्रतीमः । अथ स्नानसङ्कल्पानन्तरम्,—

ॐ यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु ।

तन्मे रोगञ्च शोकञ्च माकरी हन्तु सप्तमी ॥

इति पठित्वा स्नायात्। सप्तसु जन्मसु जन्मावधि कृतं यत् पापमित्यर्थः।

अर्घ्यमन्त्रस्तु,—

जननी सर्व्वभूतानां सप्तमी सप्तसप्तिके।
सप्तव्याहृतिके देवि नमस्ते रविमण्डले ॥
अर्कपत्रसमायुक्तं बदरीफलसंयुतम्।
अरुणोदयवेलायां ददाम्यर्घ्यं प्रसीद मे ॥

अत्राचारात् सप्तभिरर्कपत्रैः सप्तबदरीफलैश्चार्घ्यदानम्। ततः सूर्य्यं प्रणमेत्,—

ॐ सप्तसप्तिवह प्रीत सप्तलोकप्रदीपन।
सप्तम्याञ्च नमस्तुभ्यं नमोऽनन्ताय वेधसे ॥

अचामध्याय:। नरसिंहपुराणे,—

अथाश्वयुक्तृतीयायां शिष्यं नाध्यापयेद्बुधः।
माघमासे तु सप्तम्यां रथ्यायाञ्च विवर्ज्जयेत् ॥

भविष्ये। आदित्य उवाच।

माघमासे तु सप्तम्यां शुक्लायां समुपोषितः।
यः पूजयति मां भक्त्या तस्याहं पुत्रतां व्रजे ॥
एवञ्चोभयसप्तम्यां मासि मासि सुरोत्तम।
यस्तु मां पूजयेद्भक्त्या एकैकमेकमादरात् ॥
प्रयच्छामि सुतं तस्य वित्तमायुर्यशः श्रियम्।

सप्तम्यामुपवासः पूजा चेत्यर्थः। एवं सप्तम्यामुपोष्येत्यर्थः। एकैकः

संवत्सरः। एकं व्रतं माघसप्तमीमात्रे पुत्रमात्रफलम्। द्वितीयन्तु माघशुक्लसप्तम्यामारभ्य पक्षद्वयसप्तम्यां संवत्सरमेकं पुत्रवित्तादिफलम्।

भविष्ये,—

अथापरं महाराज व्रतमारोग्यसंज्ञकम्।
कथयामि परं पुण्यं सर्व्वपापप्रणाशनम्॥
शुक्लायां माघमासस्य सप्तम्यां समुपोषितः।
पूजयेद्भास्करं देवं विष्णुरूपं सनातनम्॥
आदित्य भास्कर रवे भानो सूर्य्य दिवाकर।
प्रभाकरेति सम्पूज्यो देवः सर्व्वेश्वरो रविः॥
षष्ठ्याञ्च संयताहारः सप्तम्यामुपवासकृत्।
अष्टम्याञ्चैव भुञ्जीत एष एव विधिक्रमः॥
अनेन विधिना सर्व्वं वत्सरं योऽर्च्चयेद्रविम्।
तस्यारोग्यं धनं धान्यमिह जन्मनि जायते॥
परत्र च शिवं स्थानं यद्गत्वा न निवर्त्तते।

दशाक्षरजयदुर्गामन्त्रमुद्धृत्य कालिकापुराणे,—

रवौ मकरराशिस्थे या भवेत् सितसप्तमी।
तस्यामनेन मन्त्रेण सम्पूज्य विधिवच्छिवाम्॥
शुक्लाष्टम्यां पुनर्देवीं पूजयित्वा यथाविधि।
नवम्यां बलिदानानि प्रभूतानि समाचरेत्॥
एवं कृते तु कस्मापि मुक्तो नित्यं प्रमोदते।
न तस्य जायते शोको न च मारी प्रजायते।
पुत्रपौत्रसमृद्धिः स्यात् धनधान्यसमृद्धिभिः॥

## अथ भीष्माष्टमी।

भविष्योत्तरे,—

शुक्लाष्टम्यान्तु माघस्य दद्याद्भीष्माय यो जलम्।
संवत्सरकृतं पापं तत्क्षणादेव मुञ्चति॥
माघे मासि सिताष्टम्यां सलिलं भीष्मवर्म्मणे।
श्राद्धञ्च ये तदा कुर्य्युस्ते स्युः सन्ततिभागिनः।

श्राद्धमिदं काम्यं एतच्च त्रैवर्णिकैः कर्त्तव्यम्।

यथा,—

माघे मासि सिते पक्षे अष्टम्यां सुसमाहितः।
भीष्माय च जलं दद्युस्त्रयो वर्णा द्विजातयः॥

अतएव,—

सवर्णेभ्यो जलं देयं नासवर्णे कदाचन।

इति योगियाज्ञवल्क्यनिषेधो भीष्मतर्पणेतरविषयः। अत्र त्रयो वर्णा इत्यभिधानात् शूद्रस्य नाधिकारः।

अन्ये तु,— सर्व्वे वर्णा द्विजातय इति पठित्वा वर्णपदवैयर्थ्य-भिया शूद्रेणापीदं कर्त्तव्यमिति वदन्ति। तन्न द्विजातय इत्यस्य वैयर्थ्यात् वर्णा इति तु असवर्णनिषेधपर्य्युदाससूचनार्थम्।

मन्त्रस्तु,—

भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः।
आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम्॥
वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च।
अपुत्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे॥

भविष्ये,—

माघे मासि तु या शुक्ला नवमी लोकपूजिता ।
महानन्देति सा प्रोक्ता महानन्दकरी नृणाम् ॥
स्नानं दानं जपो होमो देवार्च्चनमुपोषणम् ।
सर्व्वं तदक्षयं प्रोक्तं यदस्यां क्रियते नरैः ॥

## अथ भैमी ।

गरुड़पुराणे,—

माघमासे शुक्लपक्षे मृगर्क्षेण युता पुरा ।
एकादशी तथा चैका भीमेन समुपोषिता ॥

मृगर्क्षं मृगशिरानक्षत्रम् ।

अत्रोपवासं कृत्वा तु पितृणामनृणो भवेत् ।
भीमद्वादशीति ख्याता प्राणिनां पुण्यवर्द्धनी ॥
विनिहन्ति तथा पापं कुनृपो विषयं यथा ।
ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ॥
युगपदुपजातानि न निहन्ति त्रिपुष्करम् ।
यथेयं पापनाशाय प्रोक्ता चैकादशी शुभा ॥
कालिन्दी यमुना गङ्गा नदी रेवा सरस्वती ।
न चैव सर्व्वतीर्थानि एकादश्याः समानि च ॥
न दानं न तपो होमो न चान्यत् सुकृतं क्वचित् ।
एकतः पृथिवीदानमेकतो हरिवासरः ।
ततोऽप्येका महापुण्या इयमेकादशी वरा ॥

तथा,— अस्यां वराहवपुषं कृत्वा देवन्तु हाटकम्।
घटोपरि नवे पात्रे कृत्वा वा ताम्रभाजने॥
सर्व्वबीजभृते विप्राः सितवस्त्रावगुण्ठिते।
विधिवत् पुष्पदीपाद्यैः कृत्वा पूजां प्रयत्नतः॥
वराहाय नमः पादौ क्रोड़ाकृतये नमः कटिम्।
नाभिं गम्भीरघोषाय उरः श्रीवत्सधारिणे॥
बाहूं सहस्रशिरसे ग्रीवां सर्व्वेश्वराय च।
मुखं सर्व्वात्मने पूज्य ललाटं सुप्रभाय च॥
केशाः शतमयूखाय पूज्या देवस्य चक्रिणः।
विधिना पूजयेद्देवं कृत्वा जागरणं निशि॥
प्रातः स्नात्वा च सम्पूज्य ब्राह्मणाय शुभाय तम्।
प्रदद्यात् कनकक्रोड़ं सन्निवेशपरिच्छदम्॥
पश्चात्तु पारणं कुर्य्याज्जातिश्रान्तः सुहृद्वृतः।
एवं कृत्वा नरो विप्रा न भूयः स्तनपो भवेत्॥
उपोष्यैकादशीं पुण्यां मुच्यते वै ऋणत्रयात्।

विप्रा इति सम्बोधनं कनकक्रोड़ं सुवर्णनिर्म्मितवराहमित्यर्थः।

विष्णुधर्म्मे,—

मृगशीर्षे शशधरे माघे मासि प्रजापते।
एकादश्यां सिते पक्षे सोपवासो जितेन्द्रियः॥
द्वादश्यां षट्तिलाचारं कृत्वा पापात् प्रमुच्यते।
तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलोदकी॥
तिलदाता च भोक्ता च षट्तिली च न सीदति।

ब्रह्मपुराणे,—

माघ्यां कृत्वा तिलैः स्नानं सर्व्वपापैः प्रमुच्यते।
श्राद्धं पितृभ्यः कर्त्तव्यं तिलैर्नित्यं प्रयत्नतः॥

तथा,—

पौर्णमास्यां मघायोगे वायसाः पञ्च जज्ञिरे।
इन्द्राच्च वरुणाद्वायोर्यमादप्यथ निर्ऋतेः॥
ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋताश्च ये।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम्॥
दद्यादनेन मन्त्रेण तेभ्यो भक्तं मधुप्लुतम्।
ब्राह्मणान् भोजयित्वा तु भुञ्जीरन् बन्धुभिः सह॥

## अथ फाल्गुनकृत्यम्।

प्रियङ्गुं फाल्गुने दत्त्वा प्रियो भवति भूतले।

अथ कृष्णाष्टमी शाकाष्टका तत्परनवमी अन्वष्टकेति प्रागुक्तम्।

ब्रह्मपुराणे,—

कृष्णायां फाल्गुने मासि द्वादश्यां श्रवणे सति।
सोपवासो हरिं भक्त्या तत्र संपूजयेत्तिलैः॥
तिलतैलेन दीपांश्च दद्याद्विष्णुगृहेष्वपि।

## अथ शिवरात्रिव्रतम्।

इदञ्च तिथिकृत्यत्वात् पौर्णमास्यन्तचान्द्रेण।

तथा च शैवागमे,—

फाल्गुनस्य चतुर्द्दश्यां शिवरात्रिव्रतं शुभम्।

अतीतायां तथा माघ्यां या च कृष्णा चतुर्द्दशी॥
शिवञ्च पूजयेत्तत्र रात्रौ कुर्य्याच्च जागरम्।

तथा तत्रैव,—

कुम्भसंस्थे सहस्रांशौ या तु कृष्णा चतुर्द्दशी।
तत्रोपवासः कर्त्तव्यो माघे वापि तिथिक्रमात्॥

माघे सौरे इत्यर्थः।

लिङ्गपुराणे,—

माघफाल्गुनयोर्मध्ये कृष्णपक्षे चतुर्द्दशी।
शिवरात्रिस्तु सा प्रोक्ता सर्व्वकामफलप्रदा॥
माघमासस्य कृष्णायां चतुर्द्दश्यां सुरेश्वरि।
अहं यास्यामि भूपृष्ठे रात्रौ मातङ्गगामिनि॥
लिङ्गेषु च समस्तेषु स्थावरेषु चरेषु च।
संक्रमिष्याम्यसन्दिग्धं सर्व्वपापविशुद्धये॥

माघमासोऽत्र दर्शान्तचान्द्रमासाभिप्रायेण। तिथिद्वैधे व्यवस्था तु प्रागेव चतुर्द्दशीतिथिविचारे विवृताऽस्ति।

शैवागमे,—

कुम्भसंस्थे सहस्रांशौ कृष्णा शिवचतुर्द्दशी।
रात्रियोगे तु कर्त्तव्या जागरादिसमन्विता॥
प्रहरे प्रहरे स्नानं पूजाञ्चैव विशेषतः।
शिवलिङ्गस्य कुर्व्वीत अर्घ्यदानञ्च भक्तितः॥
एकेनैवोपवासेन कृतेनात्र तिथौ शिवः।
प्रीयते भगवान् देवो भुक्तिमुक्तिफलप्रदः॥

शिवलिङ्गस्य प्रहरे प्रहरे स्नानं पूजामर्घ्यदानञ्च कुर्व्वीतेत्यर्थः।

गरुड़पुराणे,—

चयोदश्यां शिवं पूज्य प्रकुर्य्यान्नियमं व्रती ।
श्वस्ते शिवचतुर्द्दश्यां जागरिष्याम्यहं निशि ॥
पूजां स्नानं ततो होमं करिष्याम्यथ शक्तितः ।
चतुर्द्दश्यां निराहारो भूत्वा शम्भो परेऽहनि ॥
भोच्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर ।
पञ्चगव्यामृतैः स्नाप्य अस्तकाले चतुर्द्दशी ॥
ॐ नमः शिवायेति च गन्धाद्यैः पूजयेद्धरम् ।
विल्वपत्रयुतं दद्यादर्घं देवाय भक्तितः ॥
तिलतण्डुलव्रीहींश्च जुहुयादथ शक्तितः ।
हुत्वा पूर्णाहुतिं दद्यात् शृणुयात् श्रद्धया कथाम् ॥
अर्द्धराचे तृतीये चतुर्थे [1]यामे पुनर्यजेत् ।
मूलमन्त्रं ततो जप्त्वा प्रभाते च क्षमापयेत् ।
अविघ्नेन व्रतं देव त्वत्प्रसादात् समर्पितम् ॥
क्षमस्व जगतां नाथ त्रैलोक्याधिपते हर ।
यन्मयाद्य कृतं पुण्यं तद्रुद्रस्य निवेदितम् ॥
त्वत्प्रसीद महादेव व्रतमद्य समर्पितम् ।
इति क्षमाप्य स्तुत्वा च नत्वा च बहुशः शिवम् ॥
विसर्ज्जयेत् परेद्युश्च शिवभक्तानथ द्विजान् ।
भोजयित्वा प्रयत्नेन पारणं स्वयमाचरेत् ॥

---

१ क पुस्तके, तृतीये च तुर्य्ये ।

एवमेतद्व्रतं पुण्यं कृत्वा द्वादशवार्षिकम्।
कीर्त्तिश्रीपुत्रराज्यादि प्राप्य [1]शिवपुरं व्रजेत्॥

पञ्चगव्यैः पञ्चामृतैश्च स्नाप्येत्यर्थः।

पञ्चामृतमुक्तं यथा,—

दुग्धं सशर्करञ्चैव घृतं दधि तथा मधु।
पञ्चामृतमिदं प्रोक्तं विधेयं सर्व्वकर्मसु॥

मूलमन्त्रस्तु ॐ नमः शिवायेति प्रागुक्त एव।

तत्रायं प्रयोगः।

त्रयोदश्यां शिवमभ्यर्च्य तदग्रतो नियमं गृह्णीयात्।

श्वस्ते शिवचतुर्द्दश्यां जागरिष्याम्यहं निशि।
पूजां स्नानं ततो होमं करिष्याम्यथ शक्तितः॥
चतुर्द्दश्यां निराहारो भूत्वा शम्भो परेऽहनि।
भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर॥

इति नियमं गृहीत्वा एकभक्तं विधाय परेद्युः प्रातः स्नात्वा कृतनित्यकृत्यः सन्ध्यासमये शिवमभ्यर्चयेत्। तत्र उदङ्मुख उपविश्य ॐ अद्येत्यादि अमुकगोत्रोऽमुकशर्म्मा शिवप्रीतिपूर्व्वककीर्त्ति-श्रीपुत्रादिप्राप्ति— तदुत्तरशिवपुरप्राप्तिकामः शिवरात्रिव्रतकर्माहं करिष्ये। इति संकल्प्य भूतशुद्धिप्राणायाम—मातृकान्यासान् कृत्वा वामदेवऋषिर्मस्तके पंक्तिश्छन्दो मुखे श्रीमहेश्वरो देवता हृदि इति ऋष्यादिन्यासं कृत्वा कराङ्गन्यासं कुर्य्यात्।

ॐ अङ्गुष्ठाभ्यां नमः, न तर्ज्जनीभ्यां स्वाहा, मः मध्यमाभ्यां

---

[1] ख पुस्तके, शैवं पुरं।

वषट्, शि अनामिकाभ्यां हुम्, वा कनिष्ठाभ्यां वौषट्, य करतलपृष्ठाभ्यां फट्।

ॐ हृदयाय नमः, न शिरसे स्वाहा, मः शिखायै वषट्, शि कवचाय हुं, वा नेत्रत्रयाय वौषट्, य अस्त्राय फट्। इति तालत्रयं दिग्बन्धनञ्च कृत्वा,—

नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गामृतात्मने।
चतुर्मूर्त्तिवपुःस्थाय भसिताङ्गाय शम्भवे॥

इति मन्त्रं सकलशरीरे विन्यस्य पीठन्यासं कृत्वा देवं चिन्तयेत्।

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्॥

इति ध्यात्वा मानसोपचारैरभ्यर्च्च्य अर्घ्यस्थापनं कृत्वा पाद्याचमनीयञ्च स्थापयेत्।

ततो मार्त्तिकलिङ्गे पाषाणादिलिङ्गे वाङ्गनाङ्कितादृष्टदलपद्मे वा पूजयेत्। ततो वामे गणेशं पूजयित्वा पीठपूजां कुर्य्यात्।

ॐ आधारशक्तये नमः कूर्म्माय अनन्ताय पृथिव्यै सुमेरवे क्षीरसागराय श्वेतद्वीपाय रत्नमण्डपाय कल्पवृक्षाय।

आग्नेयादिकोणेषु,—

धर्म्माय ज्ञानाय वैराग्याय ऐश्वर्य्याय।

पूर्व्वादिदिक्षु,—

अधर्म्माय अज्ञानाय अवैराग्याय अनैश्वर्य्याय।

मध्ये,— शेषाय पद्माय अं सूर्य्यमण्डलाय उं सोममण्डलाय मं वह्निमण्डलाय सं सत्ताय रं रजसे तं तमसे आं आत्मने अं अन्तरात्मने पं परमात्मने ह्रीं ज्ञानात्मने नमः।

पूर्व्वाद्यष्टदिक्षु,—

वामायै ज्येष्ठायै रौद्र्यै काल्यै कलविकरिण्यै बलप्रमथिन्यै सर्व्वभूतदमन्यै। सर्व्वत्र नमः पदम्।

ॐ नमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योग-पीठात्मने नमः। इति पुष्पासनं दद्यात्। ततः पूर्व्ववत् ध्यात्वा पुष्पाञ्जलिनावाह्य प्राणप्रतिष्ठां कृत्वा भगवन् महेश्वर इहागच्छा-गच्छ इह तिष्ठ तिष्ठ सन्निहितो भव सन्निरुद्धो भवेत्यावाह्य आवाहन्यादिमुद्राः प्रदर्श्य ॐ नमः शिवायेति षडक्षरमन्त्रेण विल्वपत्राञ्जलिं दत्वा तेनैव मन्त्रेण पाद्याचमनीयार्घ्यमधुपर्कपुन-राचमनीयपञ्चगव्यपञ्चामृतस्नानवस्त्रगन्धपुष्पधूपदीपनैवेद्यैः सम्पूज्य,—

ॐ शम्भो त्रिनेत्र भूतेश चन्द्रचूड महेश्वर।
शिवरात्रौ ददाम्यर्घ्यं गृहाण पार्वतीप्रिय॥

इति विल्वपत्रसहितमर्घ्यं दत्वा आवरणादि पूजयेत्। मध्ये ईशानाय नमः।

चतुर्द्दिक्षु,—तत्पुरुषाय अघोराय सद्योजाताय वामदेवाय नमः।

आग्नेयादिकोणेषु,—

निवृत्त्यै प्रतिष्ठायै विद्यायै शान्त्यै नमः।

अग्न्यादिकोणेशान्तरेषु,—

ॐ हृदयाय नमः नं शिरसे स्वाहा मः शिखायै वषट्। शि

कवचाय हुं। समुखे वा नेत्रत्रयाय वौषट् दिक्षु च अस्त्राय फट्।

अष्टपत्रेषु,—अनन्ताय सूक्ष्माय शिवोत्तमाय एकनेत्राय त्रिमूर्त्तये श्रीकण्ठाय शिखण्डिने नमः।

ततः पत्राग्रेषु उत्तरादिक्रमेण,—

पार्वत्यै चण्डेश्वराय नन्दिने महाकालाय गणेशाय वृषभाय भृङ्गरीटये स्कन्दाय नमः।

तद्बहिः,—

इन्द्रादिलोकपालेभ्यो नमः, वज्राद्यायुधेभ्यो नमः। इति संपूज्य षडक्षरमन्त्रं यथाशक्ति जपित्वा तिलव्रीहिभिर्यथाशक्ति होमं कृत्वा पूर्णां दत्त्वा कथां शृणुयात्।

यथा गरुडपुराणे ब्रह्मोवाच,—

शिवरात्रिव्रतं वक्ष्ये कथामेनाश्च पुण्यदाम्।
यथा च गौरी भूतेशं पृच्छति स्म परं व्रतम्॥
पुरा कैलासशिखरे सर्वरत्नविभूषिते।
सुखोषिता शैलसुता देवी पप्रच्छ शङ्करम्॥
कर्म्मणा केन भगवन् व्रतेन तपसापि वा।
धर्म्मार्थकाममोक्षाणां हेतुस्त्वं परितुष्यसि॥

ईश्वर उवाच,—

माघफाल्गुनयोर्मध्ये या च कृष्णा चतुर्द्दशी।
तस्यां जागरणाद्रुद्रः पूजितो भुक्तिमुक्तिदः॥
निषादस्त्वार्बुदे देशे पापी सुन्दरसेनकः।
स कुक्कुरैकसंयुक्तो मृगान् हन्तुं वनङ्गतः॥

शरासापं स विभ्राणो वनं बभ्राम सर्व्वतः ।
मृगादिकमसंप्राप्य क्षुत्पिपासार्द्दितो गिरौ ॥
रात्रौ तड़ागतीरे स निकुञ्जे जाग्रदास्थितः ।
तत्रास्ति लिङ्गं विल्वस्य मूले तस्याचिपत्तहम् ॥
पत्राणि चापतन्मूर्द्धि तस्य लिङ्गस्य दैवतः ।
तड़ागात्तोयमानीय तस्य विल्वस्य मूलतः ॥
तेन धूलिनिरोधाय चिप्तं लिङ्गेऽपतत्तदा ।
शरः प्रमादेनैकस्तु प्रच्युतः करपल्लवात् ॥
जानुभ्यामवनीं गत्वा लिङ्गं स्पृष्ट्वा गृहीतवान् ।
एवं स्नानं पूजनञ्च स्पर्शनं जागरो भवेत् ॥
प्रातर्गृहागतो भार्य्यादत्तान्नं भुक्तवांश्च सः ।
काले मृतो यमभटैः पाशैर्बद्धा तु नीयते ॥
ततो मम गणैर्युद्धे जित्वा मुक्तीकृतः स तु ।
कुक्कुरेण सहैवाभूद्गणो मत्पार्श्वगो मतः ॥
एवमज्ञानतः पुण्यं ज्ञानात् पुण्यमथाचयम् ।
एतमेतद्व्रतं देवि मम प्रीतिकरं परम् ॥
यज्ञदानतपांस्यस्य कलां नार्हन्ति षोड़शीम् ।
एतद्व्रतप्रभावेण गाणपत्यमवाप्नुयात् ॥

इति कथां श्रुत्वा स्तुत्वा प्रणमेत् ।

एवं द्वितीय-तृतीय-चतुर्थप्रहरेष्वपि पूजार्घ्यदानजपकथा-श्रवणानि कृत्वा स्तुत्वा प्रणम्य प्रभातेऽर्घ्योदकेन समापयेत् ।

अविघ्नेन व्रतं देव त्वत्प्रसादात् समर्पितम् ।

नमस्ते जगतां नाथ त्रैलोक्याधिपते हर ॥
यन्मयाद्य कृतं पुण्यं तद्रुद्रस्य निवेदितम्।
तत्प्रसीद महादेव व्रतमद्य समर्पितम् ॥

ततः स्तुत्वा नत्वा च नमस्तेति विसृज्य दक्षिणां दत्त्वा प्रातःकृतस्नानः कृतनित्यक्रियो ब्राह्मणान् भोजयित्वा पारणं कुर्य्यात्।

इति शिवरात्रिव्रतं समाप्तम्।

विष्णुपुराणे,—

वासवाजैकपादर्क्षे पितॄणां तृप्तिमिच्छता।
वारुणेनाप्यमावस्या देवानामपि दुर्लभा ॥

वासवं धनिष्ठा अजपादं पूर्व्वभाद्रपदं वारुणं शतभिषा अमावास्या कार्य्येति शेषः। इयन्तु गौणफाल्गुन एव भवति तत्रैव नक्षत्रसम्भवात्।

ब्रह्मपुराणे,—

फाल्गुनामलपक्षस्य नवमी या महीपते।
अनन्ता सा महापुण्या सर्व्वपापहरा मता ॥

कूर्म्मपुराणे,—

फाल्गुनामलपक्षस्य पुष्यर्क्षे द्वादशी यदि।
गोविन्दद्वादशी नाम महापातकनाशनी ॥
अत्र स्नात्वा तु गङ्गायां स्नानास्नानकृतानि वै।
विधूय ब्रह्महत्यादि पापान्याप्नोति शाश्वतम् ॥

गङ्गास्नानमन्त्रस्तोक्तस्तत्रैव,—

महापातकसंज्ञानि यानि मे सन्ति जाह्नवि।

गोविन्दद्वादशीं प्राप्य तानि मे हर आह्नकि॥

भविष्ये,—

द्वादश्यान्तु सिते पक्षे पुष्यर्क्षं यत्र सत्तम।
गोविन्दद्वादशी प्रोक्ता विष्णुना पापनाशिनी॥
तस्यामाराध्य गोविन्दं जगतामीश्वरं परम्।
सप्तजन्मकृतात् पापात् मुच्यते नात्र संशयः॥
दानं यद्दीयते किञ्चित् समुद्दिश्य जनार्द्दनम्।
होमो वा क्रियते तस्यामक्षयं कथितं फलम्॥

विष्णुधर्म्मे,—

एकादश्यां सिते पक्षे पुष्यर्क्षं यदि सत्तम।
द्वादश्यां वा तदाशेषपापक्षयकरं द्वयम्॥

एतच्च फाल्गुनमास्येव सम्भवति।

वाराहे,—

एकादश्यां सिते पक्षे यदर्क्षं वै पुनर्वसुः।
नाम्ना सा विजया ख्याता तिथीनामुत्तमा तिथिः॥
तस्यां जगत्पतिर्द्देवः सर्व्वदेवेश्वरो हरिः।
प्रत्यक्षतां प्रयात्याशु तत्रानन्तफलं स्मृतम्॥
यश्चोपवासं कुर्व्वीत तिथौ तस्यां द्विजोत्तम।
सर्व्वपापविनिर्म्मुक्तो विष्णुलोके महीयते॥

तथा ब्रह्माण्डे,—

पुनर्वसौ देवगुरौ निशाकरे
निशेशवारे गुरुवासरेऽथवा।

स्यात् फाल्गुने मत्स्यगते वृहस्पता-
वेकादशी चेत् सकलाघनाशिनी ॥
जपश्च दानञ्च तथा हुतञ्च
यत्किञ्चिदस्यां क्रियते कर्म सञ्चितम्।
अनन्तपुण्यानि भवन्ति तस्य
सूर्य्यग्रहात् कोटिगुणाधिकं फलम् ॥
क्षारोदधौ चाप्यवगाह्य यो नरः
सम्पूजयेद्विष्णुमुपोषितस्तु ताम्।
यद्यच्च पापं दशजन्मभिः कृतं
विनाशयेत्तस्य समग्रमाशु सा ॥

निशाकरे पुनर्वसुनक्षत्रे देवगुरौ पुष्यानक्षत्रे वा गते गुरुदैवतत्वात् पुष्यायास्तद्व्यपदेशः निशेशवारे सोमवारे गुरुवारे वा मत्स्यो मीनः वृहस्पतौ मीनराशिं गते फाल्गुनशुक्लैकादशी यदा तदा सा सकलाघनाशिनीत्युच्यते। क्षारोदधौ लवणसमुद्रे तामेकादशीमुपोषित इत्यर्थः।

मात्स्ये,— त्रिरात्रोपोषितो दद्यात् फाल्गुन्यां भवनं शुभम्।
आदित्यलोकमाप्नोति याम्यं व्रतमिदं स्मृतम् ॥

भविष्ये,—

फाल्गुनी फल्गुनीयुक्ता तिथौ तस्यां द्विजाय तु।
शय्यां दत्वाप्नुयाद्भार्य्यां नारी भर्त्तारमुत्तमम् ॥

ज्योतिषे,—

वृत्ते तुषारसमये सितपञ्चदश्यां

प्रातर्वसन्तसमये समुपस्थिते च।
पीत्वा तु चूतकुसुमं सह चन्दनेन
वर्षं सुखी सखि भवेत् पुरुषस्तु सर्व्वम्॥

पानमन्त्रो यथा,—

चूतमग्र्यं वसन्तस्य माकन्दकुसुमं तव।
सचन्दनं पिबाम्यद्य सर्व्वकामार्थसिद्धये॥

आदिब्राह्मे— पुरुषोत्तमक्षेत्रमधिकृत्य,—

नरो दोलागतं दृष्ट्वा गोविन्दं त्रिदशोत्तमम्।
फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत्॥

फाल्गुनी पौर्णमासी।

तथा स्कान्दे,—

फाल्गुन्यां फल्गुनीऋक्षे गोविन्दं सुरसत्तमम्।
दोलागतमभिप्रेक्ष्य विष्णोः पदमवाप्नुयात्॥

फल्गुनीनक्षत्रमत्र गुणफलं सर्व्वतिथेः प्राधान्यात्।

## अथ चैत्रकृत्यम्।

स्कन्दपुराणे,—

यः क्षिपेदेकभक्तेन चैत्रमासं नरोत्तमः।
धनधान्यसमृद्धे तु कुले मनुष्यति जायते॥

वामनपुराणे,—

चैत्रे विचित्रवस्त्राणि शयनान्यासनानि च।
विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वथ॥

मत्स्यपुराणे,—वर्ज्जयेच्चैत्रमासन्तु यस्तु गन्धानुलेपनम्।

शुक्तिं गन्धभृतां दद्यात् विप्राय चित्तवाससी ॥
वारुणं पदमाप्नोति काम्यं व्रतमिदं स्मृतम् ।

गन्धपूर्णा शुक्तिर्व्रतान्ते देया ।

तथा,—

चैत्रादि चतुरो मासान् तोयं दद्यादयाचितम् ।
व्रतान्ते मानकं दद्यादन्नवस्त्रसमन्वितम् ॥
तिलपात्रं हिरण्यञ्च ब्रह्मलोके महीयते ।
कल्पान्ते भूपतिर्नूनमाकल्पव्रतमुत्तमम् ॥

मानकं पूर्णकुम्भम् ।

स्कन्दपुराणे,—

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ॥
शनिवारसमायुक्ता सा महावारुणी स्मृता ।
गङ्गायां यदि लभ्येत कोटिसूर्य्यग्रहैः समा ॥
शुभयोगसमायुक्ता शनौ शतभिषा यदि ।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥

मधुश्चैत्रः वारुणं शतभिषा। अत्र त्रिविधा वारुण्युक्ता वारुणी महावारुणी महामहावारुणीति क्रमेणैषां फलानि चोक्तानि। ततश्च नक्षत्रयोगं विना केवलत्रयोदश्यां शनिवारादियोगेऽपि न किञ्चित्फलं वचनाभावात्। अत्र सर्व्वत्र गङ्गायामित्यभिधानात् गङ्गास्नानादेव फलम् ।

तथा ज्योतिषे,—

चैत्रासिते वारुणऋक्षयुक्ता
त्रयोदशी सूर्य्यसुतस्य वारे।
योगे शुभे सा महती महत्या
गङ्गाजलेऽर्कग्रहकोटितुल्या॥

अत्र रात्र्यादिपर्य्युदासो नास्ति गङ्गायां प्रतिप्रसवात्।

यथा ब्रह्माण्डे,—

रात्रौ दिवा च सन्ध्यायां गङ्गायाञ्च प्रसङ्गतः।
स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृततज्जलैः॥

प्रसङ्गतो हेलयापीत्यर्थः।

भविष्ये,—

न मन्त्रो न विधिश्चैव न मुद्रो न च गोमयम्।
न कालनियमस्तत्र गङ्गां प्राप्य सरिद्वराम्॥

तथा आदिपर्व्वणि। जलप्रवेशनिषेधं कुर्व्वन्तं गन्धर्व्वं प्रति गङ्गां प्रविशतोऽर्ज्जुनस्योक्तिः,—

समुद्रे हिमवत्पार्श्वे नद्यामस्याञ्च दुर्मते।
रात्रावहनि सन्ध्यायां कस्य गुप्तः परिग्रहः॥
असम्बाधा देवनदी स्वर्गसम्पादनी शुभा।
कथमिच्छसि तां रोद्धुं नैष धर्म्मः सनातनः॥
अनिवार्य्यमसम्बाधं तव वाचा कथं वयम्।
न विशेम यथाकामं पुण्यं भागीरथीजलम्॥

दुर्मते शास्त्रानभिज्ञ, परिग्रहः स्वीकारः कस्य गुप्तो नियम

इत्यर्थः। तस्माद्राष्ट्यादिनिषिद्धकालेऽपि गङ्गायामस्मिन् योगे स्नातव्यम्।

अथ केचित्,—

स्नानं कुर्व्वन्ति या नार्य्यश्चन्द्रे शतभिषाङ्गते।
सप्तजन्म भवेयुस्ता विधवा दुर्भगा ध्रुवम्॥

तथा,— चयोदश्यां तृतीयायां दशम्याञ्च विशेषतः।
शूद्रविट्क्षत्त्रियाः स्नानं नाचरेयुः कथञ्चन॥

इति वचनद्वयात् स्त्रीशूद्राभ्यामत्र न स्नातव्यमिति वदन्ति। तन्मन्दम्। भोगार्थस्नानमादाय निषेधस्य चरितार्थत्वात्। वैध-स्नानस्य निषेद्धुमशक्यत्वात् अन्यथासिद्धस्य वैधबाधाक्षमत्वात्। अतएव न हिंस्यात् सर्व्वाभूतानीति रागप्राप्तहिंसैव निषिध्यते न तु पशुयागाङ्गहिंसेति।

तथा च राजमार्त्तण्डे,—

प्रतिपत्स्वनपत्यः स्यात् तृतीयायामपत्निकः।
दशमी वित्तनाशाय सर्व्वं हन्ति चयोदशी॥
भोगार्थं क्रियते यत्तु स्नानं यादृच्छिकं नरैः।
तन्निषिद्धं दशम्यादौ नित्यनैमित्तिकादृते॥

भविष्ये,—

चैत्रे कृष्णचतुर्द्दश्यां यः स्नायाच्छिवसन्निधौ।
गङ्गायान्तु विशेषेण न स प्रेतोऽभिजायते॥

स्कान्दे,—

चैत्रमासारम्भमासाद्य तृतीया या जनप्रिया

शुक्लपक्षस्य पूर्व्वाह्णे अङ्गैः स्नानं समाचरेत् ॥
पूज्या च पार्व्वती देवी सर्व्वकामसमृद्धये ।
सौभाग्यतृतीयेति ख्यातेयम् ।

ब्रह्मपुराणे,—

शुक्लायामथ पञ्चम्यां चैत्रे मासि शुभानना ।
श्रीर्ब्रह्मलोकादागत्य संप्राप्ता केशवाज्ञया ॥
तस्मात्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुञ्चति ।
एषा श्रीपञ्चमी कार्य्या विष्णुलोके गतिप्रदा ॥
अत्र तिथिद्वैधे युग्मादरेण व्यवस्था ।

ब्रह्मपुराणे,—

अमावस्यां समुत्पन्नः स्कन्दः पूर्व्वं कृताग्रनात् ।
ततः षष्ठ्यान्तु शुक्लायां मासे तु चैत्रनामनि ॥
सैनापत्येऽभिषिक्तस्तु देवानां ब्रह्मणा स्वयम् ।
तस्मात् स तत्र विधिना स्कन्दो माल्यैः सुगन्धिभिः ॥
दीपालङ्कारवस्त्राद्यकुसुमैः पूज्य एव च ।
अजैः क्रीड़नकै रम्यैर्घण्टाचामरदर्पणैः ॥
आरोग्यकामैर्बालानां पुत्रवद्भिर्विशेषतः ।
सर्व्वासु शुक्लषष्ठीषु पूज्यो वा श्रद्धया नरैः ॥
तत्र चैत्रषष्ठ्यामित्यर्थः। अत्र तिथिद्वैधे पञ्चमीयुतैव कार्य्या ।
कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्द्दशी ।
एताः पूर्व्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत् ॥
इति ब्रह्मवैवर्त्तवचनात् ।

स्कान्दे,—भास्करस्य तु सप्तम्यां पूजां दमनकादिभिः ।
कृत्वाप्नोति नरो भोगान् विगताधिर्महायशाः ॥

लिङ्गपुराणे,—
पुनर्वसुबुधोपेता चैत्रे मासि सिताष्टमी ।
स्रोतःसु यदि लभ्येत वाजपेयफलं लभेत् ॥

कालिकापुराणे,—
चैत्रे मासि सिताष्टम्यां यो नरो विजितेन्द्रियः ।
स्नाति लौहित्यगाङ्गेषु स याति ब्रह्मणः पदम् ॥
सर्व्वा नदीः समासाद्य सर्व्वतीर्थानि सर्व्वतः ।
लौहित्यो ब्रह्मणः पुत्रो याति दक्षिणसागरम् ॥

भविष्ये,—
पृथिव्यां यानि तीर्थानि सरितः सागरादयः ।
सर्व्वे लौहित्यमायान्ति चैत्रे मासि सिताष्टमीम् ॥

तत्र स्नानमन्त्रः ।

ब्रह्मपुत्र महाभाग शान्तनोः कुलनन्दन ।
अमोघागर्भसम्भूत पापं लौहित्य मे हर ॥

लिङ्गपुराणे,—
अशोककलिकास्त्वष्टौ ये पिबन्ति पुनर्वसू ।
चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ॥
अशोककलिकापानमशोकतरुपूजनम् ।
कृत्वा निर्वृतिमाप्नोति चैत्रे मासि सिताष्टमीम् ॥
अशोकैरर्च्चयेद्दुर्गामशोककलिकाः पिबेत् ।

न शोकं प्राप्नुयात् किञ्चित् सप्तजन्मसु मानवः ॥

पुनर्वसू इति कालकर्म्म हितारकल्पाद्धिवचनम्। अथ पिब- त्तीति श्रवणात् दन्तच्छेदं विना जलेन सह पातव्यमित्यर्थः।

तत्र पानमन्त्रः,—

त्वामशोक हराभीष्ट मधुमाससमुद्भव।

पिबामि शोकसन्तप्तो मामशोकं सदा कुरु ॥

तथा दशाक्षरजयदुर्गामन्त्रं प्रकृत्य कालिकापुराणे,—

सिताष्टम्यान्तु चैत्रस्य पुष्पैस्तत्कालसम्भवैः।

अशोकैरपि यो दुर्गां मन्त्रेणानेन पूजयेत् ॥

न तस्य जायते शोको रोगो वाप्यथ दुर्गतिः।

देवीपुराणे,—

नवम्यां पूजयेद्देवीं महिषासुरमर्द्दिनीम्।

कुङ्कुमागुरुकर्पूरधूपदीपान्नमोदकैः ॥

दमनैर्मरुपत्रैश्च विजयाख्यं पदं लभेत्।

## अथ श्रीरामनवमी।

अगस्त्यसंहितायाम्,—

चैत्रे मासि नवम्यान्तु शुक्लपक्षे रघूत्तमः।

प्रादुरासीत्पुरा ब्रह्मन् परं ब्रह्मैव केवलम् ॥

तस्मिन् दिने तु कर्त्तव्यमुपवासव्रतं सदा।

तत्र जागरणं कुर्य्यात् [१]रघुनाथप्रपूजनम् ॥

प्रातर्दशम्यां विधिवत् दक्षिणाभिश्च तोषयेत्

---

१ मूलपुस्तके, रघुनाथपुरो मुनि।

गोभूतिलहिरण्याद्यै र्वस्त्रालङ्करणैस्तथा ॥
रामभक्तान् प्रयत्नेन प्रीणयेत्परया मुदा ।
एवं यः कुरुते भक्त्या श्रीरामनवमीव्रतम् ॥
अनेकजन्मसिद्धानि पातकानि बहून्यपि ।
भस्मीकृत्य व्रजत्येव तद्विष्णोः परमं पदम् ॥
यस्तु रामनवम्यान्तु भुङ्क्ते मोहादिमूढधीः ।
कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः ॥
यस्तु रामस्य नवमीमनादृत्य नराधमः ।
प्राप्नोयान्नरकं गच्छेद्यावदाचन्द्रतारकम् ॥
अकृत्वा रामनवमीव्रतं सर्व्वव्रतोत्तमम् ।
व्रतान्यन्यानि कुरुते न तेषां फलभाग् भवेत् ॥
रहस्यकृतपापानि प्रख्यातानि बहून्यपि ।
महान्ति च प्रनश्यन्ति श्रीरामनवमीव्रतात् ॥
एकामपि नरो भक्त्या श्रीरामनवमीं मुने ।
उपोष्य कृतकृत्यः स्यात् सर्व्वपापैः प्रमुच्यते ॥

इयञ्च मिन्द्राश्रवणाद्युत्या। पुनर्वसुयोगे तु फलातिशयो वक्ष्यते तत्र दिनद्वये नवमीलाभे यद्दिने पुनर्वसुयोगः तत्रैव उपवासः।

यथा तत्रैव अगस्त्य उवाच,—

चैत्रशुक्लनवम्यान्तु जातो रामः स्वयं हरिः ।
पुनर्वसूक्षसंयुक्ता सा तिथिः सर्व्वकामदा ॥
पुनर्वसूक्षसंयोगः स्वल्पोऽपि यदि दृश्यते[१] ।

१ मूलपुस्तके, लभ्यते ।

चैत्रशुक्लनवम्यान्तु सा तिथिः सर्व्वकामदा ॥

यदा तु पूर्व्वदिने रात्रौ तिथिनक्षत्रयोगः परदिने वा तिथिमात्रं तदा युग्मादरानक्षत्रानुरोधाच्च पूर्व्वदिने उपवासः परदिने पूर्व्वाह्णे रामपूजनं नात्र युग्मादरः संग्रयाभावात् इति प्रागेव तिथिविचारे विवृतमस्ति। दिनद्वये पुनर्वसुलाभे यत्र मध्याह्ने पुनर्वसुयोगस्तत्रैवोपवासादिकमाह तत्र,—

श्रीरामतोषणी[1] प्रोक्ता कोटिसूर्य्यग्रहाधिका।
चैत्रशुक्ले तु नवमी पुनर्वसुयुता यदि ॥
सैव मध्याह्नयोगेन महापुण्यतमा स्मृता।
मेषं पूषणि संप्राप्ते लग्ने कर्क्कटकाह्वये ॥
कौशल्यायामाविरासीत् कलया स परः पुमान्।

मध्याह्नप्राशस्त्यहेतुमाह। मेषं पूषणीति। पूषणि सूर्य्ये मेषं प्राप्ते सौरवैशाख इत्यर्थः। मध्याह्ने अभिजिन्मुहूर्त्ते कर्क्कटलग्नम्। यदा दिनद्वये मध्याह्ने नवमीपुनर्वसुयोगः यदा वा पूर्व्वदिने रात्रौ तिथिनक्षत्रयोगः परदिने तु पूर्व्वाह्णे तिथिनक्षत्रयोगः यदा वा दिनद्वये नवम्यां पुनर्वस्वभावः तदा व्यवस्थामाह तत्रैव।

नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः।
उपोषणं नवम्यान्तु दशम्यामेव पारणम् ॥

नवम्यामुदयगामिन्यां दशम्यामेवेत्येवकार उक्तदाढ्यार्थं इति केचित्। यदा नक्षत्रानुरोधात् पूर्व्वदिने उपवासस्तदापि नवमीभुक्तौर्य्यैव च पारणा इति नियमार्थं इत्यपरे।

---

१ क पुस्तके० नवमी।

तथा तत्रैव,—

तस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः ।
यत्किञ्चित् क्रियते कर्म्म तद्भवक्षयकारकम् ॥
उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम् ।
तस्मिन् दिने तु कर्त्तव्यं ब्रह्म प्राप्तिमभीप्सुभिः ॥
यस्तु रामनवम्यान्तु नियतस्तर्पयेत् पितॄन् ।
ते सर्व्वे तत्क्षणादेव यान्ति विष्णोः परं पदम् ॥
यस्तु रामनवम्यान्तु दद्याद्वित्तानुसारतः ।
यत्किञ्चिदपि तत्सर्व्वं महादानसमं भवेत् ॥
सूर्य्यग्रहे कुरुक्षेत्रे महादानैः कृतैर्मुहुः ।
यत्फलं तदवाप्नोति श्रीरामनवमीव्रतात् ॥
कुर्य्याद्रामनवम्यां च उपोषणमतन्द्रितः ।
मातुर्गर्भे न चाप्नोति राम एव भवेत् स्वयम् ॥

तथा,— तस्मिन् दिने महापुण्ये प्रातरारभ्य भक्तितः ।
जपेदेकान्त आसीनो यावत्स्याद्दशमीदिनम् ॥
तेनैव स्यात् पुरश्चर्य्या दशम्यां भोजयेद्द्विजान् ।
भक्ष्यभोज्यैर्बहुविधैर्दद्याद्गत्या च दक्षिणाम् ॥
कृतकृत्यो भवेत्तेन सद्यो रामः प्रसीदति ।

अथ प्रयोगः ।

पूर्व्वदिने एकभक्तं विधाय नियमस्थः प्रातः स्नात्वा पितॄन् सन्तर्प्य शुचिवस्त्रद्वयधरो द्विराचम्य प्रातः सङ्कल्पं कुर्य्यात् ।

ॐ अद्य रामं समुद्दिश्य सर्व्वपापप्रशान्तये ।

उपवासं करिष्येऽहं नवम्याञ्च मधौ सिते ॥
श्रीरामनवमीं देवीं सेवे रामप्रतोषिणीम्।
अर्च्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ॥

ततः कृतपूजासम्भारः शालग्रामे प्रतिमायां सर्व्वतोभद्रमण्डले वा पूजयेत्।

यथागस्त्यसंहितायाम्।

शालग्रामशिलायाञ्च तुलसीदलकल्पिता।
पूजा श्रीरामचन्द्रस्य कोटिकोटिगुणाधिका ॥

तत्र प्रथमं भूतापसारणं कृत्वा आसने उपविश्य कृतभूतशुद्धिः प्राणायाम-मातृकान्यास-केशवादिन्यासान् कृत्वा कराङ्गन्यासौ कुर्य्यात्। रां अङ्गुष्ठाभ्यां नमः रीं तर्ज्जनीभ्यां स्वाहा रुं मध्यमाभ्यां वषट् रैं अनामिकाभ्यां हुं रौं कनिष्ठाभ्यां वौषट् रः करतलपृष्ठाभ्यां फट्। रां हृदयाय नमः रीं शिरसे स्वाहा रूं शिखायै वषट् रैं कवचाय हुं रौं नेत्राभ्यां वौषट् रः अस्त्राय फट्। इति तालत्रयं दिग्बन्धञ्च कुर्य्यात्। ततः षडक्षरराममन्त्रस्य षड्वर्णान् ब्रह्मरन्ध्र-भ्रूमध्य-हृदय-नाभि-लिङ्ग-पादेषु क्रमेण न्यासेत्।

ततः पूर्व्वोक्तविधिना पीठन्यासं कृत्वा देवं ध्यायेत्।

ध्यानमुक्तमगस्त्यसंहितायाम्—

नीलोत्पलदलश्यामं पीताम्बरधरं विभुम्।
द्विभुजं कञ्जनयनं दिव्यसिंहासने स्थितम् ॥
वशिष्ठाद्यैश्च परितो वृतं रत्नकिरीटिनम्।
सीतासंलापचतुरं दिव्यगन्धानुलेपनम्।

करद्वये चापबाणौ सेवितं लक्ष्मणेन च ॥
शत्रुघ्नभरताभ्याञ्च पार्श्वयोरुच सेवितम्।
ध्यायेदनन्यहृदयो रामं स्मेरमुखाम्बुजम् ॥

इति ध्यात्वा मानसोपचारैरभ्यर्च्य आत्माभेदेन सञ्चिन्त्य पूर्वोक्तविधिना अर्घ्यं संस्थाप्य पाद्यमाचमनीयञ्च स्थापयेत्। ततः पूर्वोक्तविधिना पीठपूजां विधाय पुनर्देवं ध्यात्वा मानसोपचारैरभ्यर्च्य आत्माभेदेन सञ्चिन्त्य पुष्पाञ्जलिना वहन्नासापुटेन तेजोरूपं भगवन्तं प्रतिमादिष्वारोप्य ॐ तद्विष्णोः परमं पदमिति मन्त्रं पठन् भगवन् श्रीराम इहागच्छागच्छ इह तिष्ठ तिष्ठ सन्निहितो भव सन्निरुद्धो भव प्रसन्नो भवेति यथाक्रममावाहन्यादिमुद्राः प्रदर्श्य देवताङ्गे षडङ्गन्यासं कृत्वा अवगुण्ठनामृतीकरणपरमीकरणमुद्राश्च प्रदर्श्य प्राणप्रतिष्ठां कृत्वा षडक्षरमन्त्रेण पुष्पं दत्त्वा आसनं निवेद्य भगवन् स्वागतं ते इति पृष्ट्वा तेनैव मन्त्रेण पाद्याचमनीयार्घ्यमधुपर्कपुनराचमनीय स्नानजलवस्त्रालङ्कार गन्धपुष्पधूपदीपनानाविधनैवेद्याचमनीयताम्बूलचन्दनानि दत्त्वा शङ्खघण्टादिवाद्यैः सन्तोष्यावरणानि पूजयेत्। श्रीं सीतायै स्वाहा इति मन्त्रेण सीतां पार्श्वगतां पूजयेत्।

ततः पार्श्वद्वये शार्ङ्गचापाय नमः शरेभ्यो नमः।

अग्न्यादिकोणकेशरेषु.—

रां हृदयाय नमः रीं शिरसे स्वाहा रूं शिखायै वषट् रैं कवचाय हुं रौं नेत्राभ्यां वौषट् चतुर्दिक्षु रः अस्त्राय फट् पूजयेत्।

पूर्व्वादिषट्पत्रेषु,—

हनुमते नमः सुग्रीवाय भरताय विभीषणाय लक्ष्मणाय अङ्गदाय शत्रुघ्नाय जाम्बवते नमः।

दलाग्रेषु,—

धृष्टये जयन्ताय विजयाय सुराष्ट्राय राष्ट्रवर्द्धनाय अकोपाय धर्मपालाय सुमन्त्राय नमः।

तदग्रि: स्व स्व दिक्षु,—

इन्द्राय अग्नये यमाय नैर्ऋताय वरुणाय वायवे सोमाय (?) ईशानाय अनन्ताय ब्रह्मणे नमः।

तदग्रे,—

वज्राय शक्तये दण्डाय खड्गाय पाशाय अङ्कुशाय गदायै शूलाय चक्राय पद्माय नमः।

ततो राममन्त्रं जप्त्वा जपं समर्प्य स्तुत्वा प्रणमेत्।

मनोवाक्कायजनितं कर्म्म यन्मे शुभाशुभम्।
तत्सर्व्वं प्रीतये भूयान्नमो रामाय शार्ङ्गिणे॥

एवं सम्पूज्य रात्रौ जागरणं कृत्वा दशम्यां प्रातःस्नात्वा पुनर्भक्त्या राममभ्यर्च्च्य दक्षिणां दत्त्वा ब्राह्मणान् भोजयित्वा विशेषतो रामभक्तान् वस्त्रालङ्कारादिभिः सन्तोष्य पारणां कुर्य्यात्।

अथ चैत्रावली।

भविष्ये,—

चैत्रे शुक्लत्रयोदश्यां मदनं चन्दनात्मकम्।
कृत्वा सम्पूज्य विधिवद्वीजयेद्व्यजनेन तु॥

तत्र समुचितः कालः पूर्वपौर्णमासीविवर्जितः ।
कामदेवस्त्रयोदश्यां पूजनीयो यथाविधि ॥
रतिप्रीतिसमायुक्तो अशोकमाल्यभूषितः ।
सिन्दूररजनीरक्ते रतिप्रीतिसमन्वितम् ॥
कामदेवं वसन्तञ्च विलिख्य सधनुःशरम् ।
अशोकतरुमूले च चित्रे वापि प्रपूजयेत् ॥
प्रीतिश्च दक्षिणे तत्र रतिर्वामे च सुन्दरी ॥
मध्याह्ने पूजयेद्भक्त्या भक्ष्यैर्गन्धैश्च सम्मरैः ।

समुचितः प्रोषितः, रजनी हरिद्रा ।

राजमार्त्तण्डे,—

रात्रौ त्रयोदशीं प्राप्य उद्याने रुचिरे शुभे ।
सरतिं मन्मथं स्थाप्य पूजयेदपरेऽहनि ॥
मधौ मासि सिते पक्षे कामक्रीड़ा तिथिद्वये ।
तस्मात् त्रयोदशीविद्धा भवेत् पूज्या चतुर्दशी ।

तिथिद्वय इति द्वादशीदिने रात्रौ मन्मथस्थापनं परेऽहनि चतुर्दशीयुक्तायां त्रयोदश्यां कामपूजनमहोत्सवः तत्परेऽहनि चतुर्दश्यां प्रातः कर्द्दमादिभिर्जुगुप्सितोक्तिभिश्च क्रीड़ेति । तत्र त्रयोदश्यां मध्याह्ने स्नात्वा सिन्दूरहरिद्रारक्तैरशोकतरुमूले चित्रपटे वा सधनुःशरं दक्षिणे प्रीतियुक्तं वामे रतिसहितं कामदेवं वसन्तञ्च विलिख्य गन्धपुष्पधूपदीपनैवेद्यादिभिर्महोपहारैः पूजयेत् । एवं संपूज्य पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् ।

तत्र मन्त्रः,—

पुष्पधन्वधनमहोऽस्तु नमस्ते मीनकेतन।
मुनीनां लोकपालानां धैर्य्यच्युतिकृते नमः॥
माधवात्मज कन्दर्प शम्बरारे रतिप्रिय।
नमस्तुभ्यं जिताशेषभुवनाय मनोभुवे॥
आधयो मम नश्यन्तु व्याधयश्च शरीरजाः।
सम्पद्यतामभीष्टं मे सम्पदः सन्तु मे स्थिराः॥
नमो माराय कामाय देवदेवस्य मूर्त्तये।
ब्रह्मविष्णुशिवेन्द्राणां मनःक्षोभकराय ते॥
एवं यः कुरुते पूजामनङ्गस्य महात्मनः।
भवन्ति नापदस्तस्य तस्मिन्नब्दे कदाचन॥
सिध्यन्ति तस्य मन्त्राश्च नारीणां वल्लभो भवेत्।
सर्व्वसम्पत्युतः सुखी देववन्मोदते भुवि॥

शैवागमे,—

मधुमासे तु संप्राप्ते शुक्लपक्षे चतुर्द्दशी।
प्रोक्ता मदनभञ्जीति सिद्धासुरमहोत्सवा॥
पूजयिष्यन्ति ये मर्त्त्यास्तद्रुतरुपल्लवैः।
ते यास्यन्ति परं स्थानं मदनस्य प्रभावतः॥

पूजयिष्यन्ति काममिति शेषः। तद्रुतरुपल्लवैः तस्य मदनकस्य भङ्गैः शाखाभिस्तदभिर्गुच्छैः पल्लवैश्चेत्यर्थः।

तथा,—

चैत्रे सितचतुर्द्दश्यां मदनस्य महोत्सवः।
सुगन्धितोक्तिभिस्तत्र गीतवाद्यादिभिर्नृणाम्॥

प्रातः प्रहरमात्रन्तु कर्द्दमैः क्रीडनं भवेत् ।
भगवांस्तुष्यते कामः पुष्पपौषसमृद्धिदः ॥
ततः स्नात्वा च मध्याह्ने विसृज्य च मनोभुवम् ।
आत्मानं भूषयेद्वस्त्रैर्गन्धमाल्यानुलेपनैः ॥
न पालयन्ति ये पर्व्व मादनं मानवाधमाः ।
तेषां पुण्यफलं दत्तं मया ते चैत्रमासिकम् ॥

हे कामदेव तेषां चैत्रमासजं पुण्यं मया तुभ्यं दत्तं इति शङ्करोक्तिरतो नित्यमिदम् ।

तथा,—

चैत्रावल्यां तदा देवं पूजयित्वा सदाशिवम् ।
सप्तजन्मकृतैः पापैर्मुच्यते नात्र संशयः ॥
कुङ्कुमेन तथा शिम्रा देवदेवं महेश्वरम् ।
यत् प्राप्यते फलं सम्यक् न तत्क्रतुशतैरपि ॥

देवीपुराणे,—

पौर्णमास्यां तथा कार्य्या सर्व्वकामसमृद्धये ।
इन्द्राय सह शच्या तु पूजा सर्व्वफलप्रदा ॥
मन्दे वार्के गुरौ वापि वारेष्वेतेषु चैत्रकी ।
तथाश्वमेधजं पुण्यं स्नानस्य लभते नरः ॥

मन्दे शनिवारे इत्यर्थः ॥

इति संवत्सरकृत्यं समाप्तम् ॥

---

## अथ प्रकीर्णकम् ।

### तत्र गङ्गामाहात्म्यम् ।

स्नानं दानं तपो जप्यं श्राद्धं देवप्रपूजनम् ।
गङ्गायान्तु कृतं सर्व्वं कोटिकोटिगुणं भवेत् ॥
प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
तत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥
अत्र दत्तं कृतं जप्तं कोटिकोटिगुणं भवेत् ।

दानधर्म्मे,—

भाद्रकृष्णचतुर्द्दश्यां यावदाक्रमते जलम् ।
तावद्गर्भं विजानीयात्तदूर्द्ध्वं तीरमुच्यते ॥

ब्रह्माण्डे,—

सार्द्धहस्तशतं यावद्गर्भतस्तीरमुच्यते ।
अत्र न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि ॥
न मन्त्रो न विधिः कालो न मृदो न च गोमयम् ।
गङ्गागर्भे कृतं किञ्चिदनन्तगुणितं भवेत् ॥

स्कान्दे,—

तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते ।
अत्र दानं जपो होमो गङ्गायां नात्र संशयः ॥
यत्किञ्चित् कुरुते कर्म्म तदक्षयमुदाहृतम् ।

परितः कूलद्वये इत्यर्थः ।

ब्रह्माण्डे,—

मनसा संस्मरेद्यस्तु गङ्गां दूरस्थितो नरः ।

चान्द्रायणसहस्रन्तु लभते नात्र संशयः ॥

भविष्ये—

भवनानि विचित्राणि विचित्राभरणाः स्त्रियः।
आरोग्यं वित्तसम्पत्तिर्गङ्गास्मरणजं फलम् ॥

महाभारते,—

दर्शनात् स्पर्शनात् पानात्तथा गङ्गेति कीर्त्तनात्।
स्मरणादेव गङ्गायाः सद्यः पापात् प्रमुच्यते ॥
सहस्रयोजनस्थोऽपि त्रिसन्ध्यं सुसमाहितः।
गङ्गा गङ्गेति यो ब्रूते स याति परमां गतिम् ॥

भविष्ये,—

वर्त्तमानमतीतञ्च ज्ञानतोऽज्ञानतोऽपि वा।
कृतं यदशुभं कर्म्म गङ्गां दृष्ट्वा प्रणश्यति ॥

दानधर्म्मे,—

सप्तावरान् सप्तपरान् पितॄंस्तेभ्यश्च ये परे।
दृमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वावगाह्य च ॥

पाद्मे,— मुहुर्मुहुर्यदा पश्येत् स्पृशेच्चापि मुहुर्मुहुः।
भक्त्या तदाप्नोति नरः शाश्वतं चाक्षतं पदम् ॥

भविष्ये,—

प्रणमेत् प्रातरुत्थाय गङ्गां पुण्यजलां शुभाम्।
धर्म्मार्थकाममोक्षाणां भाजनं स्यान्न संशयः ॥

ब्रह्माण्डे,—

अभक्त्यापि महापापी गङ्गां स्पृष्ट्वा शुचिर्भवेत्

वाराहे,—

ब्रह्मघ्ना गुरुघ्ना गोघ्नः स्पृष्टो वा सर्व्वपातकैः ।
गङ्गातोयेन संस्पृष्टः सर्व्वपापैः प्रमुच्यते ॥

वनपर्व्वणि,—

अप्यकार्य्यशतं कृत्वा कुर्य्याद्गङ्गावगाहनम् ।
सर्व्वं दहति गङ्गाम्भस्तत्तूलराशिमिवानलः ॥

भविष्ये,—

भक्त्या गङ्गावगाहस्य फलं वक्तुं न शक्यते ।
स्वर्गमोक्षौ फलं तस्येत्येवमाहुर्मनीषिणः ॥
कपिलाकोटिदानाद्धि गङ्गास्नानं विशिष्यते ।
सकृद्गङ्गावगाहेन कुलकोटीः समुद्धरेत् ॥

तथा,—

अप्सु नारायणं देवं स्नानकाले स्मरेत् सदा ।
साक्षात् ब्रह्मस्वरूपिण्यां गङ्गायाञ्च विशेषतः ॥
गङ्गायां मौषलं स्नानं महापातकनाशनम् ।

तथा,—

ब्रह्मघ्नो वा सुरापो वा गोघ्नो वा पञ्चपातकी ।
सर्व्वे ते निष्कृतिं यान्ति गङ्गास्नानान्न संशयः ॥

ब्रह्माण्डे,—

स्पृष्ट्वा स्वर्गमवाप्नोति पीत्वा ज्ञानमवाप्नुयात् ।
गङ्गास्नानेन भक्त्या तु परमाप्नोति पूरुषम् ॥

तथा,—

अनेकजन्मसम्भूतं पापं पुंसां प्रणश्यति।

स्नानमात्रेण गङ्गायां सद्यः स्यात् पुण्यभाजनम्॥

भविष्ये,—

अमावस्यां शतगुणं सहस्रन्तु दिनक्षये।

सोमसूर्य्यग्रहे लक्षं व्यतीपाते त्वनन्तकम्॥

तथा,—

जन्मर्क्षे च कृतं स्नानं गङ्गायां भक्तिभावतः।

जन्मप्रभृति यत्पापं तत्क्षणादेव नाशयेत्॥

नैरन्तर्य्येण यो माघं गङ्गायां स्नाति मानवः।

स ब्रह्मलोके सुचिरं स्थित्वा च सह पूर्व्वजैः॥

ततो ब्रह्म प्रतिष्ठेत कल्पकोटिशतायुतम्।

ब्रह्म ब्रह्मलोकम्।

तथा,—

संक्रान्तिषु च सर्व्वासु चातुर्मास्यफलं लभेत्।

एतदेव भवेत् पुण्यं माघकार्त्तिकमासयोः॥

संवत्सरफलं प्रोक्तं नवम्यां कार्त्तिके तथा।

मन्वादौ च युगादौ च मासत्रयफलं भवेत्॥

स्कान्दे,—

गङ्गास्नानं करोमीति मनसा यस्तु चिन्तयेत्।

अशक्तस्य स्वयं गन्तुं सामग्री यस्य नास्ति च॥

स तथा अकृत्वा मुक्तो विमुक्तः सर्व्वपातकैः।

स्कान्दे,—गङ्गायामरणान्मुक्तिर्नात्र कार्य्या विचारणा।
परब्रह्मस्वरूपिण्यामित्याह जगतां प्रभुः॥
गङ्गायां त्यजतः प्राणान् कथयामि वरानने।
कर्णे तत् परमं ब्रह्म ददामि मामकं पदम्॥

ब्रह्माण्डे,—
गङ्गायां ज्ञानतो मृत्वा मोक्षमाप्नोति मानवः।
अज्ञानाद् ब्रह्मणो लोकं याति नास्त्यत्र संशयः॥

गङ्गेयमत्र तनुं त्यजामीति ज्ञानपरं तदज्ञानपरं तथा सति यत्र कुत्रापि मोक्षसत्त्वात् गङ्गाया अकिञ्चित्करत्वं स्यात्। ब्रह्मशाप-महापातकादिभिरुदकानर्हस्यापि गङ्गामरणात् पापक्षयादुदकादि-दानार्हतामाह रामायणे आदिकाण्डे,—

अथ गङ्गाम्भसा तत्र प्लाविताः सगरात्मजाः।
दिव्यमूर्त्तिधरा भूत्वा ययुः स्वर्गं मुदान्विताः॥
भगीरथमुवाचेदं ब्रह्मा सुरगणैः सह।
तारिता नरशार्दूल त्वया पूर्व्वपितामहाः॥
षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः।

इत्युपक्रम्य,—
पितामहानां सर्व्वेषां त्वमत्र मनुजाधिप।
कुरुष्व सलिलं राजन् प्रतिज्ञा परिपालिता॥

## अथ तुलसीमाहात्म्यम्।

अगस्त्यसंहितायाम्,—
तुलसीपत्रमादाय योऽर्च्चयेद्विष्णुमव्ययम्।

स याति शाश्वतं ब्रह्म पुनरावृत्तिदुर्लभम् ॥
विष्णोः शिरसि विन्यस्तमेकं श्रीतुलसीदलम् ।
अनन्तफलदं विद्धमन्त्रोच्चारणपूर्व्वकम् ॥
पुष्पान्तरैरन्तरितं निर्मितं तुलसीदलैः ।
माल्यं मलयजाक्तिं दद्याच्छ्रीराममूर्द्धनि ॥
किन्तस्य बहुभिर्यज्ञैः सम्पूर्णवरदक्षिणैः ।
किं तीर्थसेवया दानैरुग्रेण तपसापि वा ॥
पत्रं पुष्पं दलं चैव श्रीतुलस्याः समर्पितम् ।
रामाय मुक्तिमार्गस्य द्योतकं नात्र संशयः ॥
संपूज्य विधिवद्रामं भक्त्या श्रीतुलसीदलैः ।
भवार्णवमहक्लेशु दुःखपाशाद्विमुच्यते ॥
पूजायोग्यैर्दलैः पुष्पैः पत्रैर्वा योऽर्च्चयेद्धरिम् ।
यदि न्यूनातिरिक्तानि तस्य पूर्णानि तान्यहो ॥

दलैः कोमलपल्लवैरित्यर्थः ।

तथा,—

न तस्य नरकक्लेशो योऽर्च्चयेत्तुलसीदलैः ।
निर्माल्यतुलसीमालायुक्तो योऽभ्यर्च्चयेद्धरिम् ॥
यद्यत् करोति तत् सर्व्वमनन्तगुणितं भवेत् ।
यदि न्यूनं भवत्येव रामाराधनसाधनम् ॥
तुलसीपत्रमात्रेण साङ्गं तत्परिपूर्य्यते ।
संत्यज्य तुलसीकाष्ठं यो दद्याद्राममूर्द्धनि ।
कर्पूरागुरुकस्तूरीचन्दनस्य न तत्समम् ॥

आरोपयन्ति ये भक्त्या तुलसीः श्रवणेव हि।
मोक्षाय च तद्देवासं नान्यदभ्यर्थितं ततः॥
शालग्रामशिलातोयं तुलसीदलवासितम्।
ये पिबन्ति पुनस्तेषां स्तन्यपानं न विद्यते॥
तुलसीविपिनस्यापि समन्तात् पावनं स्थलम्।
क्रोशमात्रं भवत्येव गाङ्गेयस्येव पाथसः॥
तुलस्यारोपिता सिक्ता दृष्टा स्पृष्टा च पावयेत्।
प्रदक्षिणं भ्रमित्वा ये नमस्कुर्व्वन्ति नित्यशः।
न तेषां दुष्कृतं किञ्चित् प्रक्षीणमवशिष्यते॥
अनन्यदर्शनाः प्रातर्ये पश्यन्ति तपोधन।
अहोरात्रकृतं पापं तत्क्षणान्नाशयन्ति ते॥
शालग्रामशिलायाश्च गङ्गायाश्च तपोधन।
तुलस्याश्चैव माहात्म्यं नेष्टे वक्तुं हि विश्वसृक्॥
तुलसीसन्निधौ प्राणान् ये त्यजन्ति मुनीश्वर।
न तेषां नरकक्लेशस्ते यान्ति परमं पदम्॥
शालग्रामशिलायाश्च तुलस्याश्चैव सन्निधौ।
येषां पुण्यवतां मृत्युस्ते मुक्ता नात्र संशयः॥

संवत्सरप्रदीपे,—

तुलसीदलजा छाया यत्र देशे भवेद्द्विज।
तत्र श्राद्धं प्रदातव्यं गयाश्राद्धफलाधिकम्॥
न ददाति गयां गत्वा पिण्डं यो वै महामुने।
तुलसीकानने श्राद्धं कृत्वा स तारयेत् पितॄन्॥

द्वादश्यां न च कुर्व्वीत तुलसीचयनं क्वचित्॥

चयनमन्त्रमाह तत्रैव।

तुलस्यमृतनामाऽसि सदा त्वं केशवप्रिया।
केशवार्थे चिनोमि त्वां वरदा भव शोभने॥
त्वदङ्गसम्भवैर्द्देवं पूजयामि यथा हरिम्।
तथा कुरु पवित्राङ्गि कलौ मलविनाशिनि॥
मन्त्रेनानेन यः कुर्य्यात्तुलसीचयनं हरेः।
दशवर्षसहस्राणि पूजायाः फलमाप्नुयात्॥

## अथ शालग्राममाहात्म्यम्।

पद्मपुराणे,—

चक्राङ्किताश्च पाषाणा दृश्यन्ते ये तु शोभनाः।
तेषां सन्दर्शनादेव नरः पापाद्विमुच्यते॥
चक्राङ्कितन्तु पाषाणं पूजयेत् प्रयतो गृही।
यतिर्वापि महीपाल भुक्तिमुक्तिफलप्रदम्।
न पूजयति यो देवं शालग्रामसमुद्भवम्॥
प्राप्ते कलियुगे घोरे तस्य स्वर्गगतिः कुतः।
न तपोभिर्न जप्येन न दानेन न चेज्यया॥
सा गतिः प्राप्यते या स्यात् शालग्रामशिलार्च्चनात्।
न व्याधिर्न भयं तत्र न पीडा दुर्ग्रहोऽपि वा॥
शालग्रामशिला यत्र पूज्यते भक्तिभावतः।
शालग्रामशिलायान्तु नित्यं सन्निहितो हरिः॥
यत्रापि नीयते तत्र वाराणस्याः समं फलम्।

न तेषामपराधोऽस्ति नापराधे च पातकम् ॥
नागम्यागमने पापं न च विश्वासघातने ।
शालग्रामशिलारूपी यत्र तिष्ठति केशवः ॥
तत्र देवासुरा यक्षा भुवनानि चतुर्द्दश ।
शालग्रामशिलायान्तु यः श्राद्धं कुरुते नरः ।
सुप्रीताः पितरस्तस्य गतास्ते ब्रह्मणोऽन्तिकम् ॥
ये पिबन्ति नरा नित्यं शालग्रामशिलोदकम् ।
प्रक्षालयन्त्यसन्दिग्धं ब्रह्महत्यादिपातकम् ॥

लिङ्गपुराणे,—

कामासक्तोऽपि वै नित्यं भक्तिभावविवर्ज्जितः ।
शालग्रामशिलां पुत्र योऽर्च्चयेत् सोऽच्युतो भवेत् ॥

तथा,—

शालग्रामशिला यत्र तत्तीर्थं परमं स्मृतम् ।
तत्र दानस्य यागस्य सर्व्वं कोटिगुणं भवेत् ॥
शालग्रामसमीपे तु क्रोशमात्रे व्यवस्थितः ।
कीकटेऽपि मृतो याति वैकुण्ठभवनं नरः ॥

## अथ वारव्रतम्।

भविष्ये,—

यस्त्वादित्यदिने भक्त्या भानुं संपूज्य सक्तुया ।
नक्तं करोति पुरुषः स यात्यमरलोकताम् ॥
भक्तिरुपास्तत्वेन ज्ञानं, वेदोक्तमिदमिति धीः श्रद्धा ।

सुक्रर्क्षोनं दिनं ज्ञेयं सौरनक्तव्रते विधिः।

इति सप्तमीकृत्ये सौरनक्तं प्रागुक्तं। व्रतमिदमेकाब्दसमाप्यम्।

भविष्ये। आदित्य उवाच,—

योऽब्दमेकं प्रकुर्व्वीत नक्तं मम दिने नरः।
ब्रह्मचारी जितक्रोधो ममार्च्चनपरायणः॥
वत्सरान्ते ततो ब्रूयात् प्रीयतां मे दिवाकरः।
एवं भक्तिसमायुक्तो मम लोकं स गच्छति॥
न च मानुष्यकं लोकमध्रुवं प्राप्नुयान्नरः।

ब्रह्मचारी परित्यक्तमैथुन इत्यर्थः।

तथा,—

उपवासञ्च कुर्व्वन्ति ये त्वादित्यदिने तथा।
जपन्ति च महाश्वेतां ते लभन्ते यथेप्सितम्॥

महाश्वेतामन्त्रः प्रोक्त आगमे,—

[१]ह्रामित्युक्ता ततो ह्रीन्तु सकारश्च विसर्गवान्।
महाश्वेताख्यमन्त्रोऽयं भानोस्त्वघहर ईरितः॥

नरसिंहपुराणे,—

हस्तायुक्ते सौरदिने सौरं नक्तं विधीयते।
स्नात्वा सूर्य्यं समभ्यर्च्च्य विष्णुं वा नीरुजो भवेत्॥

भविष्ये,—

ये त्वादित्यदिने प्राप्ते नक्तं कुर्व्वन्ति मानवाः।
भानुं सम्पूज्य वै भक्त्या ते भवन्ति त्वरोगिणः॥

---

१ क, पुस्तके ह्रां।

मत्स्यपुराणे,—

यत्तद्विश्वात्मनो धाम सूर्य्यरूपेण संस्थितम् ।
तस्मादादित्यवारे तु सदा नक्ताशनो भवेत् ॥

मुहूर्त्तोनं दिनं सौरनक्तमिति प्रागुक्तम् । सदेति नित्यत्वं प्रतिपादितम् ।

तथा भविष्ये,—

आमिषं रक्तशाकञ्च यो भुङ्क्ते च रवेर्द्दिने ।
सप्तजन्म भवेत् कुष्ठी दारिद्र्यमुपजायते ॥
तस्मात् सर्व्वप्रयत्नेन एकभक्तं रवेर्द्दिने ।
कुर्य्यान्नक्तं हविष्यं वा रोगयुक्तोऽन्यथा भवेत् ॥

रक्तशाकमिति यावदामिषत्वातिदिष्टोपलक्षणम् ।

भविष्ये,—

लवणाज्यगुड़ोपेतमपूपं सूर्य्यवासरे ।
सहिरण्यं नरो दत्त्वा न रोगैरभिभूयते ॥
काष्ठदानात् भौमदिने शत्रुनाशमवाप्नुयात् ।
जीवेऽह्नि वस्त्रदानेन परां पुष्टिमवाप्नुते ॥
शनैश्चरदिने दत्त्वा तैलं विप्राय शक्तितः ।
नित्यमेव महाभाग रोगनाशमवाप्नुयात् ॥

स्कान्दे,—

भौमवारे वर्षमेकं भक्त्या सम्पूज्य मङ्गलम् ।
हविष्यभुक् मिताहारः पुमं दीर्घायुषं लभेत् ॥
धनं धान्यं तथारोग्यं लभते सम्पदस्तथा ।

# अथ सूतिकाषष्ठीपूजा ।

ब्रह्मपुराणे,— देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तदहस्तस्मात् पुण्यं पूज्यञ्च सर्व्वदा ॥

अत्र सर्व्वदेत्यनेन जननाशौचान्तरपातेऽपि शुद्धिरित्युक्तम् ।

तथा च विष्णुधर्म्मे,—

सूतिकावासनिलया जन्मदा नाम देवताः ।
तासां यागनिमित्तार्थं शुद्धिर्जन्मनि कीर्त्तिता ॥
षष्ठेऽह्नि रात्रियागन्तु जन्मदानान्तु कारयेत् ।
रक्षणीयं तथा षष्ठीं निशां तत्र विशेषतः ॥
तत्र जागरणं कार्य्यं जन्मदानां तथा बलिः ।

अत्र प्रकृते पुत्रजन्माशौचे शुद्धिप्रतिप्रसवप्राप्तौ जन्मनीत्युपादानं जननाशौचान्तरपातेऽपि शुद्धिविधानार्थं न तु मरणाशौचपात इति । तासां यागनिमित्तार्थमित्यनेन तद्दिनविहितषष्ठ्यादिदेवता-पूजास्वेव शुद्धिर्नान्येषु सन्ध्यादिकर्म्मस्वित्युक्तम् । षष्ठीं निशां प्राप्य विशेषतो रक्षणीयं बालस्य रक्षा कार्य्येत्यर्थः ।

मार्कण्डेयपुराणे,—

अग्न्यम्बुशून्ये च तथा निर्धूपे सूतिकागृहे ।
अदीपशस्त्रमुषले भूतिसर्षपराजिते ॥
अनुप्रविश्य या जातमपहृत्य ततोऽपरम् ।
क्षणप्रसविनीबालं तत्रैवोत्सृजते द्विज ॥
सा जातहारिणी नाम सुघोरा पिशिताशना ।
तस्मात् संरक्षणं कार्य्यं यत्नतः सूतिकागृहे ॥

छागबन्धनार्थं यूपस्तम्भः अतिर्वङ्गभस्म। तत्र षष्ठेऽह्नि सायंसमये स्नातः शुचिराचान्तः स्वस्ति वाच्य सङ्कल्पं कुर्य्यात्।

ॐ अद्येत्यादि अभिनवजातकुमारस्य जन्मवासरात् षष्ठेऽह्नि अभिनवजातकुमारस्यास्य सर्व्वारिष्टप्रशमनपूर्व्वकदीर्घायुष्कामो वह्निर्वक्षिदानानन्तरं गणेशषष्ठ्यादिदेवतानां पूजाकर्म्म करिष्ये।

इति सङ्कल्प्य सप्तमण्डलिकाः कृत्वा तत्र कुशानास्तीर्य्य सम्पूज्य च माषभक्तेन बलिं दद्यात्।

ॐ क्षेत्रपाला नमो वोऽस्तु सर्व्वशान्तिफलप्रदाः।
बालस्य विघ्ननाशाय प्रतिगृह्णन्त्विमं बलिम्॥

क्षेत्रपालेभ्य एष माषभक्तबलिर्नमः।

पूर्व्वादिदिग्विभागेषु सुस्थले प्रतिवासिनः।
रक्षां कुर्व्वन्तु ते सर्व्वे मम गृह्णन्त्विमं बलिम्॥

पूर्व्वादिदिक्स्थेभ्यो नमः।

भूतदैत्यपिशाचाश्च गन्धर्व्वा रक्षसां गणाः।
शुभं कुर्व्वन्तु ते सर्व्वे मम गृह्णन्त्विमं बलिम्॥

भूतदैत्यपिशाचादिभ्य एष माषभक्तबलिर्नमः।

नानारूपधराः सर्व्वा मातरो देवयोनयः।
स्वयं रक्षन्तु मे पुत्रं तुष्टा गृह्णन्त्विमं बलिम्॥

मातृभ्य एषः।

आदित्यादि ग्रहा ये च स्वस्थानप्रतिवासिनः।
रक्षां कुर्व्वन्तु ते सर्व्वे मम गृह्णन्त्विमं बलिम्॥

आदित्यादिग्रहेभ्य एषः।

योगिनी डाकिनी चैव मातरो निवसन्ति याः।
शान्तिं कुर्व्वन्तु ताः सर्व्वा मम गृहन्त्विमं बलिम् ॥

योगिन्यादिभ्य एषः।

दिक्‌पाला ये तथेन्द्राद्याः स्वस्थानप्रतिवासिनः।
शान्तिं कुर्व्वन्तु ते सर्व्वे मम गृहन्त्विमं बलिम् ॥

इन्द्रादिलोकपालेभ्य एषः।

ततो द्वारदेशं गत्वा द्वारपालकाभ्यां नम इति मन्त्रेण द्वारपालौ पाद्यादिभिः सम्पूज्य प्रणमेत्।

द्वारपाल नमस्तुभ्यं सर्व्वशान्तिफलप्रद।
त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥
खड्गपाणे नमस्तुभ्यं सर्व्वविघ्नविनाशन।
त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥

ततो गृहं प्रविश्य प्राङ्मुख उपविश्य कराङ्गन्यासौ कृत्वा सामान्यार्घ्यं विधाय गणेशं ध्यात्वा ॐ गणानान्त्वेत्यावाह्य पाद्यादिभिः सम्पूज्य पुष्पाञ्जलिना प्रणमेत्।

सर्व्वविघ्नहरोऽसि त्वमेकदन्तो गजाननः।
षष्ठीगेहेऽर्च्चितः प्रीत्या शिशुं दीर्घायुषं कुरु ॥
लम्बोदर महाभाग सर्व्वोपद्रवनाशन।
त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥

ततः षष्ठीं पूजयेत्।

षां अङ्गुष्ठाभ्यां नमः। षीं तर्ज्जनीभ्यां स्वाहा। षूं मध्यमाभ्यां वषट्। षैं अनामिकाभ्यां हुं। षौं कनिष्ठाभ्यां वौषट्। षः कर-

तलपृष्ठाभ्यां फट्। षां हृदयाय नमः, षीं शिरसे स्वाहा, षूं शिखायै वषट्, षैं कवचाय हुं, षौं नेत्रत्रयाय वौषट्, षः करतलपृष्ठाभ्यां फट्।

इति कराङ्गन्यासौ कृत्वा देवीं ध्यायेत्।

द्विभुजां हेमगौराङ्गीं रत्नालङ्कारभूषिताम्।
वरदाभयहस्ताञ्च शरच्चन्द्रनिभाननाम्॥
पीतवस्त्रपरीधानां पीनोन्नतपयोधराम्।
अङ्कार्पितसुतां षष्ठीमम्बुजस्थां विचिन्तयेत्॥

इति ध्यात्वा मनसा पाद्यादिभिः सम्पूज्य अर्घ्यपात्रं प्रोक्षणीपात्रञ्च स्थापयित्वा प्रोक्षणीजलेन पूजोपकरणान्यभ्युक्ष्य घटं स्थापयित्वा तत्र पीठपूजां कुर्य्यात्।

जयायै, विजयायै, अजितायै, अपराजितायै, काल्यै, भद्रकाल्यै, सङ्गमायै, सिद्धायै।

मध्ये,—

लोहितायै, पद्मासनाय नमः।

ततः पूर्व्ववद्ध्यात्वा देवीमावाहयेत्।

आयाहि वरदे देवि षष्ठि षष्ठीति विश्रुते।
धात्रीरूपेण मे पुत्रं रक्ष जागरवासरे॥

षष्ठि देवि इहागच्छागच्छ तिष्ठ तिष्ठ सन्निहिता भव सन्निरुद्धा भव प्रसन्ना भवेत्यावाह्य ॐ षां षष्ठ्यै नम इति पाद्यादिभिरुपचारैः पूजयित्वा पुष्पाञ्जलिना प्रणमेत्।

जगन्मातर्जगद्धात्रि जगदानन्दकारिणि।

प्रसीद मम देवेशि षष्ठि देवि नमोऽस्तु ते ॥
शक्तिस्त्वं सर्व्वदेवानां लोकानां हितकारिणी।
त्वमिमं रक्ष मे बालं महाषष्ठि नमोऽस्तु ते ॥
भूतदैत्यपिशाचेषु डाकिनीयोगिनीषु च।
मातेव रक्ष मे पुत्रं सापदे पन्नगेषु च ॥
षष्ठि देवि महाभागे भक्तानामभयप्रदे।
वरदे त्वत्प्रसादेन चिरं जीवतु बालकः ॥
अस्मिंश्च सूतिकागारे देवीभिः परिवारिते।
रक्षां कुरु महाभागे सर्व्वोपद्रवनाशिनि ॥

ततस्त्रिशरणाद्याः पृथक् गन्धादिभिः पूजयेत्।

चिशरणा स्कन्दमाता च गौरी च कटपूतना।
पूजितव्याः प्रयत्नेन जन्मदा जातहारिणी ॥

ततो जयन्त्यै मङ्गलायै काल्यै कपालिन्यै दुर्गायै शिवायै क्षमायै धात्र्यै स्वाहायै स्वधायै नम इति पुष्पाञ्जलिना पूजयेत्।

गौर्य्यादिमातृकाभ्यो नमः। जन्मदाभ्यो नमः[१]। क्षेत्रपालेभ्यो नमः। भैरवेभ्यो नमः। आदित्यादिनवग्रहेभ्यो नमः। दिक्पालेभ्यो नमः।

ततो मार्कण्डेयं पाद्यादिभिः पूजयित्वा पुष्पाञ्जलिना प्रणमेत्।

मार्कण्डेय महाबाहो प्रार्थये त्वां कृताञ्जलिः।
चिरजीवी यथा त्वं भोस्तथा भवतु मे सुतः ॥

---

१ ख पुस्तके, जन्मदाभ्यो नम इति वाक्यं नास्ति।

अश्वत्थाम्ने बलये व्यासाय हनुमते विभीषणाय कृपाय परशुरामाय नमः। नारदादि ऋषिभ्यो नमः। गङ्गायै दुर्गायै महालक्ष्म्यै सरस्वत्यै। अश्विन्यादिनक्षत्रेभ्यः, विष्कुम्भादियोगेभ्यः, ववादिकरणेभ्यः, प्रतिपदादितिथिभ्यः, मेषादिद्वादशराशिभ्यः, सूर्य्यादिवारेभ्यः।

ततः स्कन्दमावाह्य गन्धादिभिः पूजयेत्।

कार्त्तिकेय महाबाहो गौरीहृदयनन्दन।
बालं मे रक्ष भीतिभ्यः षडानन नमोऽस्तु ते॥

[1][मन्थानदण्डाय नमः, इति मन्थानदण्डं पूजयेत्।

मन्थान त्वं हि गोलोके देवदेवविनिर्म्मितः[2]।
पूजितश्च विधानेन पुत्रं मे परिपालय॥

ततः खड्गं पाद्यादिभिः संपूज्य असिर्विशसन इत्यादिना प्रणमेत्। ततो वासुदेवं गन्धादिभिरभ्यर्च्च्य प्रणमेत्।]

वासुदेव नमस्तुभ्यं शङ्खचक्रगदाधर।
कुमारं रक्ष भीतिभ्यः शान्तिं कुरु नमोऽस्तु ते॥
त्रैलोक्यपूजितः श्रीमान् दैत्यचक्रविमर्द्दनः।
शान्तिं कुरु गदापाणे नारायण नमोऽस्तु ते॥
ब्रह्मा करोतु कल्याणं जगत्सृष्टिकरोऽव्ययः।
सुतस्य मे देवदेवस्तथा नारायणः प्रभुः।

ततो माषभक्तेन बलिं दद्यात्।

ॐ बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा।

---

१ ग पुस्तके [ ] चिह्नितांशो नास्ति।

२ ख पुस्तके, देवदेवेन निर्म्मितः।

मारुतश्चाश्विनौ देवाः सुपर्णाः पन्नगा ग्रहाः ॥
असुरा यातुधानाश्च रथस्था देवताश्च याः ।
दिविष्ठा लोकपालाश्च ये च विघ्नविनाशकाः ॥
जगतः स्वस्ति कुर्व्वन्तो दिव्या महर्षयस्तथा ।
सर्व्वे कुर्व्वन्तु मे रक्षां शान्तिं पुष्टिं धृतिं तथा ॥

सर्व्वेभ्यो बलिरेषः ।

ये रौद्रा रौद्रकर्म्माणो रौद्रस्थाननिवासिनः ।
सौम्याश्चैव तु ये केचित् सौम्यस्थाननिवासिनः ॥
मातरो रौद्ररूपाश्च गणानामधिपाश्च ये ।
विघ्नभूतास्तथा चान्ये दिग्विदिक्षु समाश्रिताः ॥
सर्व्वे ते प्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ।
सिद्धिं दिशन्तु मे पुत्रं भयेभ्यः पान्तु मां सदा ॥

भूतेभ्य एष बलिः ।

ततो बालं व्यजने समारोप्य षष्ठ्यै समर्पयेत् ।
देवतानामृषीणाञ्च भक्तानां भक्तवत्सले ।
मातेव रक्ष मे पुत्रं महाषष्ठि नमोऽस्तु ते ॥
जननी सर्व्वभूतानां बालानाञ्च विशेषतः ।
नारायणीस्वरूपेण सुतं मे रक्ष सर्व्वतः ॥
जगदाद्ये जगन्मातर्जगदानन्दकारिणि ।
समर्पितो मया देवि पादयोस्तव मे सुतः ॥
निजपुत्रवदेनं त्वं कुरु दीर्घायुषं सदा ।
अयं मम कुलोत्पन्नो रक्षार्थं पादयोस्तव ॥

नीतो मया महाभागे चिरं जीवतु बालकः।

इति बालं समर्प्य पुष्पाञ्जलिना प्रणमेत्।

माहेश्वरि शिवे नित्यं शिवदे शिवनायिके।

सुतं मे रक्ष पद्माक्षि शिवदा भव सर्व्वदा॥

ततः कुशेन बालमार्ज्जनम्।

विष्णुपुराणे,—

माथुरं मङ्गलं यच्च विष्णोरमिततेजसः।

हरस्य मङ्गलं यच्च सर्व्वं भवतु मे सुते॥

शान्तिरस्तु शिवञ्चास्तु प्रणश्यत्वशुभञ्च यत्।

यत एवागतं पापं तत्रैव प्रतिगच्छतु॥

रक्षतु त्वामशेषाणां भूतानां प्रभवो हरिः।

यस्य नाभिसमुद्भूतपङ्कजादभवज्जगत्॥

येन दंष्ट्राग्रविधृता धारयत्यवनी जगत्।

वराहरूपधृक् देवः स त्वां रक्षतु केशवः॥

नखाङ्कुरविनिर्भिन्नवैरिवक्षःस्थलो विभुः।

नृसिंहरूपी सर्व्वत्र रक्षतु त्वां जनार्द्दनः॥

वामनो रक्षतु सदा भवन्तं यः क्षणादभूत्।

त्रिविक्रमः क्रमाक्रान्तत्रैलोक्यस्फुरदायुधः॥

शिरस्ते पातु गोविन्दः कण्ठं रक्षतु केशवः।

गुह्यं स जठरं विष्णुर्जङ्घापादं जनार्द्दनः॥

मुखं बाहू प्रबाहू च मनः सर्व्वेन्द्रियाणि च।

रक्षत्वव्याहतैश्वर्य्यस्तव नारायणोऽव्ययः॥

मार्कण्डेयकनदाद्यास्तु नूपुराद्यवताः च यम् ।
गच्छन्तु प्रेतकूष्माण्डा राक्षसा ये तथाविधाः ॥
त्वां पातु दिक्षु वैकुण्ठो विदिक्षु मधुसूदनः ।
हृषीकेशोऽम्बरे भूमौ रक्षतु त्वां महीधरः ।

तथा कालिकापुराणे,—

उमा देवी शिरः पातु ललाटं शूलधारिणी ।
जिह्वां च चण्डिका देवी ग्रीवाञ्च तव कालिका ॥
अशोकवासिनी चेतो द्वौ बाहू शूलधारिणी ।
हृदयं ललिता देवी उदरं सिंहवाहिनी ॥
कण्ठं भगवती पातु ऊरू च विन्ध्यवासिनी ।
महाबला च जङ्घे द्वे पादौ पातालवासिनी ॥
सर्व्वतः पातु सततं दुर्गा देवी शुभावहा ।

ततः श्वेतसर्षपेण वेतालाद्येति रक्षां कृत्वा दक्षिणां दत्त्वा अच्छिद्रं कुर्य्यात् । तां रात्रिं खड्गपाणि र्जागृयात् । धनुःकाण्डञ्च गृहे स्थापयेत् । आचाराद्दक्षुपत्राणि द्वारदेशे दद्यात गोक्षुण्डञ्च स्थापयेत् ।

इति सूतिकाषष्ठीपूजा ।

## अथ मङ्गलचण्डिकापूजा ।

कालिकापुराणे,—

सैषा ललितकान्ताख्या देवी मङ्गलचण्डिका ।
वरदाभयहस्ता च द्विभुजा गौरदेहिका ॥
रक्तपद्मासनस्था तु मुकुटचयमण्डिता ।

रक्तकौषेयवसना स्मितवक्त्रा शुभानना ॥
नवयौवनसम्पन्ना चार्व्वङ्गी ललितप्रभा ।
उमया भाषितं तन्त्रं यत् पूर्व्वं लेकमक्षरम् ॥
मन्त्रमस्यास्तु तन्त्रोक्तं तेन देवीं प्रपूजयेत् ।
नारायण्यै विद्महे त्वां चण्डिकायै तु धीमहि ॥
तन्नो ललितकान्तेति ततः पश्चात् प्रचोदयात् ।
एषा ललितगायत्री देव्या दृष्टैः प्रकीर्त्तिता ॥
लोहिताङ्गस्य दिवसः प्रियोऽस्याः परिकीर्त्तितः ।
कालो वसन्तकालस्य स्वरश्चापि तु पञ्चमः ॥
अष्टम्याञ्च नवम्याञ्च पूजा कार्य्या विभूतये ।
दूर्व्वाङ्कुरैः समायुक्तमक्षतं प्रीतिदं परम् ॥
निर्माल्यधारिणी चास्या देवी ललितचण्डिका ।
अथमस्या विशेषस्तु पूजायां परिकीर्त्तितः ॥
वैष्णवीतन्त्रमन्त्रस्य तन्त्रं ग्राह्यन्तु पूजने ।
उपचारो बलिश्चास्या विहितोऽयं क्रमः पुरा ॥
महामाया महादेव्यास्तन्त्राद्यं परिपूजने ।
पटेषु प्रतिमायां वा घटे मङ्गलचण्डिकाम् ॥
यः पूजयेद्भौमदिने शुभैर्दूर्व्वाङ्कुरैः परम् ।
संततं साधकः सोऽपि कामानिष्टानवाप्नुयात् ॥

मुकुटचयेति एकपट्टिकोपरि त्रिचूड़ाकारमुकुटमण्डितेत्यर्थः ।

उमामन्त्रः प्रागुक्तो यथा ।

चादिः समात्रिषष्टित उमामन्त्र इति श्रुतः ।

यादिर्मकारः समाप्ति विंशर्ण इत्यर्थः।

नारायण्यै विद्महे त्वां चण्डिकायै धीमहि।

तन्नो ललितकान्ता प्रचोदयात्। इति ललितगायत्री।

आदौ मूलमन्त्रमुच्चार्य्य अनया गायत्र्या देवीं पूजयेदित्यर्थः। लोहिताङ्गस्य दिवसो मङ्गलवारः प्रियः, वसन्तकालः प्रियः पूजाकालः, पञ्चमस्वरः पञ्चमरागोऽस्याः प्रिय इत्यर्थः। अष्टम्यां नवम्याञ्च फलातिप्रिय इत्यर्थः। अष्टदूर्व्वाङ्कुरसहितैरष्टाक्षततण्डुलैरिति लोकप्रसिद्धिः। पूजान्ते निर्माल्येन ललितचण्डिका पूजयेदित्यर्थः। वैष्णवीतन्त्रमन्त्रस्य महामायामन्त्रस्य यः पूजाविधिरुक्तः सोऽत्र ग्राह्य इत्यर्थः। स च प्रयोगलिखनेन व्यक्तीभविष्यति। पूजाफलन्तु यस्य यस्याभिमतं तस्य तत्प्राप्तिरित्यर्थः।

अथ मङ्गलचण्डिकापूजाप्रयोगः।

कृतनित्यक्रियो यजमान उदङ्मुख आसने उपविश्य स्वस्ति वाच्य सङ्कल्पं कुर्य्यात्।

अद्येत्यादि अमुकगोत्रोऽमुकशर्म्मा अमुककामः श्रीमङ्गलचण्डिकापूजाकर्म्म करिष्ये इति सङ्कल्प्य अः फट् इति मन्त्रेण श्वेतसर्षपान् अक्षतान् वा दिक्षु विकीर्य्य भूतापसारणं कृत्वा नारदऋषिर्मस्तकेऽनुष्टुप्छन्दो मुखे श्रीमङ्गलचण्डिका देवता हृदि विन्यस्य कृताञ्जलिः सर्व्वकामार्थसाधने श्रीमङ्गलचण्डिकापूजायां विनियोगः। ॐ ह्रीं सः इति स्थानमभ्युक्ष्य ह्रीं सः इति मन्त्रेण करस्थं पुष्पं दक्षिणहस्तेन संमृज्य घ्रात्वा वामहस्तेन पूर्व्वमन्त्रेण ऐशान्याद्दिशि क्षिपेत्। भूतशुद्धिं प्राणायामं मातृकान्यासं च कृत्वा कराङ्गन्यासौ कुर्य्यात्।

मां अङ्गुष्ठाभ्यां नमः मीं तर्ज्जनीभ्यां स्वाहा मूं मध्यमाभ्यां वषट् मैं अनामिकाभ्यां हुं मौं कनिष्ठाभ्यां वौषट् मः करतल-पृष्ठाभ्यां फट्। मां हृदयाय नमः मीं शिरसे स्वाहा मूं शिखायै वषट् मैं कवचाय हुं मौं नेत्राभ्यां वौषट् मः अस्त्राय फट्।

तालत्रयं दिग्बन्धनञ्च कृत्वा पीठन्यासं कुर्य्यात्।

अंसद्वये—धर्म्माय, ज्ञानाय।

वामाद्युरुद्वये—वैराग्याय, ऐश्वर्य्याय। मुखे—अधर्म्माय। वामपार्श्वे अज्ञानाय। नाभौ—अवैराग्याय। दक्षिणपार्श्वे—अनैश्वर्य्याय। हृन्मध्ये—शेषाय, पद्माय, अं सूर्य्यमण्डलाय, उं सोममण्डलाय, मं वह्निमण्डलाय, सं सत्वाय, रं रजसे, तं तमसे, आं आत्मने, अं अन्तरात्मने, पं परमात्मने ह्रीं ज्ञानात्मने, ह्रीं योगपद्मपीठा-त्मने नमः।

ततो देवीं ध्यायेत्,—

यैषा ललितकान्ताख्या देवी मङ्गलचण्डिका।
वरदाभयहस्ता सा द्विभुजा गौरदेहिका॥
रक्तपद्मासनस्था तु मुकुटत्रयमण्डिता।
रक्तकौषेयवसना स्मितवक्त्रा शुभानना।
नवयौवनसम्पन्ना चार्व्वङ्गी ललितप्रभा॥

इति ध्यात्वा मनसा पाद्यादिभिः सम्पूज्य साहमित्यात्मानं विभाव्य गन्धपुष्पाभ्यां देवीरूपमात्मानं सम्पूज्य शिरोहृदयगुह्य-पादसर्व्वाङ्गेषु पुष्पपञ्चकं क्षिपेत्।

ततो वामभागे त्रिकोणमण्डलोपरि अर्घ्याधारं स्थापयित्वा

तत्र अस्त्राय फडिति प्रोक्षितं शङ्खं स्थापयित्वा नम इति मन्त्रेण गन्धपुष्पे दत्वा मूलमन्त्रेण जलेन पूरयित्वा मं दशकलात्मवह्निमण्डलाय नम इत्याधारं सम्पूज्य अं द्वादशकलात्मसूर्य्यमण्डलाय नम इति शङ्खं, उं षोड़शकलात्मचन्द्रमण्डलाय नम इति जलं सम्पूज्य तत्र षड़ङ्गानि पूजयित्वा देवीरूपं जलं ध्यात्वा कराभ्यामर्घ्यपात्रमाच्छाद्य मूलमष्टधा जप्त्वा तालत्रयदिग्बन्धनाभ्यां संरक्ष्य ऊमित्यवगुण्ठ्य धेनुमुद्रयाऽमृतीकुर्य्यात् ।

अर्घ्यस्य दक्षिणे ॐ फडिति प्रोक्षणीपात्रं संप्रोक्ष्य जलेनापूर्य्य गन्धपुष्पे दत्वा तीर्थमावाह्य अर्घ्यजलं किञ्चिद्दत्वा तेनोदकेनात्मानं पूजोपकरणञ्चाभ्युक्षेत् ।

अर्घ्यस्योत्तरतः कार्य्यं पाद्यमाचमनीयकम् ।

दक्षिणे गणेशं ध्यात्वा आवाह्य गन्धादिभिरभ्यर्च्च्य पीठं पूजयेत् अग्न्यादिकोणेषु—धर्म्मादिचतुष्टयम् ।

पूर्व्वादिदिक्षु—अधर्म्मादिचतुष्टयम् पूजयित्वा ।

मध्ये—शेषाय, पद्माय, अं सूर्य्यमण्डलाय उं सोममण्डलाय, मं वह्निमण्डलाय, सं सत्त्वाय, रं रजसे तं तमसे, आं आत्मने, अं अन्तरात्मने, पं परमात्मने, ह्रीं ज्ञानात्मने नमः । ह्रीं योगपद्मपीठासनाय नमः इत्यासनार्थं पुष्पाञ्जलिं दत्वा पूर्व्ववद्देवीं ध्यात्वा पुष्पाञ्जलिना नासाद्वारा तेजोरूपां भगवतीं निःसार्य्य ह्रीं इति मन्त्रेण मण्डलमध्ये स्थापयेत् ।

मध्ये—नारायण्यै विद्महे त्वां चण्डिकायै धीमहि । तन्नो ललितकान्ता प्रचोदयात् ।

इति मूलमन्त्रपूर्व्वया गायत्र्या श्रीभगवति मङ्गलचण्डिके इहागच्छागच्छ इह तिष्ठ तिष्ठ सन्निहिता भव सन्निरुद्धा भव प्रसन्ना भवेत्यावाह्य आवाहन-स्थापन-सन्निधापन-सन्निरोधन-परमीकर-णामृतीकरणमुद्राः प्रदर्श्य स्वागतमिति स्वागतं पृष्ट्वा मूलमन्त्रपूर्व्वया ललितगायत्र्या पाद्यार्घ्याचमनीयमधुपर्काचमनस्नानवसनालङ्कार-गन्धपुष्पधूपदीपनैवेद्यताम्बूलानि दद्यात्। अशक्तौ गन्धपुष्पधूपदीप-नैवेद्यैः पञ्चोपचारैः पूजयेत्।

ततो मूलमन्त्रपूर्व्विकां ललितगायत्रीं पठित्वा मङ्गलचण्डिकायै नम इत्यष्टदूर्व्वासंयुक्ताष्टाक्षततण्डुलान् दद्यात्।

मण्डलमध्ये,—

जयन्तीं मङ्गलां कालीं भद्रकालीं कपालिनीम्।
दुर्गां शिवां क्षमां धात्रीं स्वधां स्वाहां प्रपूजयेत्॥

ततोऽङ्गपूजा।

मां हृदयाय नमः। मीं शिरसे स्वाहा नमः। मूं शिखायै वषट् नमः। मैं कवचाय हूं नमः। मौं नेत्राभ्यां वौषट् नमः। मः अस्त्राय फट् नमः। इति सम्पूज्याष्टपत्रेषु अष्टौ योगिनीः पूजयेत्।

पूर्व्वादिचतुर्द्दिक्षु,—

शैलपुत्र्यै, चण्डमुण्डायै, स्कन्दमात्रे, कालरात्र्यै नमः।

अग्न्यादिकोणेषु,—

चण्डिकायै, कुष्माण्ड्यै, कात्यायन्यै, महागौर्य्यै नमः।

इति पूजयित्वा मः मङ्गलचण्डिकायै नमः इत्यष्टधा पुष्पैः पूज-येत्। ततो दुर्गापूजोक्तविधिना बलिं दद्यात्।

बलिदानानन्तरं कालिकापुराणे,—

जपं समारभेत् पश्चात् पूर्व्ववद्ध्यानतत्परः ।
हस्तेन स्रजमादाय मनसा चिन्तयन् शिवाम् ॥

यथाशक्ति जपित्वा जपं समर्प्य,—

सर्व्वमङ्गलमङ्गल्ये शिवे सर्व्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ।
सप्तधा वर्त्तनं कृत्वा स्तुतिमेतान्तु साधकः ।
पञ्च प्रणामान् कुर्व्वीत ऐँ ह्रीँ श्रीँ इति मन्त्रकैः ॥

ततः काममिष्टं निवेद्य योनिमुद्रां दर्शयित्वा क्षमस्वेति विसर्ज्जयेत् । तत ऐशान्यां त्रिकोणमण्डले उच्छिष्टचण्डिकां गन्धादिभिरभ्यर्च्य उच्छिष्टचण्डिकायै नम इति निर्माल्यं तत्र विन्यसेत् ।

उदके तरुमूले च निर्माल्यं तु समुत्सृजेत् ।
अनेनैव विधानेन पूजयित्वा तु चण्डिकाम् ॥
सर्व्वान् कामानवाप्नोति नात्र कार्य्या विचारणा ।

ततो दक्षिणां दत्वाऽच्छिद्रं कुर्य्यात् ।

इति श्रीमङ्गलचण्डिकापूजाविधिः ।

## अथ जन्मदिनपूजा ।

जन्मतिथौ जन्मनक्षत्रयोगे शुभमुक्तं ज्योतिषे,—

जन्मर्क्षयुक्ता यदि जन्ममासे
यस्य ध्रुवं जन्मतिथिर्भवेच्च ।
भवन्ति संवत्सरमेव याव-
त्तेनैव सम्मानसुखानि तस्य ॥

शनिमङ्गलवारे दोषमाह तत्रैव।

सूताम्तकुजयोर्वारे यस्य जन्मदिनं भवेत्।
अनृचयोगसम्प्राप्तौ विघ्नस्तस्य पदे पदे॥

सूतान्तः शनिः। शनिमङ्गलवारो यदि जन्मवारः स्यात्तदा न दोष इति प्राच्य। अत्र जन्मनक्षत्रयोगे तु न दोष इत्यर्थः।

प्रतीकारमाह तत्रैव,—

तस्य सर्व्वौषधिस्नानं ग्रहविप्रसुरार्च्चनम्।

सर्व्वौषधिमाह मत्स्यपुराणे,—

मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम्।
शठी चम्पकमुस्तञ्च सर्व्वौषधिगणः स्मृतः॥

रजनीद्वयं हरिद्रा दारुहरिद्रा चेत्यर्थः।

जन्मतिथिव्यवस्था तु चान्द्रेणैव न तु सौरेण। सौरे मासि कदाचित्तिथ्यप्राप्तौ लोपप्रसङ्गात्। रोहिण्यष्टमीराम-नवम्यादीनां भगवज्जन्मतिथीनां ब्रह्मपुराणादौ चान्द्रेण व्यवस्था-दर्शनाच्च।

तथा च गृह्यपरिशिष्टम्,—

उपाकर्म्मणि चोत्सर्गः प्रसवाहोऽष्टकादयः।
मासवृद्धौ पराः कार्य्या वर्ज्जयित्वातिपैतृकम्॥

अस्यार्थः। प्रसवाहो जन्मतिथिः। मासवृद्धौ मलमासपाते मासवृद्ध्या तिथिद्वयप्राप्तौ पर एव प्रकृते मासि कार्य्यम्। न तु पूर्व्वस्मिन् मलमासे, अतिपैतृकं सपिण्डीकरणं वर्ज्जयित्वा तत्तु मल-मासेऽपि कार्य्यमिति विवेचितं शुद्धिकौमुद्याम्।

अथ दिनद्वये तिथिप्राप्तौ उदयगामितिथेरेव ग्रहणं "युगाद्या वर्षवृद्धिश्चेति पूर्वोक्तवचनात्।

ब्रह्मपुराणे,—

सर्व्वैस्तु जन्मदिवसे स्नातैर्मङ्गलपाणिभिः।
गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः॥
स्वनक्षत्रञ्च पितरौ तथा देवः प्रजापतिः।
प्रतिसंवत्सरं यत्नात् कर्त्तव्यस्तु महोत्सवः॥

प्रतिसंवत्सरं यत्नादित्यभिधानान्नित्याधिकारः। पितरौ जगतां पितरौ भवानीवासुदेवावित्यर्थः प्रजापतिसमभिव्याहारात् पृथक् गुरुपूजाभिधानाच्च। स्नानञ्च तिलोद्वर्त्तनं कृत्वा सतिलजलेन कार्य्यम्।

तथा,—

तिलोद्वर्त्ती तिलस्नायी तिलपायी तिलप्रदः।
तिलहोता तिलभोक्ता षट्तिली नावसीदति॥

तथा,—

द्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम्।
मार्कण्डेयं नरो भक्त्या पूजयेत् प्रयतस्तथा॥
दीर्घायुषं ततो व्यासं रामं द्रौणिं कृपं बलिम्।
प्रह्लादञ्च हनूमन्तं विभीषणमथार्च्चयेत्॥

रामोऽत्र जामदग्न्यः, द्रौणिरश्वत्थामा। अथाचारात् षष्ठीमपि पूजयन्ति।

स्कान्दे,—

अभ्यङ्गं नखकेशानां मैथुनाध्वानमेव च।
आमिषं कलहं हिंसां वर्षवृद्धौ विवर्ज्जयेत्॥

ज्योतिषे,—

स्नात्वा जन्मदिने स्त्रियं परिहरन् प्राप्नोत्यभीष्टां श्रियं
मत्स्यान् मोचयतो द्विजाय ददतोऽप्यायुश्चिरं वर्द्धते।
मत्स्यान् खादति यस्तु तस्य रिपवो नाशं प्रयान्ति ध्रुवं
भुङ्क्ते यस्तु निरामिषं स हि भवेज्जन्मान्तरे पण्डितः॥

अथ प्रयोगः।

प्रातस्तिलोद्वर्त्तनं विधाय तिलमिश्रोदकेन स्नात्वा पूर्णकुम्भेषु गङ्गामृत्तिकाफलदूर्व्वापञ्चरत्नानि निःक्षिप्य तैरभिषेचयेत्।

पद्मपुराणे पुष्कर उवाच,—

शृणुष्वावहितो ब्रह्मन् सर्व्वकिल्बिषनाशनम्।
येनाभिषिक्तो नृपतिश्चिरं यशसि तिष्ठति॥
सुरास्त्वामभिषिञ्चन्तु ये च सिद्धास्तपोधनाः।
ब्रह्मा विष्णुश्च रुद्रश्च साध्याश्च समरुद्गणाः॥
आदित्या वसवो रुद्रा आश्विनेयौ भिषग्वरौ।
अदिति र्देवमाता च स्वाहा सिद्धिः सरस्वती॥
कीर्त्तिर्लक्ष्मी र्धृतिः श्रीश्च सीनीवाली कुहूस्तथा।
दितिश्च सुरमा चैव विनता कद्रुरेव च॥
देवपत्न्यश्च याः प्रोक्ता देवमातर एव च।
सर्व्वास्त्वामभिषिञ्चन्तु शुभाश्चाप्सरसाङ्गणाः॥
नक्षत्राणि मुहूर्त्ताश्च पक्षाहोरात्रसन्धयः।

संवत्सरा निमेषाश्च कलाः काष्ठाः क्षणा लवाः ॥
सर्व्वे त्वामभिषिञ्चन्तु कालस्यावयवाः शुभाः।
वैमानिकाः सुरगणा मनवः सागरैः सह ॥
सरितश्च महाभागा नागाः किम्पुरुषास्तथा।
वैखानसा महाभागा द्विजा वैहायसास्तथा ॥
सप्तर्षयः सदाराश्च ध्रुवस्थानानि यानि च।
मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः ॥
भृगुः सनत्कुमारश्च जैगीषव्यो सनन्दनः।
एकतश्च द्वितश्चैव त्रितो जावालिकश्यपौ ॥
दुर्वासा दुर्विनीतश्च कण्वः कात्यायनस्तथा।
मार्कण्डेयो दीर्घतपाः शुनःशेफो विदूरथः ॥
श्रौर्व्वः सम्वर्त्तकश्चैव च्यवनश्च पराशरः।
द्वैपायनो जरत्कारु र्देवराजः सहात्मजः ॥
पर्व्वता गुरवो वन्द्याः पुण्यान्यायतनानि च।
प्रजापतिश्च भगवान् गावो विश्वस्य मातरः ॥
वाहनानि च दिव्यानि सर्व्वे लोकाश्चराचराः।
अग्नयः पर्व्वताश्चैव जीमूताः खं दिशो जलम् ॥
एते चान्ये च बहवो वेदव्रतपरायणाः।
अभिषिञ्चन्तु सदाराश्च तपोधनाः ॥
सेन्द्रा देवगणाश्चैव पुण्यश्रवणकीर्त्तनाः।
तोयैस्त्वामभिषिञ्चन्तु सर्व्वोत्पातनिवर्हणैः ॥

इति स्नानं समाप्य नूतनवस्त्रयुगमलङ्कारञ्च परिधाय सन्ध्या-

दिकं कृत्वा इष्टदेवतां सम्पूज्य स्वस्ति वाच्य सङ्कल्पं कुर्य्यात्। ॐ अद्येत्यादि शुभवर्षवृद्धौ सकलमङ्गलसम्वलित दीर्घायुष्कामो मार्कण्डेयादिपूजाकर्म्म करिष्ये॥

ततो घटं संस्थाप्य तत्र गणेशं पाद्यादिभिरभ्यर्च्य नवग्रहान् दिक्पालांश्च सम्पूज्य सामान्यार्घ्यं विधाय मां हृदयाय नमः, इत्यादिना अङ्गन्यासं कृत्वा,—

द्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम्।
दण्डाक्षसूत्रहस्तञ्च मार्कण्डेयं विचिन्तयेत्॥

इति ध्यात्वा घटे आवाह्य ॐ मां मार्कण्डेयाय नमः, इति पाद्यादिभिरुपचारैरभ्यर्च्य—

ॐ आयुःप्रद महाभाग सोमवंशसमुद्भव।
महातपो मुनिश्रेष्ठ मार्कण्डेय नमोऽस्तु ते॥

इति पुष्पाञ्जलिना प्रणम्य कृताञ्जलिः प्रार्थयेत्।

मार्कण्डेय महाभाग सप्तकल्पान्तजीवन।
चिरजीवी यथा त्वम्भो भविष्यामि तथा मुने॥

ततो व्यासं परशुरामं अश्वत्थामानं कृपं बलिं प्रह्लादं हनूमन्तं विभीषणञ्चार्च्चयेत्। ततो जन्मनक्षत्राय नमः, जन्मतिथये, जन्मवाराय, जन्मराशये, जन्मलग्नाय, नम इति सम्पूज्य वासुदेवं लक्ष्मीं प्रजापतिञ्च विशेषतः पूजयेत्।

ततः षष्ठीमावाह्य ॐ षां षष्ठ्यै नम इति पाद्यादिभिरभ्यर्च्य प्रणमेत्।

मातृभूताऽसि भूतानां ब्रह्मणा निर्म्मिता पुरा।

तस्मान्मां पुत्रवत् कृत्वा पालय त्वं नमोऽस्तु ते ॥

ततस्त्रिमरणाद्याः पूजयित्वा प्रणमेत् ।

ॐ चिग्ररणा वृद्धमाता च गौरी च कटपूतना ।

आयुर्दाश्यो भवन्त्वेता अद्य जन्मतिथौ मम ॥

ततः कार्त्तिकेयं सम्पूज्य कुलदेवतामर्च्चयेत् । ततो दक्षिणां दत्वा दीर्घायुष्ट्वकामनया तिलान् धान्यानि चोत्सृज्य ब्राह्मणाय दद्यात्। पक्षिणो मत्स्यांश्च घातकहस्तान्मोचयेत् विप्रांश्च तोषयेत् । गोरोचनादिमङ्गलद्रव्याणि चालभेत ।

तत आचारादष्टोत्तरशतदूर्व्वाक्षतसिद्धार्थनिम्बपल्लवैर्ग्रन्थिबन्धनं कुर्व्वन्ति । सतिलं सशर्करञ्च दुग्धं पिबन्ति ।

तत्र मन्त्रः,—

सतिलं गुड़संमिश्रमञ्जल्यर्द्धमितं पयः ।

मार्कण्डेयवरं लब्ध्वा पिबाम्यायुष्यहेतवे ॥

ततो बन्धुभिः सह निरामिषं सकृद्भुञ्जीत ।

## अथ प्रकीर्णवचनानि ।

दर्शस्नानं गयाश्राद्धं तिलैस्तर्पणमेव च ।

न जीवत्पितृकः कुर्य्यात् कुर्व्वंश्च पितृहा भवेत् ॥

तथा,—

धुस्तूरं श्रीफलं नाद्यात्तथा रात्रौ नृपोत्तम ।

बुद्धिक्षयकरा एता माषकोद्रवमृत्तिकाः ॥

मनुः,—

यत्किञ्चित्तिलसंमिश्रं नाद्यादस्तमिते रवौ ।

जावालः,—

नाधीयित नरो नित्यमादावन्ते च पक्षयोः।
आदौ तु हीयते बुद्धिरन्ते ब्रह्मैव हीयते॥
चयोदश्याश्चतुर्थ्याश्च सप्तमीनवमीतिथेः।
प्रदोषेऽध्ययनं श्रीमान् द्वादश्याश्च विवर्ज्जयेत्॥

दक्षः,—

प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत्।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते॥

इति दक्षेण प्रदोषाख्यो रात्रेः प्रथमो यामः शेषयामश्च अध्ययनकाल उक्तस्तचोक्तजावालवचनेन चयोदश्यादिषु प्रदोषाख्ये प्रथम यामे निषिध्यते शेषयामेत्वध्ययनमविरुद्धमेव।

अनध्यायं प्रकृत्य याज्ञवल्क्यः,—

पञ्चदश्यां चतुर्द्दश्यामष्टम्यां राहुसूतके।
ऋतुसन्धिषु भुक्ता च श्राद्धिकं प्रतिगृह्य च॥

पञ्चदश्यादिषु यावत्तिथिविषयं राहुसूतके दिनत्रयमनध्ययनम्।

अहं न कीर्त्तयेद् ब्रह्म राज्ञो राहोश्च सूतके।

इति मनुवचनात्। ऋतुसन्धिदिवसे भुक्ता भोजनाव्यवहितकालेन भुक्तमाचेण जीर्णे इति मनुवचनात् (?)।

शारदातिलके,—

चतुर्द्दश्यष्टमीपर्व्वप्रतिपद्ग्रहणेषु च।
संक्रमेषु च सर्व्वेषु विद्यां नैव पठेन्नरः॥

निशासु दीपभङ्गे च सद्यः पाठं परित्यजेत् ।

विद्युत्स्तनितवर्षेष्विति प्रकृत्य मनुः,—

एतांस्त्वभ्युदितान् विद्याद्यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥
प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितसम्भवे ।
सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा ॥

सायंप्रातर्होमार्थं प्रादुष्कृतेष्वग्निषु सत्सु सन्ध्याद्वये इत्यर्थः। एतांस्त्रीन् प्रागुक्तान् विद्युत्स्तनितवर्षानभ्युदितान् सम्भूतान् यदा जानीयात् तदा काले वर्षाकालेऽपि प्राकरणिकमहोरात्रमनध्यायं विद्यात् । तथाऽनृतौ वर्षातिरिक्तकाले सन्ध्यासमये अपो बिभर्त्तीत्यभ्रमिति व्युत्पत्त्या सजलमेघदर्शनमात्रेऽप्यहोरात्रं नतु वर्षास्वित्यर्थः। चकारात् केवलविद्युत्स्तनितेऽप्यनृतावहोरात्रम् ।

वर्षाकाले सन्ध्यागर्ज्जनमात्रे विशेषमाह प्रादुष्कृतेष्विति सन्ध्याकाले विद्युत्स्तनितमात्रे सति सज्योतिरनध्यायः । प्रातःसन्ध्यागर्ज्जे दिवामात्रं सायं गर्ज्जे रात्रिमात्रमित्यर्थः शेषे विद्युत्स्तनित वर्षाणां शेषे वर्षे च सति यथा दिवानध्यायस्तथा रात्रावपि अहोरात्रं इत्यर्थः ।

वर्षाश्चतुरश्च ऋतु संवत्सरमते मासचतुष्टयं प्रायशोऽत्र वृष्टिबाहुल्यात् ।

शङ्खवचनेन तु,—

सन्ध्यागर्ज्जितनिर्घातभूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥

इति यत् सन्ध्यागर्ग्ग्ये मुनिग्रमुक्तं तन्मनुवचनैकवाक्यतया ऽनृतावेव मन्तव्यम्।

तदयं संक्षेपः।

वर्षाकाले सन्ध्यायां विद्युत्स्तनितवर्षेषु त्रिषु सत्सु अहोरात्रं विद्युत्स्तनितमात्रे सज्योतिः न तु वृष्टिमात्रेऽनध्यायः। अनृतौ तु विद्युदादीनां त्रयाणां प्रत्येकसमुदायाभ्यां सम्भवेऽहोरात्रमनध्यायः। काशीखण्डे,—

जातमात्रः शिशुस्तावत् यावदष्टौ समा वयः।
भक्ष्याभक्ष्ये न दुष्येत यावद्दै नोपनीयते॥

उपनयने सत्यष्टवर्षाभ्यन्तरेऽपि न दोष इत्यर्थः।

तथा,—

शूद्रान्नं शूद्रसम्पर्कं शूद्रेणैव सहासनम्।
शूद्रात् ज्ञानागमः कश्चित् ज्वलन्तमपि पातयेत्।
गोरक्षकान् वाणिजिकान् तथा कारुकुशीलवान्॥
प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्।

वृहन्नारदीये,—

यः शूद्रेण समाहूतो भोजनं कुरुते द्विजः।
सुरापीतिः स विज्ञेयः सर्व्वधर्म्मवहिष्कृतः॥
यः शूद्रेणार्च्चितं लिङ्गं विष्णुं वापि नमेन्नरः
तस्य वै निष्कृतिर्नास्ति प्रायश्चित्तायुतैरपि॥
नमेयुः शूद्रसंस्पृष्टं लिङ्गं वा हरिमेव वा।
स सर्व्वयातनाभोगी यावदाहूतसंप्लवम्॥

योषिद्भिः पूजितं लिङ्गं विष्णुं वापि नमेत्तु यः ।
सुचिरं नरके घोरे रौरवे स विपच्यते ॥
शूद्रो वा ऽनुपनीतो वा स्त्रियो वा पतितोऽपि वा ।
केशवं वा शिवं वापि स्पृष्ट्वा नरकमाप्नुयात् ॥

## अथ शूद्रधर्म्मः ।

मनुः,—

एकमेव हि शूद्रस्य प्रभुः कर्म्म समादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥
द्विजसेवैव शूद्रस्य विशिष्टं कर्म्म कीर्त्त्यते ।
यदतोऽन्यद्धि कुरुते तद्भवेदति निष्फलम् ॥

प्रभुर्ब्रह्मा एतेषां ब्राह्मणादिवर्णत्रयाणां, अनसूयया अकौटिल्येन मत इदमनादृत्य इति ल्यब्लोपे पञ्चमी ।

भविष्ये शिववाक्यम्,—

वर्णत्रयस्य शुश्रूषां शुचिः शूद्रः करोति यः ।
स्वधर्मोऽस्य इति ज्ञात्वा तस्य गृह्णाम्यहं बलिम् ॥

विष्णुपुराणे,—

द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान् ।

तत्र विप्रशुश्रूषायां फलाधिक्यमाह मनुः,—

विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम् ।
शुश्रूषैव हि शूद्रस्य धर्म्मो वै श्रेयसः परः ॥
शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहङ्कृतः ।
ब्राह्मणाद्याश्रयो नित्यमुत्कर्षं जातितो व्रजेत् ॥

आपस्तम्बः,—

शुश्रूषा शूद्रस्येतरेषां वर्णानां पूर्व्वस्मिन् पूर्व्वस्मिन् निःश्रेयसं भूयः।

निःश्रेयसं धर्म्मः, भूयः प्रचुरतरम्।

बृहस्पतिः,—

शौचं ब्राह्मणशुश्रूषा सत्यमक्रोध एव च।
शूद्रकर्म्म तथा मन्त्रो नमस्कारोऽस्य देशितः॥

याज्ञवल्क्यः,—

भार्य्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियापरः।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्॥

गोतमः,—

अनुमतोऽस्य नमस्कारो मन्त्रः।

भविष्ये,—

ब्राह्मणादिषु वर्णेषु त्रिषु वेदाः प्रतिष्ठिताः।
मन्वादीनि च शास्त्राणि तथाङ्गानि समन्ततः॥

तथा पुराणमधिकृत्य तत्रैव।

अध्येतव्यं नचान्येन ब्राह्मणं क्षत्रियं विना।
श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन॥
श्रौतं स्मार्त्तं हि वै धर्म्मं प्रोक्तमस्मिन्नृपोत्तम।
तस्मात् शूद्रै र्विना विप्रं न श्रोतव्यं कदाचन॥ इति।

इदं विप्रं विना विप्रद्वारैव श्रोतव्यं न तु क्षत्रियद्वारेत्यर्थः।

नरसिंहपुराणे,—

अयाचितप्रदाता स्यात् कृषिं वृत्त्यर्थमाश्रयेत्।
पुराणं शृणुयाद्विप्राक्षरसिंहस्य पूजयेत्॥

आगमोक्तमन्त्रजपस्तु कर्त्तव्य एव तत्र विशेषविधानात्। द्विजशुश्रूषया कुटुम्बभरणाशक्तावाह मनुः,—

अशक्नुवंस्तु शुश्रूषां शूद्रः कर्त्तुं द्विजन्मनाम्।
पुत्रदारात्ययं प्राप्तो जीवेत्तु कारुकर्म्मभिः॥
यैः कर्म्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः।
तानि कारुककर्म्माणि शिल्पानि विविधानि च॥

आचरेदिति शेषः।

वृहस्पतिः,—

शूद्रस्य द्विजशुश्रूषा सर्व्वशिल्पानि चाप्यथ।
विक्रयः सर्व्वपण्यानां शूद्रधर्म्म उदाहृतः॥
धर्म्मार्थमुभयार्थं वा ब्राह्मणानेव धारयेत्।
जातब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता॥

उभयार्थं धर्म्मार्थं जीवनार्थञ्चेत्यर्थः। ब्राह्मणशुश्रूषुरयमिति जातब्राह्मणशब्दस्येत्यर्थः सा जातब्राह्मणशब्दता।

कालिकापुराणे,—

विक्रयं सर्व्वपण्यानां कुर्व्वन् शूद्रो न दोषभाक्।
मधु चर्म्म सुरां लाक्षां त्यक्त्वा मांसञ्च पञ्चमम्॥

देवलः,—

लाक्षामञ्जिष्ठमांसानि मधुक्षीरविषाणि च।
आजीवन् वृषलोऽप्यार्य्यो कर्म्मणा तेन वर्ज्जितः॥

धनसञ्चयस्तु शूद्रेण न कार्य्यः ;

मनुः,—

शक्तेनापि हि शूद्रेण न कार्य्यो धनसञ्चयः।
शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते॥

ब्राह्मणार्थं धनसञ्चये तु न दोषः।

यथा त्रैवर्णिकं प्रकृत्य गोतमः,—

तदर्थोऽस्य सञ्चय इति।

मनुः,—

न शूद्राय मतिं दद्यात् नोच्छिष्टं न हविष्कृतम्।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्॥

मतिरात्मज्ञानं उच्छिष्टं भुक्तावशिष्टं पात्रे यन्मुक्तम्।

तथा हारीतः,—

स्नात्वा भुक्त्वा च उच्छिष्टं वृषलाय प्रयच्छति।
स गच्छन्नरकं घोरं तिर्य्यग्योनौ च जायते॥

स्नातावशिष्टं उद्वर्त्तनद्रव्यं भुक्तावशिष्टं पात्रस्थमन्नादि चेत्यर्थः। निषेधोऽयं शुश्रूषापरेतरशूद्रविषयः। शुश्रूषापराणान्तु पात्रस्थोच्छिष्टं दातव्यमित्याह मनुः,—

उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च।
पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः॥

पुलाकास्तुच्छधान्यानि परिच्छदाच्छयासनादयः। अत्रोपभुक्तजीर्णवस्त्रादिदानसाहचर्य्यात् पात्रे भुक्तावशिष्टान्नं कथत्यशूद्रायैव दातव्यमिति प्रतीयते।

प्राग्रुक्तमनुपाराशरवचनयोरेकवाक्यतया पाचत्यक्तान्नदाननिषेधे प्राप्ते सभृत्यशूद्रगोचरतया उच्छिष्टमन्नं दातव्यमित्यनेन मनुना प्रतिप्रसवाच्च ।

एतेन—नोच्छिष्टं न हविष्कृतमिति स्थालीस्थावशिष्टनिषेधोऽसच्छूद्रविषयः, उच्छिष्टमन्नं दातव्यमिति विधिस्तु सच्छूद्रविषयः, स च स्थालीस्थावशिष्टान्नस्यैव, न तु पाचे त्यक्तस्य। सच्छूद्रस्य पञ्चयज्ञविधानात्। पाचत्यक्तस्य च पञ्चयज्ञायोग्यत्वात्। ततश्च सिद्धान्नेनैव सच्छूद्राणां पञ्चयज्ञानुष्ठानमित्याधुनिकैरुक्तं तन्निरस्तं।

वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्म्मिणौ ।

भोजयेत् सह भृत्यैस्तावानृशंस्यं प्रयोजयन् ॥

इति मनुवचने सामान्यतः शूद्रमात्रस्यैव भृत्येन सह स्थालीस्थान्नदानविधानाच्च । कुटुम्बे गृहे इत्यर्थः ।

किञ्च,—

आमश्राद्धं द्विजैः कार्य्यं शूद्रेण तु सदैव हि ।

इति प्रचेतोवचनात् ।

आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते ।

इति देवलवचनाच्च ।

पक्वान्नेन कर्म्मनिषेधात्तेन पञ्चयज्ञानुष्ठानमुभयलोकविरुद्धमेव । नचान्यथानुपपत्त्या सिद्धार्थे विधिरिति वाच्यम् । पञ्चयज्ञार्थं स्वामिषकाद्यात् पृथगामान्नपचनसम्भवात् "पुलाकास्यैव धान्यानामिति मनुवचने धान्यदानविधानादन्यथोपपत्तेश्च अन्यथा अमावस्याश्राद्धादिकमपि विध्यर्थेन प्रसज्येत ।

एवञ्च सामान्यतः पाचकशूद्रोच्छिष्टदाननिषेधे स इत्यविषयः प्रतिप्रसवः। न तु सर्व्वदैव तच्छोच्छिष्टदानमिति नियमः। हवि-ष्कृतमिति यज्ञसम्भृतं हविरित्यर्थः। धर्म्मो वर्णाश्रमाचारः, व्रतं चान्द्रायणादिकम्। व्रतञ्च साक्षान्नोपदिशेत् परम्परयाऽनुपदेशः कार्य्य एव यथा।

तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन।

इति प्रागुक्तभविष्यवचनम्।

तथाचाङ्गिराः,—

न्यायतो मार्गमाणस्य चक्षियादेः प्रमादतः।

अन्तरा ब्राह्मणं कृत्वा व्रतमेषां समादिशेत्॥

मनुः,—

शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम्।

वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टञ्च भोजनम्॥

मासिकं वपनं प्रतिमासं मुण्डनं, केशरचा न कार्य्येति तात्प-र्य्यम्। अथवा वपनं पिण्डनिर्वापोऽमावस्याश्राद्धमिति यावत्।

व्यासः—

सत्यं दमस्तथादानमहिंसेन्द्रियनिग्रहः।

दृश्यते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः॥

शूद्रे चैवं भवेद्वृत्तं ब्राह्मणे न च विद्यते।

शूद्रोऽपि विप्रो मन्तव्यः शूद्रो विप्रोऽपि निष्क्रियः॥

उपनयनवर्ज्जं निषेकाद्याः सर्व्वा एव क्रियाः शूद्राणाममन्त्रकं कार्य्याः।

यथा याज्ञवल्क्यः,—

विप्रक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥

तेषां द्विजानां न च तेषां मन्त्रत इत्यभिधानाच्छूद्रस्यामन्त्रिकाः क्रियाः कार्य्या एव अन्यथा वैयर्थ्यात् ।

तथा मनुः,—

निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित् ॥

अत्रापि मन्त्रैरित्यनेन शूद्रस्यामन्त्रको विधिरस्तीत्यायातम् ।

तथा भविष्ये,—

शूद्रोऽप्येवंविधः कार्य्यो विना मन्त्रेण संस्कृतः ।

उपनयनन्तु सावित्रीग्रहणरूपं वेदपाठनिषेधात् स्वत एव व्यावृत्तम् ।

तत्र विवाहस्त्वासुरो मुख्यः ।

आसुरं वैश्यशूद्रयोरिति मनुवचनात् । गान्धर्व्वोऽनुकल्पः ।

यथा नारदः,—

साधारणः स्याद्गान्धर्व्वः ।

आसुरगान्धर्व्वावुक्तौ याज्ञवल्क्ये,—

आसुरो द्रविणादानात् गान्धर्व्वः समयान्मिथः ।

यद्यपि,—

शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः ।
आत्मविक्रयिणः पापा महाकिल्बिषकारिणः ॥

पतन्ति नरके घोरे घ्नन्ति चासप्तमं कुलम्।

इति काश्यपवचनात् सामान्यतः सर्व्ववर्णगोचरो निषेधः तथापि शूद्रस्यासुरविधानादाचरत्वसम्पादनाय किञ्चिदनियतधनग्रहणं कार्य्यं न तु प्रतिनियतशुल्कं शूल्यर्थमादद्यात् विक्रयस्यात्यन्तनिषिद्धत्वात् अतएव लोभमोहिता इत्युक्तम्।

केचित्तु— वैश्यशूद्रविषय आसुरविवाहो निन्दाविधानबलादित्याहुः। तन्न, उक्तप्रकारेणासुरविधेरन्यथोपपत्तौ सामान्यतो विक्रयनिषेधस्य सङ्कोचे प्रमाणाभावात्।

अतएवादित्यपुराणे—आसुरगान्धर्व्वयोरपि विवाहयोः फलमुक्तं यथा,—

गान्धर्व्वेण विवाहेन यस्तु कन्यां प्रयच्छति।
गन्धर्व्वलोकं व्रजति गन्धर्व्वैः पूज्यते च सः॥
शुल्केन दद्याद्यः कन्यां वराय सदृशाय च।
किन्नरैः सह गीयेत गान्धर्व्वं लोकमेति च॥

अत्र दद्यादित्यनेन किञ्चिदनियतधनग्रहणं प्रतिपादितं प्रतिनियतधनग्रहणस्य विक्रयत्वात् दद्यादित्यनुपपत्तेः, वराय सदृशाय सजातीयायेत्यर्थः। अतएव वचनात् शूद्रस्य प्रतिग्रहनिषेधेऽपि कन्याप्रतिग्रहविधिरप्यायातः।

शूद्रेण तु यजुर्वेदविधिना सर्व्वं कार्य्यम्।

आर्पक्रमेण सर्व्वे तु शूद्रा वाजसनेयिनः।
तस्माच्छूद्रः स्वकं कर्म्म यजुर्वेदेन कारयेत्॥

इति कूर्म्मपुराणवचनात्।

## अथ विधवाधर्म्मः।

स्कन्दपुराणे काशीखण्डे,—

विधवाकवरीबन्धो भर्त्तुर्बन्धाय जायते।
शिरसो वपनं तस्मात् कार्य्यं विधवया सदा॥
एकाहारः सदा कार्य्यो न द्वितीयः कदाचन।
त्रिरात्रं पञ्चरात्रं वा पक्षव्रतमथापि वा॥
यवान्नैर्वा फलाहारैः शाकाहारैः पयोव्रतैः॥
प्राणयात्रां प्रकुर्व्वीत यावत् प्राणः स्वयं व्रजेत्।
पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम्॥
तस्मात् भूशयनं कार्य्यं पतिसौख्यसमीहया।
नैवाङ्गोद्वर्त्तनं कार्य्यं स्त्रिया विधवया क्वचित्॥
गन्धद्रव्यस्य सम्भोगो न च कार्य्यस्तया पुनः।
तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः॥
तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्व्वकम्।
विष्णोस्तु पूजनं कार्य्यं पतिबुद्ध्या नचान्यथा॥
यद्यदिष्टतमं लोके यच्च पत्युः प्रियं भवेत्।
तत्तद्गुणवते देयं पतिप्रीणनकाम्यया।
वैशाखे कार्त्तिके माघे विशेषनियमञ्चरेत्।
स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं पुनः।

मनुः,—

कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य च॥

आवीतामरणात् चान्ता नियता ब्रह्मचारिणी।
मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता॥
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः।

## अथ पतिव्रताधर्म्मः।

मनुः,—

बालया वा युवत्या वा वृद्धया वापि योषिता।
न स्वातन्त्र्येण कर्त्तव्यं किञ्चित्कार्य्यं गृहेष्वपि॥
सदा प्रहृष्टया भाव्यं गृहकार्य्ये च दक्षया।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया॥

उपस्करो गृहोपकरणम्।

सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च।
यस्मिन्नेतत् कुले नित्यं कल्याणं तत्र वै ध्रुवम्॥
पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः॥

काशीखण्डे,—

पाणिपीडिताः।
तासामनुज्ञा तु कल्याणमकल्याणमतोऽन्यथा॥
बहुदारः पुमान् यस्तु रागादेकां भजेत् स्त्रियम्।
स पापभाक् स्त्रीजितश्च तत्त्वाशौचं सदातनम्॥

तथा,—

सेवेत भर्त्तुरुच्छिष्टं मिष्टमन्नफलादिकम्।
महाप्रसाद इत्युक्ता पतिदत्तं प्रतीच्छति॥

स्त्रीधर्मिणी त्रिरात्रन्तु स्वमुखं नैव दर्शयेत्।
स्ववाक्यं श्रावयेन्नापि यावत् स्नाता न वै भवेत्॥
सुस्नाता भर्त्तृवदनमीक्षेतान्यस्य न क्वचित्।

दौर्घ्येऽपि च पतिव्रता

पतिं नास्तीति न ब्रूयादायासार्थं न योजयेत्।

आयासार्थं नेति, घृतादिकं द्रष्टुं न तु नास्तीति ब्रूयात्

तथा,—

तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत्।
शङ्करादपि विष्णोर्वा पतिरेकोऽधिकः स्त्रियाः॥
व्रतोपवासनियमान् पतिमुल्लङ्घ्य या चरेत्।
आयुः सा हरते पत्युर्म्मृता निरयमृच्छति॥

पतिमुल्लङ्घ्य व्रताद्याचरणे दोष इत्यर्थः।

तथा,—

उक्ता प्रत्युत्तरं दद्यात् या नारी क्रोधतत्परा।
सरमा जायते ग्रामे शृगाली वा महावने॥

सरमा शु

तथा,—

धन्या सा जननी लोके धन्योऽथ जनकः पुनः।
धन्यः स च पतिः श्रीमान् यस्य गेहे पतिव्रता॥
पितृवंश्या मातृवंश्या पतिवंश्यास्त्रयः स्त्रियाः।
पतिव्रतायाः पुण्येन स्वर्गसौख्यादिभागिनः॥

याज्ञवल्क्यः,—